फलं श्रूयत इति वक्तुं वाक्यद्वयमाह ॥ **सर्वाँल्लोकानिति** ॥ १० ॥ समाधानमाह ॥ **अक्षय्यमिति** ॥ "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्भवति" इत्यत्र "सर्वाँल्लोकान्पशुबन्धयाज्यभिजयति" इत्यत्रापि यदक्षय्यशब्देन सर्वलोकशब्देनोच्यते तदात्मसुखमेव वाक्यशेषोक्तम् ॥ तदेव पञ्चानां नित्यानामेकं फलं भवति ॥ इतोऽपि हेतोः स्वर्गशब्देनात्मसुखम् । पञ्चात्मकस्य भगवत एकत्वादन्यथा लोकपक्षे नैतदुपपद्यत इत्यर्थः ॥ उपसंहरति ॥ **नित्ये स्वर्गः फलमिति** ॥ बालाबालभेदेनोभयमपि॥ अन्यत्पश्वादिकं न नित्यस्य फलं विकृतौ तत्फलम् ॥ ११ ॥ विकृतस्य कथं फलसाधकत्वमित्याशंक्याह ॥ **रूपं तदेव विकृतेरिति** ॥ तदेव भगवद्रूपं विकृतेरपि परं साधनं किञ्चिदन्यथा भवति ॥ तेन विकृतत्वं स च विकारो वेदोक्त इति सफलः ॥ तर्हि नित्यमेव फलं कुतो न साधयति तत्राह ॥ विकृतादिति ॥ १२ ॥

**आवरणभंगः ।**

स्वर्गविषये पुनः किञ्चिदाशङ्क्यन्ते ॥ ॥ पञ्चेत्यादि इति वक्तुमिति ॥ अनेन हेतुना वाक्यशेषस्य निर्णायकत्वंवक्तुं ॥ तथाच निःसन्दिग्धेन संदिग्धनिर्णयः ॥ वाक्यशेषोऽपि स्वर्गशब्दमात्रयुक्तत्वेनात्मसुखस्य न विनिगमकः। अनुपपत्त्यन्तरस्य विद्यमानत्वादतो न तेन निर्णय इत्यर्थः ॥ वाक्यद्वयं चैतदापस्तंबकल्पस्थम् ॥ तथाच चतुर्थे लोकपदात्पञ्चमे चाक्षय्यपदेन ध्वंसप्रतियोगित्वनिवारणाद्वाक्यशेषोक्तसुखत्वं लोकनिष्ठसुखस्य वक्तव्यं तावता प्रसिद्धिरपि न विरोत्स्यत इति भावः ॥ १० ॥ सुखमेवेत्येवकारेण लोकसुखव्यवच्छेदः ॥ तत्र युक्ति माहुः ॥ तदेवेत्यादि ॥ ॥ पञ्चकर्तुरेकंफलं वक्तव्यम् ॥ नानात्वे कस्य फलम्पूर्वं कस्य पश्चादिति निर्णेतुमशक्यत्वात् । नच यज्ञक्रमान्निर्णयः "अत्युग्रपुण्यपापानामिहैव फलमश्नुते" इति न्यायेन पूर्वं महायागफलस्यापि संभवदुक्तिमात्त्वादग्निष्टोमकत्वात् । नच तस्यैवेत्यपि "प्रजापतिर्यज्ञानसृजत" इति श्रुतौ यावदग्निहोत्रमा इति तुल्यत्वोक्तेः पौष्कल्यस्य तदप्रयोजकत्वात् ॥ न च यत्पश्चात्तस्यैवेत्यपि । नियामकाभावात् ॥ अत एकमेव निश्चेयं । त्पञ्चात्मसुखमेवेति तत्रापि हेतुः ॥ पंचात्मकेत्यादि ॥ ॥ स एव यज्ञः पंचविधोऽग्निहोत्रं दर्शपूर्णमासाविति श्रुतावे-

कत्वेनैव निरूपणादित्यर्थः॥नन्वकएव लोकस्तादृशः स्वीकार्य इति शंकायामाहुः ॥ अन्यथेत्यादि ॥ ॥ एतस्यै व विवरणं ॥ ॥ लोकेत्यादि ॥ सर्वान् लोका-नित्यत्र सर्वपदस्यासङ्कुचितवृत्तिकत्वे लोकान्तरस्यापि प्राप्तेः पंचकर्तुः स्वर्गो न नियतः स्यात् ॥ स्वर्ग एव संकोचे उक्तरीत्या क्रमविरोधः । एकोत्तरं द्वि-तीयभवनादक्षय्यपदविरोधः ॥ यजमानार्थं तल्लोकागमनाभावेनाभिलाषोपनीं-तत्वविरोधश्च । अतः फलस्यैक्यं वाच्यम् ॥ तदात्मसुखानङ्गीकारेनोपपद्यत इत्य-र्थः ॥ नच वाक्यविरोधः । विश्वेदेवा इतिवत्पदद्वयेन नानाविधात्मसुखानाङ्क-थनेनाविरोधात् ॥ तस्मादात्मसुखमेव वाक्यशेषार्थ इति निश्चयः ॥ अतएवार्थवा-दाधिकरणे "सर्वत्वमाधिकारिकम्" इतिसूत्रे यथाधिकारं सर्वत्वं ग्राह्यमिति बोधि-तम् ॥ तेन पूर्णाहुत्या सर्वान्कामानाप्नोतीत्यत्र यथा तदधिकारापेक्षं तथात्रैतदधि-कारापेक्षमिति निष्कामाधिकारे आत्मसुखानुकूलं सकामाधिकारे च सङ्कुचितं तद्ग्राह्यमतो न तद्विरोधः ॥ भाष्यकारमतन्त्वत्र नादरणीयम् ॥ तदस्माभिः पूर्व-प्रकरण एवोपपादितमिति न दोषः । तर्हि प्रसिद्धेः का गतिः ॥ इन्द्रादीनाञ्च कथं लोकप्राप्तिरित्यत आहुः ॥ ॥ बालेत्यादि ॥ ॥ नेति ॥ ॥ प्रधानवाक्ये ऽनुक्तत्वात्तथेत्यर्थः ॥ ११ ॥ एवं प्रकृतिरूपं विचारितम् ॥ अतःपरं विकृतिरूपं विचारयितुं फलकथनमुखेनोपाक्षिपन्ति ॥ ॥ विकृताविति ॥ ॥ तदेवेति ॥ ॥ अग्निहोत्राद्यात्मकम् ॥ ॥ तर्हीति ॥ ॥ अवेदोक्तत्वे यागत्वे च तुल्य इत्यर्थः । मूले किञ्चित्पदं विकृतविशेषणं किञ्चिद्विकृतादित्यर्थः ॥ १२ ॥

व्रजभाषाटीका ।

प्रकृतिरूप जे नित्य पांच कर्म बताये उनमें तीन कर्मको स्वर्ग फल लिख्योहै, चातुर्मास्यको अक्षयसुकृत तथा पशुबन्धयज्ञको सर्वलोकजय फल लिख्योहै । अब यहां वाक्यशेषकरिकै पांचों नित्यकर्मनको आत्मसुखरूप एकही फल मानैं तबतो एकवा-क्यता होयसकै है, जो लोकान्तरवाचक स्वर्गादिशब्दनकूं मानें तो न्यारे २ फल होयवेसों एकवाक्यता नाहिं होयसकेगी, याकारणसोंभी स्वर्गशब्दसों आत्मसुखकोही ग्रहण करनो ॥ १० ॥ उपसंहार करें हैं नित्ययज्ञको स्वर्ग फल है । बाल जो ब्रह्मज्ञानरहित आधि-

भौतिक यज्ञ करवेवालो है वाकूं इन्द्रादिलोकरूप स्वर्ग मिले है तथा आध्यात्मिकयज्ञ करवेवालो है वाकों आत्मसुखरूप स्वर्ग मिले है । अबाल जो ब्रह्मज्ञानी आधिदैविकयज्ञ करवेवारो है वाकूं परब्रह्मपुरषो [illegible] प्ति होयहै। पशुधनादिकनकी प्राप्ति होनोंनो नित्ययज्ञको फल नहीं है [illegible] ज्ञनको फल है तहाँ विकृति-यज्ञ कैसें फल देतेहोंगे यह शङ्का नहीं करनी ॥११॥ रूपन्तदेवेति । विकृतिरूप यज्ञभी भगवान्कोही स्वरूप है तासों फल देवेमें कछु आश्चर्य नहिं, प्रकृतियज्ञ जे अग्निहोत्रादिक हैं वेही साधनके थोडे फर्कसों विकृतिरूप होजावें हैं। जैसें प्रकृतियज्ञमें जो जलकूं चमसक-रके लावनों पशुकी कामना होय तो दुग्धदोहवेके पात्रसों जल लावै प्रतिष्ठाकी कामना होय तो मिट्टीके पात्रमें जल लावै और सब कर्म वैसोही करें इत्यादि थोडेसे विकारसों विकृतिरूप होजावें है परन्तु वे विकार वेदोक्त है।तासों फल है। वेदमें तो नहिं लिखोहोय स्वेच्छाकरिकेंही चमससों जल नहिंलावें और पीतलके पात्र वगैरे-सों जल लेआवै तौ प्रकृतिरूप तथा विकृतिरूप इन दोनोंमेंसों एकरूपभी नहिंहोवै परिश्रम निष्फल होजावै. और विकृतिया-गसों विकृतही फल होवेहै नित्यफल नहिं होवे है ॥ १२ ॥

नित्यकर्मप्रसिद्ध्यर्थं काम्यादीनां विधिः श्रुतौ ॥ पशुपुत्राद्यभावेपि न नित्यङ्कर्म सिध्यति ॥१३॥ अङ्गेऽपि तत्फलं नित्ये ज्ञानादिभिरुदीर्यते ॥ यथाकथञ्चिन्नित्यस्य सिद्धिर्वेदेन बोध्यते ॥ १४ ॥ ध्यानादिभिर्यथामूर्तेरभिव्यक्तिः परात्मनः ॥ आधानादिक्रियातोभिव्यक्तिर्यज्ञस्वरूपिणः ॥ १५ ॥

तत्त्वदीपप्रकाशः ।

ननु वेदे किमिति विकृतं विकारफलं चोक्तमित्याशंक्याह ॥ नित्यकर्मप्रसिध्यर्थमिति॥ तत्र साधकमाह॥ पशुपुत्राद्यभाव इति ॥१३॥ नन्वेवमेव श्रुत्यभिप्राय इति किम्प्रमाणन्तत्राह ॥ अङ्गेपीति ॥ यतो वेदे नित्याङ्गेषु अपःप्रणयनादिष्वपि पश्वादिकम्फलमुदीर्यते ॥ नहि एकस्य कर्मणः फलद्वयं सम्भवति ॥ अत एकस्यामावृत्तौ यजमानकामनया साङ्गस्यैव तस्य पश्वादिफलम् ॥ तथा ज्ञानादिभिरपि फलमुदीर्यते ॥ "य एवं वेद स पशुमान् भवति" इति ॥ तत्रापि कामनायामेव भवतीति मन्तव्यं ॥ तच्च ज्ञानं कर्मांगम् ॥ ननु कथमेवं वेदस्याभिप्रायोध्यवसीयते स्वतन्त्रतयैव पश्वादीनाम्फलतास्त्विति चेत्तत्राह ॥ यथाकथंचिदिति ॥ नित्यस्याविकृतस्य भगवतो रूपस्य सिद्धिर्निष्पत्तिर्वेदेन बोध्यते ॥ १४ ॥ ननु कृतिसाध्यो यागादिः कथन्नित्य इति चेत्तत्राह ॥ ध्यानादिभिरिति ॥ यथा ध्यानधारणादिभिर्भगवन्मूर्तेरानन्दरूपस्याभिव्यक्तिस्तथा आधानादिसोमान्तक्रियाभिर्वेदबोधितदेहचेष्टारूपाभिध्यानादिसहिताभिर्यज्ञरूपिणोऽपि भगवतोभिव्यक्तिरित्यर्थः ॥ १५ ॥

आवरणभंगः ।

॥ पशुपुत्राद्यभाव इति ॥ ॥ फलाकांक्षाविरहस्य स्वर्गकामनायाश्च सर्वेषामभावाद्यदि कामितफलार्थं साधनं वेदेन नोच्येत ततः फलञ्च यदि न स्यात्तदा वेदे अनाश्वासप्रसङ्गान्नित्ये प्रवृत्तिः कुण्ठिता स्यादतस्तथेत्यर्थः ॥ हविःसहायादिसापेक्षत्वाद्यथाश्रुतो वार्थः ॥ १३ ॥ ॥ अङ्गेपीति ॥ ॥ मूलस्थोऽपिशब्दो ज्ञानादिभिरित्यनेनाप्यन्वेति ॥ ॥ उदीर्यत इति ॥ ॥ "चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्य मृण्मयेन प्रतिष्ठाकामस्य कांस्येन ब्रह्मवर्चसकामस्य" इत्यादिषु वाक्येषूच्यते ॥ तथाच विकृतौ यत्प्रधानफलन्तन्नित्ये अङ्गफलत्वेनोच्यते तेन विकृतापेक्षया प्रकृतस्याधिक्यं बोध्यते ततश्च विकृतेस्तादर्थ्यं ज्ञायते॥ यथा अर्थवादस्य ॥ अतो न विकृतेर्नित्यफलसाधकत्वमित्यर्थः ॥ ननु चतुर्थस्य तृतीये विचारितं । द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् । "यस्य

पर्णमयी जुहूर्भवति न स पाप श्लोकं शृणोति यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते। यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञाय क्रियते वर्म यजमानाय " इत्यादिषु द्रव्यसंस्कारकर्मसु या फलश्रुतिः सार्थवादः। एतेषां क्रत्वर्थत्वात् तन्निवर्तनातिरिक्तस्य कामादिपदाभावेन कल्पयितुमशक्यत्वात् प्रकृते वर्तमानप्रयोगाच्च। क्रतुसम्बन्धश्चैषां वाक्यादिगम्यः। नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यादित्यधिकरणे अपःप्रणयनादिवाक्यान्युदाहृत्य तेषां पात्राणां नैमित्तिककाम्याङ्गत्वेव व्यवस्थापितेति जुह्वादिषु फलाभावात्तादृशापःप्रणयनादिषु नित्याङ्गत्वाभावाच्च कथमेवमुच्यत इति चेन्मैवं। एतस्य फलवादस्य गुणवादत्वेन जुह्वादिप्राशस्त्ये गौणत्वेऽपि तद्विशिष्टयागगुणबोधने बाधकाभावात्। असद्गुणस्य सद्गुणबोधने तद्भागस्य प्रताणरत्वापत्तेर्विध्यंशेप्युपप्लवाच्च। अतो यागस्यैव तत्फलमित्यदोषः॥ एवमग्निहोत्रादीनां नित्यत्वेऽपि " अग्निहोत्रं जुहुयात्स्वर्गकामः प्रजाकामः पशुकामः सर्वेभ्यो वै कामेभ्यो दर्शपूर्णमासौ " इत्यादिवाक्यान्तरेण काम्यत्वस्यापि श्रावणान्नित्यानामेव कामनामात्रेण काम्यत्वमिति स्वरूपभेदाभावान्नित्याङ्गत्वमप्यपःप्रणयनादीनामदुष्टमेवेत्येवमुच्यत इति गृहाण॥ नन्वेवंसति काम्यविधिवैय्यर्थ्यापत्तिः। नित्याङ्गादिभिरेव तत्फलसिद्धेस्तयैव नित्यप्राशस्त्यस्यापि सिद्धेश्चेति चेत्तत्राहुः॥ ॥ नहीत्यादि॥ ॥ द्वितीयस्य चतुर्थे यावज्जीवपादे चिन्तितम्। "अग्निहोत्रं जुहुयात्स्वर्गकामः प्रजाकामः पशुकामः" इति। यावज्जीवमग्निहोत्रं जुहोतीतिच। एवं " दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत " इति काम्यं प्रयोगं विधायाम्नायते यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति। तत्र किं काम्यो नित्यश्च प्रयोगो भिन्न उत नित्यकाम्ये कर्मणी भिन्ने अथवा काम्यस्यैवाभ्यासो विधीयत इति संशयः। यावज्जीवशब्दस्य मरणावधिककालवाचकत्वात्। तस्यच प्रकृते काम्याग्निहोत्रादौ पूर्वमप्राप्तत्वाज्जुहोति यजेतेत्यनेनानूदिते तस्मिन् कर्मणि स कालो विधीयते॥ नच सकृदनुष्ठानेनैव फलसिद्धेरेतदङ्गीकारो व्यर्थ इति वाच्यम्। तस्य काम्यवाक्येनैव सिद्धत्वादत्रैतत्कालानङ्गीकारे विधिवैयर्थ्यप्रसङ्गात्। अग्निहोत्रवाक्ये प्रकरणभेदेऽपि दर्शपूर्णमासवाक्ये तदभावेन कर्मभेदाङ्गीकारे प्रकरणबाधापत्तेश्च। अतः काम्यकर्मणोऽभ्यासासिद्धये तत्रायङ्कालरूपधर्मविधिरिति पूर्वपक्षः॥ सिद्धान्तस्तु जीवनकार्त्स्न्यवाचकस्य यावज्जीवपदस्य न कालवाचकत्वमपि तु लक्षकत्वम्। जुहोतियजत्योरप्यभ्यासलक्षकत्वमेव नतु वाचकत्वं। जीवनश्च पुरुषधर्मो न कर्मतया विधातुं शक्यः। प्रकरणवशेन श्रुतेर्लक्षणाप्यन्याय्या। अतोऽत्र जीवनं पुरुषधर्मं निमित्तीकृत्य प्रयोगभेदएव विधीयते कर्मभेदकानां शब्दान्तरादीनामभावात्॥ निमित्तविशेषसद्भावेनाविशेषःपुनः। श्रुतेरभाव-

नाभावस्यापि तथात्वाभावात् ॥ अतोऽत्र जीवनस्य निमित्तत्वेन तस्मिन् सति नैमित्तिकत्यागायोगात्तस्य नित्यत्वमर्थसिद्धम् ॥ नच प्रयोगनैरन्तर्यापत्तिः ॥ सायं-प्रातर्वाक्यस्य अमावास्यायाममावास्यायां यजेतेत्यादेश्च नियामकत्वात् ॥ तस्मान्नित्यकाम्यप्रयोगौ भिन्नाविति । तदेतदुक्तम् ॥ नहीत्यादिफलमित्यन्तेन ॥ उक्तं न्यायं ज्ञानफलेऽपि स्मारयन्ति ॥ ॥ तत्रेत्यादि ॥ ॥ ज्ञाने ब्रह्मज्ञानत्वभ्र-मवारणाय तत्स्वरूपं परिच्छिन्दन्ति ॥ ॥ कर्माङ्गमिति ॥ ॥ जैमिनीयमतं निरसितुं तन्मतेनाशङ्कन्ते ॥ ॥ नन्वित्यादि ॥ ॥ अस्त्विति ॥ ॥ विधिवाक्ये दर्शनादस्त्वित्यर्थः ॥ ॥ यथाकथञ्चिदित्यादि ॥ ॥तथाच काम्यफलानां नित्याङ्गेषु श्रावणान्नित्ये यावज्जीवाधिकारस्याकरणे प्रत्यवायस्य च श्रावणान्नित्य एव श्रुते-स्तात्पर्यं ज्ञायते । तत्रच स्वर्ग एवात्मसुखात्मा फलत्वेन प्रतिपाद्यते न पश्वादि-कमतो न तेषां स्वतन्त्रतया फलत्वमित्यर्थः ॥ १४ ॥ यज्ञेषूक्तस्य भगवद्रूपत्वस्य दृढीकरणाय नित्यत्वं परिच्छेतुं शङ्कन्ते ॥ ॥ ननु कृतीत्यादि ॥ ॥ यथेत्यादि ॥ ॥ तथाच तेषु यावज्जीवाधिकारकत्वादिरूपमेव न नित्यत्वङ्किन्तु त्रैकालिकाबाधवि-षयत्वरूपमतो यज्ञेषु भगवद्रूपत्वं निराबाधम् । मुख्येष्वधिकारिषु तथाभिव्यज्यत इति भावः ॥ अत्र ध्यानादिभिरित्यर्द्धेन दृष्टान्तमुखेनोत्तरकाण्डीयसाधनं व्यापा-रश्चोक्तः ॥ फलन्तु ज्ञानिनस्तदभिव्यक्तावित्यनेनैवोक्तम् ॥ १५ ॥

ब्रजभाषाटीका ।

शङ्का—वेदमें पशुपुत्रादिक तुच्छफल देवेवारे विकृतिकर्मनके क्यों वर्णन कियो ताको उत्तर देहैं ॥ नित्यकर्मेति ॥पशुपुत्रादिक न-हिंहोय तो नित्य अग्निहोत्रादि कर्म नाहिं बनसकें तथा पशुपुत्रादिक यालोकके फल नहिं सिद्धहोंय तो परलोकके विनादेखें स्वर्गादि-फलमेंसों विश्वास जातोरहैगो तो कोई वेदके कर्ममें प्रवृत्त नाहिंहोय-गो तासों पशुपुत्रादिक विकृतफलभी वेदसों सिद्ध होवे है ॥१३॥ ऐसोही श्रुतिको अभिप्राय है तामें कहा प्रमाण है तहाँ कहेहैं ऐसो वेदको अभिप्राय नाहिं होयतो नित्यकर्मके अङ्ग जे अपःप्र-णयनादिक हैं उनके पशुप्रतिष्ठा आदि फल क्यों बतावते क्योंकी एककर्मके दो फल नाहिंहोयसकें हैं तासों साङ्गनित्यकर्मकीभी यज-

मान जो पशुपुत्रादिकी कामनासों एक आवृत्ति करें तो वोभी फल सिद्धहोय ॥ ऐसेंही कामनाकरके ज्ञानकूं सिद्धकरे तो ज्ञानसोंभी पशुआदिकी प्राप्ति होय " य एवं वेद पशुमान् भवति " परन्तु कामनार्थ होयतो होय वो ज्ञान कर्मको अङ्ग है विकृतियाग प्रकृतियागके फलकूं नहिं सिद्धकरसकेहै और प्रकृतियागके तो अङ्गभी विकृतियागके मुख्यफल देवेवारे कहेहैं येही प्रकृतिको आधिक्य तासों स्वतन्त्रतासों पशुपुत्रादिक फल नहिंहै किन्तु जैसे बने तैसे नित्य अविकृत अग्निहोत्रादिक यज्ञात्मक भगवान्की सिद्धिही वेदनें जताई है ॥ १४ ॥ शङ्का । यज्ञादिक तो हमारी कृतिसों सिद्ध होयहैं अर्थात् हमारे बनाये बने हैं ये नित्य कैसें होयसकें ? उत्तर—ध्यानादिभिरिति ॥ जैसे ध्यानधारणादिकसों आनन्दरूपभगवान् मूर्तिमें प्रगटहोजावें हैं तैसें अग्निस्थापनसों आदिलेके यज्ञ पूर्ण होय जहाँताईकी ध्यानादिकनकरकें सहित जे वेदकी बताईभई देहचेष्टारूप क्रिया तिनकरकें यज्ञरूपी भगवान् प्रकट होवेहै अर्थात् नित्य सर्वदा विद्यमान जो यज्ञभगवान् हैं उनको वैदिकक्रियाकरके प्रकटहोनेमात्रही है उनकी उत्पत्ति नहिं है ऐसें व्याख्यानकरवेको अभिप्राय वर्णनकरें हैं ॥ १५ ॥

**दुःखाभावः सुखं चैव पुरुषार्थद्वयं मतम् ॥ मोक्षः कामस्तयोरङ्गं धर्मो ह्यर्थेन साधितः ॥१६॥**

तत्त्वदीपप्रकाशः ।

नन्वेवमर्थव्याख्याने कोभिप्रायस्तत्राह ॥ दुःखाभाव इति ॥ पुरुषार्थपर्यवसायी वेदः । पुरुषार्थाश्च चत्वारः ॥ तत्र साक्षात्पुरुषार्थद्वयं सुखं दुःखाभावश्चेति ॥ तत्र सुखं स्वर्गादिपदेनोच्यते ॥ दुःखाभावो मोक्षपदेन॥तयोः साक्षादङ्गंधर्मः ॥ आत्मचिन्तनस्यापि धर्मत्वात्॥ज्ञान-

साध्यत्वं धर्मयोग एवेति मतम् ॥ अतएव न ज्ञानस्य पुरुषार्थेषु गणना धर्मस्य च साधनं अर्थः ॥ एवं साक्षात्परंपरया चत्वारः पुरुषार्था भवन्ति ॥ अतः पश्वादिरर्थो यागसाधनम् ॥ यागश्च धर्मः कामसाधनं ज्ञानसहितो मोक्षसाधनञ्च ॥ अत एव व्याख्यायत इत्यर्थः ॥ १६ ॥

आवरणभंगः ।

जैमिनीयमतमनादृत्य यज्ञानामधिकारिभेदेन मोक्षादिसाधकत्वं नतु लौकिकपरत्वं यज्ञानां भगवद्रूपत्वञ्चेत्येवं व्याख्याने इत्यर्थः ॥ कामपदस्य सुखवाचकत्वं "कामान् समर्धयंतु नः" "आत्मनस्तु कामाय जाया प्रिया भवति" "गतागतङ्कामकामा लभन्ते" इत्यादौ काम्यते असौ काम इति योगेन सिद्धम् ॥ विधिवाक्यादौ तदेव स्वर्गाक्षय्यसर्वलोकपदैरुच्यत इत्याशयेनाहुः ॥ ॥ तत्र सुखमित्यादि ॥ ॥ मोक्षपदममृतादिपदसंग्राहकम् । तयोः साक्षादङ्गं धर्म इति क्लृप्तद्वारातिरिक्तानन्तरितत्वेन साधनतया शेषभूत इत्यर्थः ॥ ननु "आत्मा वारे द्रष्टव्यः" इत्यादिश्रुत्यात्मऽऽज्ञानादौ मोक्षसुखसाधनत्वोक्तेः कथन्धर्मएव तथात्वमत आहुः ॥ आत्मेत्यादि ॥ ॥ "अयं हि परमो धर्मो यद्योगेनात्मचिन्तनम्" इति याज्ञवल्क्यस्मृतेस्तस्य धर्मत्वात्सुखमोक्षयोर्ज्ञानसाध्यत्वं ज्ञानस्य धर्मान्तःपातएव सर्वेषां संमत इत्यर्थः॥अत्र गमकमाहुः॥ ॥अतएवेत्यादि ॥ ॥ तथाच स्मृतिपुराणानां सर्वतन्त्रसाधारणत्वात्तेषु ज्ञानत्वेन पुरुषार्थत्वानुक्तेर्धर्मत्वस्य चोक्तेस्तेनैवंरूपेण पुरुषार्थत्वं निश्चीयत इत्यतस्तथेत्यर्थः ॥ नन्वस्तु धर्मस्य सुखमोक्षसाधकत्वन्तथापि पश्वादीनां स्वतन्त्रफलत्वानङ्गीकारे किं बीजमत आहुः ॥ ॥ धर्मस्य चेत्यादि ॥ अयमाशयः । पश्वादीनां स्वतंत्रफलत्वाभ्युपगन्तृमते तेषां न तेन रूपेण फलत्वं सर्वसाधारणत्वात् ॥ किन्तु स्वेष्टत्वेन रूपेण ॥ इष्टेस्तु मेऽस्त्विदमित्याकारस्तत्र प्रविष्टाया ममताया अविद्याकार्यत्वेन दुःखरूपत्वात्तत्सम्बन्धेन पश्वादीनामपि तथात्वात्तेषामनर्थरूपतया नार्थत्वम् ॥ किञ्च यागदानादौ धर्मत्वेनार्थत्वेन साध्यसाधनफलभावः प्रत्यक्षाद्व्यवन्नानाच्च निश्चितः ॥ अर्थत्वेन धर्मत्वेन तु शाब्दः । " को हि वेद यद्यमुष्मिल्लोकेऽस्ति वा नवा " इति श्रुतेरन्तरायबाहुल्याच्च सन्दिग्धोऽपि । एतेन जयतीर्थयात्रादावर्थैनैरपेक्ष्यमपि व्याख्यातम् ॥ अदृष्टाच्च दृष्टं बलवत् । अत इदं धर्मस्य ह्यापवर्ग्यस्येत्यत्रोक्तं तदनङ्गीकारे बीजमित्यर्थः ॥ ॥ एवमिति ॥ ॥ अनेन प्रकारेण ॥ ननु " धर्मादर्थ श्च कामश्च " इत्याद्युक्तप्रकारेण ॥ नच तद्विरोधःशंक्यः । तत्राऽपि काम्यकर्मत्यागएव व्यासचरणानान्तप्रर्यात् । भारतस्य वेदव्याख्यानरूपत्वात् । अप्रियवाक्ये-

“ धर्मो नित्यः सुखदुःखे त्वनित्ये ” इति निन्दाकथनाच्चेत्यर्थः ॥ अतोतिरागिणः कामाद्यर्थं काम्ये प्रवृत्तौ तत्फलानन्तरं धर्मे आदरोत्पत्तौ ततः सुखदुःखानामनित्यत्वदर्शनात्तत्परित्यज्य नित्यफलसांमुख्येन तत्करणे तत्सिद्धौ परम्ब्रह्माधिगच्छतीत्युपसंहारोक्तफलप्राप्तिर्मोक्षो वा भवतीति तत्तात्पर्यं बोध्यम् ॥ एवं तावत् पञ्चात्मकमिति मङ्गलकारिकायां भगवद्रूपो यो वेदार्थ उद्दिष्ट आसीत्स सर्वोऽपि अग्निहोत्रमित्यादिषु व्याख्यासहितासु कारिकासु यथाक्रमम्प्रकृतिस्वरूपनित्यकाम्यस्वरूपतत्तारतम्याधिकारभेदतत्फलोक्तिप्रयोजनविकृतिस्वरूपतत्फलसाधकत्वबीजयागनिष्ठभगवत्त्वबाधकनिरासधर्मनिष्ठनान्तरीयकसाधनता चेत्येवमादिरूपेणोपपादितः ॥ १६ ॥

व्रजभाषाटीका ।

दुःखाभाव इति ॥ वेद पुरुषार्थको सिद्धकरवेवारो है। पुरुषार्थ चार हैं तहाँ साक्षात् पुरुषार्थ दोय हैं। दुःखभाव दुःख नहिं होनो सुखको प्राप्तहोनो तहां स्वर्ग अक्षय्य सर्वलोकादिपदनकरकें सुख कह्यो है मोक्ष अमृतआदिपदनकरके दुःखाभाव कह्योहै इन दोनोंकी प्राप्ति धर्मकरकें होवे है तहां “ अयं हि परमो धर्मो यद्योगेनात्मचिन्तनम् ” यावाक्यसों ज्ञानभी धर्ममेंही गतार्थ है याहीसों ज्ञानकी न्यारी पुरुषार्थमें गणना नाहिं है। धर्मको सिद्धकरवेवारो अर्थ है याप्रकार साक्षात् परम्पराकरके चार पुरुषार्थ हैं ॥ यहां धर्म अर्थ काम मोक्ष इन चारपुरुषार्थनमें कामनाम सुखको है, मोक्षनाम सर्वथा दुःख दूरहोयेसों कहेहैं, तहां पशुपुत्रादिक अर्थ यज्ञरूप धर्मको सिद्धकरवेवारो है, ज्ञानरहित यज्ञरूपधर्म स्वर्गरूप कामको सिद्धकरवेवारो है, और ज्ञानसहित यज्ञ दुःखाभावरूप मोक्षको सिद्धकरवेवारो है ॥ तात्पर्य यह है अत्यन्त अनुरागी मनुष्य कामनासिद्धिके लिये काम्यकर्मनकूं करेगो वाकी कामना सिद्धभयेसों वाको धर्ममें विश्वास होयगो। फिर लौकिकसुखदुःखनको अनित्य देखकें सकामकर्मनकूं छोडके नित्यफलप्राप्तिकेलिये नित्यकर्म करेगो, ज्ञानयुक्त नित्यकर्म करके परब्रह्मप्राप्ति होयगी १६

साधनञ्च फलञ्चैव हरिर्वेदे निरूप्यते ॥ तदभि-
व्यक्तितः सर्वं पुरुषार्थस्वरूपतः ॥ १७ ॥ रूप-
प्रपञ्चकरणादासक्तःस्वांशवारणे॥ श्रुतिमात्म-
प्रसादाय चकारात्मानमेव सः ॥ १८॥

तत्त्वदीपप्रकाशः ।

उपसंहरति ॥साधनञ्च फलञ्चैवेति॥ उभयात्मको हरिर्वेदे निरू-
प्यते ततश्च वेदानुसारेण तदभिव्यक्तौ सत्यां सर्व एव पुरुषार्थः सि-
ध्यति ॥ यतो भगवान् पुरुषार्थस्वरूपः ॥ १७ ॥ एवं वेदार्थं निरूप्य
वेदस्य स्वरूपं विनिरूपयन् प्रयोजनञ्चाह ॥ रूपेति ॥ विचित्रो रूपप्र-
पञ्चः॥ जीवाश्चांशाः । अल्पानां विचित्रे भ्रमो भवत्येवातस्तन्निवार-
णार्थं श्रुतिश्चकार ॥ तस्याः स्वरूपमाह ॥ आत्मानमि[illegible] ॥ नन्वन्तर्या-
मिणैव कथं न निवार्यन्त इति तत्राह ॥आत्मप्रसादायेति॥अन्तःकरण-
प्रसादाय जीवान्तर्यामिणौ पूर्वमेव हृदये प्रविष्टौ भोगभोजनार्थं तदनु-
भोगेन मालिन्यञ्चित्ते जातं नान्तःस्थितेन दूरीकर्त्तुं शक्यमतो बहिः-
स्थितेन प्रवेशसमर्थेन तद्दूरीकर्त्तव्यमिति श्रुतिनिर्माणमित्यर्थः ॥१८॥

आवरणभंगः ।

तत्सर्वं संगृह्याहुः ॥ ॥ उपसंहरतीति ॥ ॥ यदीयपरिकरत्वेनेदं सर्वमुक्तं
तं वेदार्थं सङ्गृह्य दर्शयतीत्यर्थः ॥ ॥ उभयात्मक इति ॥ ॥ द्रव्यदेवतास-
म्बन्धो देवतोद्देशेन द्रव्यत्यागो वा याग इति लोके प्रसिद्धः ॥ तत्र देवतानाम्भगव-
द्रूपत्वम्भगवदवयवत्वात् ॥ " मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूप " इत्यादिश्रुतिभ्यो
" नासत्यदस्रौ परमस्य नासे " इत्यादि " देवा नारायणाङ्गजाः "इत्यादिवाक्यैः
सिद्ध्यति ॥ भगवत एव सर्वशब्दाभिधेयत्वेन च । "इन्द्रं मित्रं वरुणमग्निमाहुरथो
दिव्यः ससुपर्णो गरुत्मान्॥एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः"
इतिश्रुतेस्तल्लिङ्गाद्यधिकरणैश्च ॥ त्यागसम्बन्धकर्माणान्तु " मां विधत्तेऽभिधत्ते मां
विकल्प्यापोह्यते ह्यहं " इत्येकादशस्कन्धीयभगवद्वाक्यैः ॥ उपकरणस्य तु पुरुष-
सूक्तेन द्वितीयस्कन्धस्थपुरुषसूक्ताध्यायेन च सिद्ध्यति ॥ फलस्य भगवद्रूपता स्वा-

नन्दात्मकत्वादेव सिद्धा । एवं सति "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादौ सर्वशब्दस्यासङ्कुचितवृत्तिकत्वाद्वैदिकैः सर्वैः शब्दैर्मुख्यवृत्त्या भगवानेव बोध्यते ॥ सङ्कुचितवृत्त्या च तत्तत्कार्यार्थं तत्तद्रूपः ॥ ॥ तदिदमुक्तं ॥ हरिर्वेदे निरूप्यत इति ॥ ॥ सिद्धयतीति ॥ ॥ यथाधिकारं सिद्धयति ॥ तत्रहेतुमाहुः ॥ ॥ यत इत्यादि ॥ ॥ यदि प्रकारान्तरेण सिद्धयेत् पुरुषार्थरूपो न स्यादत एवं सिद्धयतीति सर्वोऽपि पूर्वोक्तार्थो सङ्गृहीतः । तेन बलनिरूपणार्थं प्रमाणानुरोधि प्रमेयमेकं निरूपितम् ॥ १७ ॥ अतःपरम्प्रमाणस्य बलवत्त्वाय तत्स्वरूपं निरूपयितुमाहुः ॥ ॥ एवमित्यादि ॥ ॥ अन्यथा पूर्वप्रकरणोक्ते शब्दएव प्रमाणमित्यादिरूपे संदर्भासम्भावनाद्यनुपशमे ग्रन्थप्रयासवैफल्यमिति तत्प्रयोजनस्यान्तःकरणशुद्धिरूपस्य तत्स्वरूपादिकथनस्य चावश्यकत्वमिति भावः ॥ ॥ श्रुतिं चकारेति ॥ ॥ एतेनापौरुषेयवाक्यत्वं पौरुषेयत्वेनाभगवत्त्वं च वदन्तो निरस्ताः॥"एतस्यैव महापुरुषस्य निश्वसितं यदृग्वेदो यजुर्वेदः सामवेद इति""प्रचोदिता येन पुरा सरस्वती"इति"वेदो नारायणः साक्षात्"इत्यादिश्रुतिस्मृतिविरोधात् ॥ ॥ अन्तर्यामिणेति ॥ ॥ अल्पत्वेपि स्वरूपात्मकतयान्तरतया च व्यापकत्वादभ्रान्तत्वात्सम्भावितसामर्थ्येनेत्यर्थः ॥ ॥ भोगभोजनार्थमिति ॥ "ऋतम्पिबन्तौ" इतिश्रुतेः ॥यद्यप्यनशनश्रुत्या जीववन्न भोगस्तथापि नियतकार्यकत्वादसमर्थत्वम् ॥ तदेतदुक्तं ॥ ॥अन्तःस्थितेनेति ॥ ॥ उक्तरीत्यान्तःपातिनेत्यर्थः ॥ अत एव "परमात्मा मे शुद्धयन्ताम्" इतिश्रुतिः ॥"हृदि स्थितो यच्छति भक्तिपूतः"इति तृतीयस्कन्धे विदुरवाक्यश्चातो न चोद्यावकाशः॥ १८ ॥

व्रजभाषाटीका ।

वेदमें साध्यसाधनरूप करकें हरिको निरूपण कियो है वेदानुसार बर्ताव करवेसों साध्यसाधनरूप भगवान्के प्रगट होयवेसों सब पुरुषार्थ सिद्ध होवें हैं क्योंकी भगवान्ही पुरुषार्थस्वरूप हैं। या प्रकार वेदके अर्थको निरूपण करकें वेदके स्वरूपको निरूपण करते भये प्रयोजन कहें हैं ॥ १७॥ रूपेति ॥ भगवान्को जगत्रूप बडो विचित्र है या विचित्र जगत्में अल्पभगवदंश जीवनकूं भ्रम होजावे है वा भ्रमके दूरकरवेकेलिये श्रुति वेदरूपकरके भगवान्ही प्रकटभये

तहाँ अन्तर्यामीरूपकरकेही जीवको भ्रम क्यों नहिं दूरकियो यह शङ्का नहिंकरनी क्योंकि जीव तथा अन्तर्यामी वे दोनों भोगवेकेलिये हृदयमें पहिलेसोंही प्रविष्ट होरहेहैं तहाँ भोगकरके भई जो चित्तकी मलिनता है वाकूँ भीतरस्थित अन्तर्यामी नहिंदूरकरसके है तासों भीतर हृदयमें धसवेकों समर्थ ऐसें बाहिरस्थित वेदरूपसों प्रकट होयके चित्त प्रसन्न होयवेकेलिये भ्रम दूरकरे हैं येही वेदको प्रयोजन है॥ १८ ॥

**इति नित्यः श्रुतेरर्थः सात्विकानाम्प्रकाशते ॥**
**उत्पन्नास्त्रिविधा जीवा देवदानवमानवाः॥१९॥**

तत्वदीपप्रकाशः ।

इदमेव श्रुतेः प्रयोजनमित्याह ॥ इतीति ॥ अध्यापनादिना धर्मादिकमपि साधयति परं नित्योयमेवार्थः प्रयोजनम् ॥ अथवा पञ्चात्मको भगवान्वेदार्थ इति निरूप्य सर्वेषां तथा बुद्ध्यभावमाशंक्य तेषां दोषं कथयन् स्वोक्तमुपसंहरति ॥इतीति ॥ सात्विकानामेवायमर्थः प्रकाशते न सर्वेषामित्यर्थः ॥ ननु सर्वे भगवदंशास्तत्र कथञ्चन सात्विका अन्ये नेति व्यवस्था तत्राह॥ उत्पन्ना इति ॥ "प्रजायेय" इति भगवदिच्छया विनिर्गताश्चिदंशा जीवास्तुल्या मा भवन्त्विति भगवन्मायागुणैस्त्रिविधैस्ते व्याप्तास्त्रिविधरसभोगाय ॥ अन्यथा तामसवस्तूनां भोगो न स्यात् ॥ अतएव श्रुतौ "त्रयः प्राजापत्याः" इति देवा मनुष्या असुरा गणिताः ॥ पञ्चरात्रेऽपि " त्रिविधा जीवसंघास्तु देवमानुषदानवाः ॥ तत्र देवा मुक्तियोग्या मानुषेषूत्तमा अपि ॥ मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ॥ अधमा निरयायैव दानवास्तुतमोलयाः "इति ॥अतो जीवानान्त्रैविध्यात्तदनुगुणा एवान्तःकरणादयोऽपि तेषां भवन्ति ॥ १९ ॥

आवरणभंगः ।

अर्थशब्दस्याभिधेयार्थकत्वमादाय किञ्चित्परिहर्त्तुं व्याख्यानान्तरमाहुः॥ अथ-वेत्यादि ॥ स्वोक्तमिति ॥ वेदस्वरूपफलार्थविषये यदुक्तन्तदित्यर्थः ॥ सात्त्विकानामेव प्रकाशने हेतुरग्रेनुपदमेव व्युत्पाद्यः । प्रसङ्गाद्वेदविषये व्युत्पादनाय किञ्चित्परोक्तमेव लिख्यते । तत्रापि यो विशेषः क्वचित्सोऽपि तत्र प्रकाश्यते ॥ तथाहि ॥ स च वेदो मन्त्रब्राह्मणात्मकः। तत्र मन्त्रा अनुष्ठानप्रकारभूतद्रव्यदेवतादिप्रकाशकाः । तेऽप्युत्सर्गतस्त्रिविधाः।ऋग्यजुःसामभेदात् । तत्र गायत्र्यादिछन्दोविशिष्टा ऋचः । ता एव गानयुक्ताः सामानि । तदुभयविलक्षणानि यजूंषि । अग्निदग्नीन्विहरेत्यादिसम्बोधनरूपाणि गद्यानि विदादयश्चान्येऽत्रैवान्तर्भवन्ति ॥ ब्राह्मणमपि त्रिविधं विध्यर्थवादतदुभयविलक्षणभेदात् ॥ विधिरपि चतुर्विधः । उत्पत्त्यधिकारिविनियोगप्रयोगभेदात् ॥ तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । "यदाग्नेयोऽष्टाकपालोमावास्यायां भवति" इत्यादिः । सेतिकर्तव्यताकस्य यागादेः फलसंबन्धबोधको विधिरधिकारिविधिः । यथा "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिः । अङ्गसंबन्धबोधको विधिर्विनियोगविधिः । यथा "व्रीहिभिर्यजेत स मिधो यजति" इत्यादिः ॥ साङ्गप्रधानप्रयोगैक्यबोधको विधिः पूर्वोक्तविधित्रयमेलनरूपः प्रयोगविधिः । स च श्रौत इत्येके काल्प इत्यपरे ॥ कर्मस्वरूपमपि चतुर्विधम् । उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात् । तत्र "वसन्ते ऽग्नीनादधीत" "यूपन्तक्षति" इत्यादिना संस्कारविशेषविशिष्टाग्नियूपादेरुत्पत्तिः ॥ "स्वाध्यायोऽध्येतव्यः" "गाम्पयो दोग्धि" इत्यादावध्ययनदोहनादिना विद्यमानस्यैवाध्ययनपयःप्रभृतेराप्तिः । "सोममभिषुणोति व्रीहीनवहन्त्याज्यं विलापयति" इत्यादावभिषवणावघातविलापनैः सोमादीनां विकारः।"व्रीहीन्प्रोक्षति" "पत्न्यवेक्षते" इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्याज्यादिद्रव्यसंस्कारः । एतच्चतुष्टयं चाङ्गकर्मैव । तथा कर्तृकारकाण्यनाश्रित्य विहितमर्थकर्म । तच्च द्विविधम् । अङ्गम्प्रधानञ्च । अन्यार्थमङ्गम् । अनन्यार्थम्प्रधानम् ॥ अङ्गमपि द्विविधम् । संनिपत्योपकारकमारादुपकारकञ्च । तत्र प्रधानस्वरूपनिर्वाहकम्प्रथमम् । फलोपकारि द्वितीयम् । एवं सम्पूर्णाङ्गसहितो विधिः प्रकृतिः । विकलाङ्गसहितो विकृतिः । तदुभयविलक्षणो विधिरङ्गविधिः एवमन्यदप्यूह्यम् । तदेवं निरूपितो विधिभागः ॥ प्राशस्त्यनिन्दान्यतरलक्षणया विधिशेषभूतं वाक्यमर्थवादः । स च त्रिविधः।गुणवादोऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवादः । यथा आदित्यो यूप इत्यादिः । प्रमाणान्तरप्राप्तार्थबोधकोऽनुवादः । यथाग्निर्हिमस्य भेषजमित्यादिः। प्रमाणान्तर-

विरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः । इन्द्रो वृत्राय वज्रमुदयच्छदित्यादिः ॥ तदुक्तम् । "विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः" इति । तत्र त्रिविधानामप्यर्थवादानां विधिस्तावकत्वे समानेऽपि भूतार्थवादानां स्वार्थे प्रामाण्यं देवताधिकरणन्यायात् ॥ अबाधिताज्ञानज्ञापकत्वं हि प्रामाण्यं तच्च बाधितविषयत्वाज्ज्ञातज्ञापकत्वाच्च न गुणवादानुवादयोः। भूतार्थवादस्य तु स्वार्थे तात्पर्यरहितस्यापि औत्सर्गिकम्प्रामाण्यं न विहन्यते । तदेवं निरूपितोऽर्थवादभागः। विध्यर्थवादोभयविलक्षणन्तु वेदान्तवाक्यम् ॥ तच्चाज्ञातज्ञापकत्वेप्यनुष्ठानाप्रतिपादकत्वान्न विधिः । स्वतः पुरुषार्थपरमानन्दविज्ञानात्मकब्रह्मणि स्वार्थे उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतःप्रमाणभूतम् । सर्वानपि विधीनन्तःकरणशुद्धिद्वारा स्वशेषतामापादयदन्यशेषत्वाभावाच्च नार्थवादः ॥ तस्मादुभयविलक्षणमेव वेदान्तवाक्यम् । तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते ॥ विधिपदरहितप्रमाणवाक्यत्वेन च क्वचिद्भूतार्थवाद इति व्यवह्रियत इति न दोषः । तदेवं निरूपितं त्रिविधं ब्राह्मणम् ॥ एवमुभयकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः । स च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृग्यजुःसामभेदभिन्नः । तत्र होत्रे ऋग्वेदेन । आध्वर्यवे यजुषा । औद्गात्रे साम्ना । ब्राह्मयाजमानौ त्वत्रैवान्तर्भूतौ ॥ अथर्ववेदस्तु यज्ञानुपयुक्तः शान्तिकपौष्टिकाभिचारिकादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एव ॥ एवम्प्रवचनभेदात् प्रतिवेदं भिन्ना भूयस्यः शाखाः । एवञ्च कर्मकाण्डे व्यापारभेदेऽपि सर्वासां वेदशाखानामेकरूपत्वमेव ब्रह्मकाण्ड इति चतुर्णां वेदानाम्प्रयोजनभेदेन भेद उक्त इति मधुसूदनसरस्वती आह ॥ अत्रेयान्विशेषो बोध्यः ॥ मन्त्राश्चतुर्विधाः । आथर्वणानामपि मन्त्रत्वात् ॥ वेदेषु च यत्र यत्प्राचुर्यन्तत्र तन्नामकत्वं यथाऋग्बाहुल्येन ऋग्वेदः॥एवमन्येपि॥अथर्वलक्षणन्तु तथा न प्रसिद्धम्॥तेनोक्तत्रयातिरिक्तो वेदोऽथर्ववेदो ज्ञेयः।अथर्ववेदस्य ब्रह्मत्व उपयोगः पूर्वमासीद्यज्ञस्य चातुर्होत्रत्वात्तेन यज्ञ उपयुक्तः॥इदानीन्तु सुमन्तुना ऋषीणामपचारात्क्रुद्धेन स्ववेदमात्रादेवाथर्वणानाम्पृथक् यज्ञं कुर्वाणेनेतरोपयोगो निवारित इत्यनुपयुक्त इत्याथर्वणेषु प्रसिद्धत्वाच्च ॥ किञ्च । गुणवादानुवादयोरपि वाचन्धेनुमुपासीतेतिवत् ॥ गो अश्वा एव पशवोऽन्ये त्वपशव इत्यादावपि अन्येषामपशुत्वज्ञानपूर्वकं गोअश्वानाम्पशुत्वमनुसन्दधानेन तत्कर्म कर्त्तव्यम् ॥ तथा वायुर्वै क्षेपिष्ठेत्यादावपि शीघ्रगामिनीं देवतां ज्ञात्वा कर्म कर्तव्यमित्येवमाशयेनौत्सर्गिकम्प्रामाण्यं न विहन्यत इति ॥ अन्यत्स्पष्टमेव ॥ प्रकृतमनुसरामः ॥ इच्छयेति पदं व्याप्ता इत्यनेनाप्यन्वेति ॥ अन्यथेत्यव्याप्तत्वे ॥ न स्यादिति ॥ तामसानामसमीचीनत्वेन

हेयत्वात्तद्योग्यभोक्त्रभावे वैयर्थ्यमेव स्यादित्यर्थः ॥ त्रिगुणव्याप्तत्वे किं मानमि-त्यत आहुः ॥ अतएवेत्यादि ॥ अन्यथा बृहदारण्यके स्तनयित्नुब्राह्मणे यत्त्रैविध्य-मुक्तन्तत्तादृशगुणव्याप्तिं विना सम्भवद्बाधितमेव स्यादिति भावः॥ ननु श्रुतौ देहत्रै-विध्यमुक्तन्नतु जीवत्रैविध्यम् ॥ असुरशरीरे प्रवेशान्यथानुपपत्त्या तथाकल्पनन्तु न युक्तिसहम् ॥ अदृष्टविशेषादप्युपपत्तेरित्याकांक्षायाम्पूर्वोक्तनिश्चायकं माना-न्तरमाहुः ॥ पञ्चरात्रेपीति ॥ तदनुगुणा इति ॥ तथा चादृष्टस्य मनःसम्बन्धो-त्तरभावि कर्मजन्यत्वात्ततःपूर्वन्तदसम्भवान्नादृष्टेनोपपत्तिरिति भावः ॥ अदृष्टाना-दित्वन्तु ब्रह्मवादविरोधादेवोपेक्ष्यम् ॥ १९ ॥

ब्रजभाषाटीका ।

वेदके पाठ करवेमें धर्मादिकभी सिद्ध होयहै ये नित्यप्रयोजन है। अथवा श्रीवल्लभाचार्यजी वेदार्थरूप जे पञ्चात्मक भगवान हैं उनको निरूपण करकें सदोष जीवनकूँ याप्रकारको वेदार्थ नहिं मालुम पडेहै किन्तु सात्विक जीवनकूँही अर्थ प्रकाशमान होवेहै औरकूँ नहिंहोवेहै तहाँ सब जीव भगवानके अंश हैं ये कैसे मालुम होय यह सात्विकहै ये जीव सात्विक नहिं हैं ॥ तहाँ व्यवस्था करैहैं॥ उत्पन्नेति ॥ जब भगवानकी क्रीडाकेलिये बहुतहोयके प्रकट होय-वेकी इच्छा भई तब चिदंश जीव आपके स्वरूपमें प्रकटभये वे सब जीव तुल्यही नहिं होयजाँय याकेलिये त्रिविधरसभोग कर-वेकेलिये तीनप्रकारके मायाके गुणनकरके व्याप्तभये त्रिविध जीव प्रकटकिये। अन्यथा नामसवस्तूनको भोग नहिं होयगो याहीसें श्रुतिमें "त्रयः प्राजापत्याः" या वाक्यमें देव मनुष्य असुर तीन प्रकारके जीव गिनेहैं। नारदपञ्चरात्रमेंभी तीनप्रकारकेही जीव लिखेहैं। तहाँ देवजीव तथा मनुष्यनमेंसें उत्तम जीव मुक्तियोग्य हैं, मनुष्यनमेंसें मध्यमजीव संसारके योग्य हैं, मनुष्यमेंसें अधम-जीव नरककेलिये हैं, असुरजीव तामिस्र अन्धतामिस्रमें लय हो-यवेकेलिये हैं ॥ १९ ॥

**सर्वे वेदविदो जाताःस्वभावगुणभेदतः ॥ तेषा-**
**म्प्रकृतिवैचित्र्याच्छ्रुत्यर्थो बहुधोदितः ॥२०॥**
**भावस्याज्ञानतः कर्म्ममात्रङ्केचिद्वदन्ति हि ॥**
**लोकप्रतीतं स्वीकृत्य कदाचिद्भगवान् वदेत्२१**

तत्त्वदीपप्रकाशः ।

ततः किमत आह ॥ सर्वे वेदविद इति ॥ यथार्थं श्रुत्वापि ते य-दा व्याचक्षते तदा स्वरुच्या वेदार्थं वर्णयन्ति स्वभावगुणानाम्भेदा-त् ॥ ततः किमत आह ॥ श्रुत्यर्थो बहुधोदित इति ॥ २० ॥ तानेव प्रकारानाह ॥ भावस्येति ॥ उपक्रमादिप्रकरणार्थस्य भावस्याज्ञानात्के-वलं वाक्यार्थमेवानुभूय क्रियामात्रं वेदार्थ इति केचिदाहुः ॥ ननु मह-तां वाक्यात्तथा न भविष्यतीत्याशंक्याह ॥ लोकप्रतीतमिति ॥ महा-न्तो हि भगवदनुगुणाः॥ भगवाँश्च सर्वमार्गप्रवर्तकः॥ अतः कर्ममार्गवक्तृ-ननुसरति "एवन्त्रयीधर्म्ममनुप्रपन्नाः" इति । "वेदवादरताः पार्थ" इति "त्रैगुण्यविषया वेदाः" इति च ॥ अतो योगादिप्रचारार्थम्प्र-कारान्तरापन्नश्रुत्यर्थनिन्दया तथा बोधयतीति महान्तोऽपि तमर्थं न निवारयन्तीत्यर्थः ॥ २१ ॥

आवरणभंगः ।

यथार्थमित्यादि ॥ तदेतदेकादशस्कन्धे । "वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्म-वादिनः । तेषां विकल्पप्राधान्यमुताहो एकमुच्यते" इत्युद्धवप्रश्ने "कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता" इत्यादिषु भगवद्वाक्येषु चतुर्दशाध्यायस्थेषु स्फु-टति । "तेषाम्प्रकृतिवैचित्र्याच्चित्रा वाचः स्रवन्ति हि" इति तत्रोक्तेः ॥ बहु-धोदित इति ॥ तथाच बहुधा प्रसृतत्वान्न सर्वेषान्तदर्थबोधोऽपि तु सात्विकानामेवे-त्यर्थः ॥ २० ॥ प्रकारानिति ॥ "धर्ममेके यशश्चान्ये कामं सत्यन्दमं शमम् ॥ अन्ये वदन्ति वै स्वार्थमैश्वर्यं त्यागभोजनम् ॥ केचिद्यज्ञन्तपो दानं व्रतानि नि-यमान् यमान्" इत्यत्रोक्तानित्यर्थः ॥ एतेषु प्रथमोद्दिष्टमेव पक्षं लोकप्रसिद्धत्वाद-नुवदन्ति दूषणार्थम् ॥ भावस्येत्यादि ॥ उपक्रमेत्यादि ॥ अत्रैवम्भाति वेदस्योप-

क्रमो हि मन्त्रैर्देवतास्तुत्यादावुपयुक्तेः॥ प्रकरणञ्च यागस्य स च "यज्ञो वै विष्णुः" इति श्रुतेर्भगवद्रूपः ॥ देवताश्चाग्न्यादयो यागशेषा भगवदंगभूताः ॥ कर्ता पुरुषोऽपि यागशेषो भगवदंशः । पुरुषशेषभूतं फलमप्येतस्यैवानन्दस्यान्यानीत्यादिश्रुतेर्भगवदंशभूतम् । तथैवोपकरणान्यपि । एवं सर्वसाक्षात्परम्परया च भगवद्रूपमिति भगवत्येव श्रुतेस्तात्पर्यमिति प्रकरणार्थस्येत्यर्थ इति ॥ ननु यदि क्रियैव वेदार्थो न स्यात्फलञ्च लोकाद्यात्मकं यागानां न स्याद्वेदार्थश्च यदि गुणातीतः स्यात्तदा 'त्रैगुण्यविषया वेदा' इत्यादि भगवान्न वदेत् । यतो वदति ततः क्रियैव वेदार्थ इत्याशङ्कां हृदि निधायाहुः ॥ नन्वित्यादि ॥ महता जैमिन्यादीनां विचारकाणां वाक्याच्छास्वरूपात्तथा न भविष्यति क्रियावादिनां वेदार्थस्याज्ञानं न भविष्यतीत्याशंक्य महतामाशयमाहेत्यर्थः ॥ लोकप्रतीतमिति ॥ क्रिया लौकिक्येव वेदार्थः फलञ्च लोकादिकमेवेत्येवं साधारणजनप्रतीतं स्वीकृत्य कदाचित् योगादिप्रचारावसरे भगवान् वदेदित्यर्थः ॥ तथा बोधयतीति लोकसिद्धम्मतान्तरं वेदार्थत्वेन बोधयति ॥ एवं सति गीतावाक्येष्वयमर्थो बोध्यः ॥ ये त्रैविद्याः स्वर्गतिम्प्रार्थयन्ते ते एवं त्रयीधर्ममनुप्रपन्नाः लोकप्रतीतप्रकारन्त्रयीधर्मपरम्परया प्रपन्ना नतु मदुक्तप्रकारकम् । अतएव कामकामा लौकिकसुखेप्सवो गतागतं लभन्ते नतु मुच्यन्त इति ॥ वेदवादरता इत्यत्रापि वेदे ये वादरताः नतु तात्पर्यज्ञातारः। अतएव "नान्यदस्तीति वादिनः" इत्यादिरूपास्तेषाञ्च समाधौ न बुद्धिरिति त एव निंद्यन्ते ॥ त्रैगुण्यविषयेत्यत्रापि त्रैगुण्यं गुणत्रयसमुदायः विषयो बोध्यो येषान्ते तथा इत्यलौकिकीम्प्रतीतिमादायैव वक्तीति ज्ञायते ॥ "वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे ॥ परोक्षवादा ऋषयः परोक्षञ्च मम प्रियम्" इत्येकादशस्कन्धीयभगवद्वाक्यात् ॥ अस्य गीतावाक्यस्य सांख्यस्तावकतायाः प्रकरणेन निश्चयाच्च । एवञ्च प्रथमवाक्यमप्यनन्याश्चिन्तयन्तो मामित्यग्रिमग्रन्थस्वारस्यादुपासनास्तावकम् ॥ तथैव द्वितीयं योगस्येति न तैः कृत्वा क्रियार्थोपष्टम्भ इति भावः ॥ २१ ॥

व्रजभाषाटीका ।

उन त्रिविधजीवनके अन्तःकरणभी गुणनके अनुसार न्यारे २ है तासों ये सब जीव वेदके अर्थकूं यथार्थ सुनके जब अपने मुखसों वर्णन करेहैं तब अपनी अपनी रुचिके अनुसार न्यारो२ वेदार्थ वर्णनकरे हैं, क्योंकि इनके स्वभावगुणनके भेदसों वेदार्थ बहुतप्रकारको होजावेहै॥२०॥उन प्रकारनकूँ कहे हैं॥भावस्येति॥उनप्रका-

रनको वर्णन भागवत११स्कन्धमें " धर्ममेके यशश्चान्ये" इत्यादि-श्लोकमें है ॥ उपक्रम उपसंहारकरकें प्रकरणार्थको विनाजाने केवल वाक्यार्थको अनुभव करकें क्रियामात्र वेदार्थ है ऐसें कितनेक कहेहैं॥शङ्का–जैमिन्यादिक ऋषिके वाक्यसोंभी तो क्रियाही वेदार्थ सिद्धहोतेहैं तामें और क्रियातातिरकँभी अनादर नहिं होयगो ? उ-

अर्चिरादिमार्गो धूमादिमार्गस्तृतीयो मार्गश्चेति ॥ अतो वेद एव तथा तथा वदतीति मन्तव्यमित्याशंक्याह ॥ **यथोक्त इति** ॥ नात्र वेदानुसारेण मार्गद्वयं किन्त्वेक एव मार्गो वेदोक्तस्तमाह ॥ **यथोक्ते ह्यपुनर्जन्म** ॥ अयथाज्ञानतः कर्मकरणाद्धूमादिमार्ग इत्याह ॥ **अन्यथेति** ॥ अनेन जायस्वेत्यपि मार्गः सङ्गृहीतः ॥ "येन स्यात् सृष्टिरेषोत्तरोत्तरा" इति ॥ एवमेव शास्त्रकारैर्भगवता चाभिप्रेत्य मार्गद्वयमुदीरितं नतूभयमपि साक्षाद्वेदाभिप्रेतमित्यर्थः ॥ नन्वस्य धूमादिमार्गस्य कथने किम्फलं नहि भ्रममार्गाः केनचिदुच्यन्ते किञ्च धूमादिमार्गीयकर्मणोऽविहितत्वे तत्फलं न स्यान्न ह्यविहितस्य भ्रमप्रतिपन्नस्य फलं सम्भवतीत्याशंक्याह ॥ **वैराग्यार्थमिति** ॥ तदपि भ्रमत्वेन प्रतिपन्नमपि जगति तस्य मार्गस्य प्रतीयमानत्वात् ॥ किञ्च पञ्चाग्निख्यापने श्रुतौ पञ्चाग्निख्यापनार्थन्तदुक्तम ॥ पञ्चाग्न्युपासकस्य फलसिद्धये यथा वेदे लोकसिद्धोऽनूद्यते "धन्वन्निव प्रपा असि" इत्यादौ तथा भ्रमसिद्धोप्यनूद्यत इति ॥ यदुक्तन्त्रिगुणत्यादि तत्रोच्यते ॥ न ह्यत्रावैदिकत्वमुच्यते किन्तु कर्मण्येव पश्वादावेव तात्पर्यं श्रुतेरितिप्रकारकस्तात्पर्यभ्रमः ॥ एतस्य भ्रमत्वं "वेदवादरताः" इत्यादिवाक्यैर्निन्दितत्वेन ज्ञायते ॥ एवं सति तदुक्तिस्तु सर्वथा सन्मार्गविमुखस्यातिरागिणः पुंसः कथञ्चित्सन्मार्गे प्रवृत्त्यर्था ॥ तदुक्तं "रोचनार्था फलश्रुतिः" 'यथा भैषज्यरोचनम्' इत्यादि॥तथाच तत्फलस्य निरूपणे तुच्छत्वज्ञानेन वैराग्यार्थं तन्निरूपणमिति ॥ २३ ॥

आवरणभंगः ।

ननु फलसम्वादे निंदानवसर इत्यत आहुः ॥ नतु नित्यन्तदिति ॥ ननु तथापि लोकसिद्धस्य वेदार्थत्वाभावे गीतायास्त्रिगुणात्मकामित्यत आहुः ॥ ॥ अन्यथेत्यादि ॥ अतइति ॥ यतस्तत्र नित्यं नापि पावनं वेदार्थस्तु तद्विलक्षणः अत इत्यर्थः ॥ तथाच गीतायामपीदमेव तात्पर्यमतो न सन्देह इत्यर्थः ॥ २२ ॥

किञ्चिदाशङ्कन्ते ॥ ॥ ननु वेदार्थ इत्यादि ॥ ॥ फलत्वेनेति । श्रद्धातपआदिफलत्वेन प्रतिपाद्यमाना इत्यर्थः ॥ ते च त्रयो मार्गाश्छान्दोग्ये " य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिरभिसम्भवन्ति " इत्यादिना "देवयानः पन्थाः " इत्यन्तेन " अथेमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" इत्यारभ्य "चाण्डालयोनिं वा" इत्यन्तेन ॥ अथैतयोः पथोर्नैकतरेण च नेत्यारभ्य तृतीयं स्थानमित्यन्तेन पञ्चाग्न्युपासनकरणे प्रतिपादिताः ॥ अत इति ॥ ॥ इष्टापूर्तकर्तुर्धूममार्गगमनप्रतिपादनादित्यर्थः ॥ समादधते ॥ नात्रेत्यादि ॥ ॥ यथोक्ते ह्यपुनर्जन्मेति ॥ हि शब्दो हेतौ ॥ श्रुतावर्चिरादिमार्गस्य ज्ञानफलत्वकथनादितरयोश्च जघन्यतया निन्दनात्तृतीयायाञ्च्मनिषेधकथनात् ॥ श्रीभागवते च 'कर्ममोक्षाय कर्माणि विधत्त' इति ॥ भिदां मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदतीति कथनादेवमवसीयते तस्मादित्यर्थः ॥ ॥ संगृहीत इति ॥ अनभिप्रेतत्वेन संगृहीत इत्यर्थः ॥ ॥ एवमिति ॥ येन लोको न पूर्यत सृष्टिश्चोत्तरोत्तरा स्यादित्यर्थः ॥ किञ्चिदाशंक्य परिहरन्ति ॥ ॥ नन्वस्येत्यादि ॥ यद्ययं वेदानभिप्रेतस्तर्हीति शेषः ॥ किञ्चेत्यादिनोक्त आभासग्रन्थः प्रभूणाम् ॥ ॥ तत्फलमिति ॥ अधिकारविध्युक्तम्फलमित्यर्थः ॥ प्रतिपन्नमपीति पदं उक्तमिति मूलस्थपदेनान्वेति ॥ ॥ जगतीत्यादि ॥ जगत्क्लेशस्यानुभवसाक्षिकत्वात्तदनुवादेन जुगुप्सोत्पादनाय धूमादिमार्गकथनमिति तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेतेति तदुपसंहारग्रन्थादवसीयतेऽतस्तादृशकर्मणस्तत्फलेभ्यश्च वैतृष्ण्यार्थन्तदुक्तिरिति सापि नित्यफलादिपोषणार्थैवेति भावः ॥ तत्प्रकरणमनुरुद्ध्य प्रयोजनमप्याहुः ॥ ॥ किञ्चेत्यादि ॥ ॥ पञ्चाग्निफलस्योत्कृष्टत्वकथनाय तदुक्तिर्न न तु तस्य तत्र तात्पर्यम् ॥ नहि निन्दान्यायादिति भावः ॥ ननु तथापि प्रतिपन्नस्य कथं श्रुतावनुवाद इत्यत आहुः ॥ ॥ यथेत्यादि ॥ अनूद्यत इति ॥ ॥ "त्वष्टा हतपुत्रो वीन्द्र९ सोममाहरत् " इत्यादावनूद्यते ॥ नहि वीन्द्रः सोमो विहितो नवोच्छिष्टसोमहवनन्नवा मन्त्रस्वरत्यागः ॥ तथाच यथा तत्र तथात्रापीति नायन्दोष इति यदुक्तमित्यादिर्निरूपणमितीत्यन्तः प्रभूणां ग्रन्थो निगदव्याख्यातः ॥ २३ ॥

व्रजभाषाटीका ।

यद्यपि नित्यफलमेंही वेदको तात्पर्य है तथापि वैसे अधिकारीको अनित्य काम्यफलमेंभी फरक नाहिंआवेहै क्योंकि याग भगवदंश है

तासों सब अभिलषित फलभी होयजाय है ॥ वह फल नित्य नहिं है परन्तु या प्रकारको लोकसिद्ध वेदार्थ नहिंहै । जो क्रियामात्रही वेदार्थ होय तो स्वर्गलोकादिकहीमात्र फल होय तब तो " एतान्य-पितु कर्माणि संगं त्यक्त्वा फलानि च " इत्यादिगीतावाक्यमें कामनाको निषेधकरकें कर्म करवेको उपदेश नहिंकरते ॥ २२ ॥ शङ्का—वेदको अर्थ एकही होय तो फलरूप मार्ग न्यारे २ क्यों होने चाहिये. जैसे श्रद्धा तपश्चर्या इष्टापूर्ति आदिकनके फलरूप अर्चिरादिमार्ग जामार्गकरके जीव सूर्यलोकमें होयके गयो-भयो फिर नहिं आवेहै धूमादिमार्ग जामार्गकरकें गया जीव चन्द्रलोकमें जावेहै और धर्मक्षयहोवेमों पीछोभी चलोआवेहै तथा तीसरो मार्ग ये तीनों मार्ग छान्दोग्य उपनिषदमें लिखेहैं तासों वेदही न्यारे २ फल तथा न्यारे २ साधन बतावेहैं तब आत्मसुखकी प्राप्ति तथा नित्यकर्मकी प्रवृत्ति करवेमेंही वेदको तात्पर्य है ॥ ये बात कैसें बनसके ॥ उत्तर वेदके अनुसारमों दो मार्ग नहिं हैं किन्तु वेदोक्तमार्ग तो एकही है. ज्ञानसहित यथार्थकर्मकरके जामार्गमें गयो जीव पीछो जन्म नहिं ग्रहण-करें है और जो जीव यथार्थज्ञानविना कर्म करेहै वाको फेर जन्म होवेहै ॥ ऐसेही ज्ञानरहित सकाम कर्म करवेवालेकूं सृष्टि-वृद्धिकेलिये " जायस्व म्रियस्व " इति वाक्यानुसार अपनेही वशमें वारम्वार जन्ममरणको प्राप्त होनो पडेहै याहीमों अभिप्रा-यकूँ विचारिके शास्त्रकारनने तथा भगवाननेंभी गीतामें दो-मार्गको वर्णनकियो है, परन्तु वेदको साक्षात अभिप्राय दोमार्गमें नहिं है । वेदको अभिप्राय तो यथार्थज्ञानसों कर्म करवायके " अपुनर्भव " फिर जन्म न हिं होय ऐसें अर्चिरादिमार्गमें

जीवको प्रवेश करवायवेमें है ॥ अब जो जीव यथार्थज्ञानसों कर्म नहिंकेरहै वाकूँ पुण्यक्षय भयेसों पीछो जन्म लेनोपडेहै ॥ तहाँ शङ्का होयहै धूमादिमार्ग वेदमें क्यों वर्णनकियोहै जो कहोगे धूमादिमार्ग वेदसें विहित नहिंहै ताको यह उत्तर है जो विधान नहिंहै तो केवल भ्रममात्रसों जानेभये मार्गको फल कैसे होजायहै ताको उत्तर देवेंहै ॥ वैराग्यार्थमिति ॥ भ्रमसों प्रतिपन्नभी धूमादिमार्ग वेदमें वैराग्य होयवेकेलिये कह्योहै अर्थात् वारम्वार जन्ममरणादिक्लेश देखके वैराग्य आवेगो तब नित्यकर्म करवेमें प्रवृत्त होयगो याकेलिये पञ्चाग्निविद्याके उपासककों फल सिद्धहोयवेकेअर्थ कह्योहै। जैसे अग्निकी स्तुतिके लिये "धन्वन्निव प्रपा असि" इत्यादिकनमें लोकसिद्ध मारवाडदेशकी प्याऊको अनुवाद है तैसे भ्रमसिद्ध धर्मादिमार्गकोभी वेदमें वैराग्य होयवेकेलिये अनुवाद है यासोंही पशुपुत्रादिक तथा स्वर्गादिकनमेंही वेदको तात्पर्य है यारीतिको जिनकूं भ्रम है उनकी गीताजीमें "वेदवादरताः पार्थ" "कामात्मानः स्वर्गपराः" इत्यादिश्लोकमें निन्दा लिखीहै ॥ भ्रमासिद्धकी उक्ति तो अत्यन्त विमुख अनुरागी मनुष्यकूं कोईप्रकारसों सन्मार्गमें प्रवृत्तिकरवेकेलिये है जब उनफलनसों वाकी तृष्णा मिटजायगी तब तुच्छ समुझके उनसों वैराग्य होयजायगो तापीछे जन्ममरण छूटवेकेलिये नित्यकर्ममें प्रवृत्त होयगो। तात्पर्य यह सिद्धभयो अनेकप्रकारके विकृतियाग तथा अनेकफलनको निरूपण वेदमें कियोहै सो पञ्चात्मकनित्यकर्ममें प्रवृत्तिकेलियेही कियोहै ॥ २३ ॥

**बहुप्रकारमेकं हि कर्म वेदे प्रकाश्यते ॥ भगवन्मूर्तितासिद्ध्यै ते सर्वे पूर्वजैर्धृताः॥२४॥अल्प-**

ज्ञत्वादाधुनिकाः पाठज्ञानाक्षमा द्विजाः ॥ मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः॥२५॥ द्वापरान्ते हरिर्व्यासस्तदर्थम्प्रथमं पृथक् ॥ चातुर्होत्रविभागेन न्यस्तवान् वेदरूपतः॥ शाखाभेदास्तु तच्छिष्यैस्तेनैव प्रेरितैः कृताः॥२६॥

तत्त्वदीपप्रकाशः ।

एवं वेदं वेदार्थञ्च निरूप्य शाखाभेदानां रूपमर्थञ्चाह ॥ बहुप्रकारमिति ॥ एको ज्योतिष्टोमो भगत्वात्सहस्रमूर्तिर्यावता वेदेनोच्यते सैका शाखा ॥ सर्वेषां सर्वशाखाज्ञानन्नास्तीति सामान्यधर्मसहित एव विशेषः सर्वत्रोच्यते ॥ तेन न सामान्यकथनेन पुनरुक्तिः ॥ यज्ञेषु भगवद्बुद्धिसिद्ध्यर्थमनेकरूपेण निरूपणं ते सर्वे विशेषप्रकाराः पूर्वजैर्मरीच्यादिभिर्धृताः ॥ २४ ॥ आधुनिकानान्तथा सामर्थ्याभावात् शाखाप्रणयनम् ॥ तत्राप्येका मूर्त्तिर्यावता वेदभागेन निरुक्ता भवति तावतोप्यध्ययनं दुर्लभमिति प्रथमतश्चतुर्धा मूर्तेश्चतुर्थांशो यावता प्रतिपाद्यते तावन्तं व्यासः पृथक् कृतवान् ॥ तस्य खण्डस्य सहस्रमूर्त्तावप्युपयोग इति स एवांश एको यावता निरुक्तः सन् ऋगादीनामेका शाखेति तथा व्यासशिष्यैः कृतामित्यर्थः ॥ २५ ॥ २६ ॥

आवरणभंगः ।

अवसरसङ्गत्या साधनैर्बहुरूपमित्यस्यार्थं वक्तुमाहुः ॥ ॥ एवं वेदमित्यादि ॥ चाहेति चकारःप्रयाजनेस्यानुष्ठानप्रकारादेश्च संग्राहकः ॥ ॥ बहुप्रकारमित्यादि ॥ ॥ तथा च यदि भगवत्त्वं यज्ञस्य नाभिप्रेयात्तदैकमेव तं नानारूपेण न ब्रूयात् ॥ एकेनैव रूपेण तस्य फलस्य सिद्धेः ॥ यद्यशक्तार्थं रूपान्तरन्तर्हि तेनैव शक्तस्य फलसिद्धेस्तदेव ब्रूयात् ॥ यदि पौष्कल्यार्थं रूपान्तरन्तर्हि तदेव फलत्वेन वदेन्नतु सर्वत्रैकम्फलं वदेत् । तस्माद्भगवन्मूर्तित्वसिद्ध्यर्थमेव तथा वदन्तीति निश्चयः ॥ ननु प्रकारबाहुल्ये कर्मणः कथमेकत्वमित्याकांक्षायाम्बहु-

प्रकारस्य कर्मण एकत्वे शाखान्तराधिकरणसिद्धार्थमुपदर्शयन्ति ॥ ॥ एक इत्यादि ॥ ॥ अयमर्थः । शाखान्तराधिकरणे नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यदर्शनाच्छाखान्तरेषु कर्मभेदः स्यादितिसूत्रेण भेदमाशंक्य "एकं वा संयोगरूपचोदनाख्याऽविशेषात्" इतिसूत्रेण सर्वशाखासु "जोतिष्टोमेन स्वर्गकामो यजेत" इति स्वर्गफलसंयोगस्य द्रव्यदेवतयोर्यजनचोदनया ज्योतिष्टोमेत्याख्यायाश्चाविशेषात्सर्वशाखाप्रत्ययमेकमेव कर्मेति व्यवस्थाप्यन् नाम्ना स्यादचोदनाभिधानत्वादित्यादिभिश्चतुर्विंशतिसूत्रैः पूर्वपक्षहेतवो निराकृताः ॥ तथाहि ॥ काठककौथुमादिनामभेदान्न कर्मभेदः ॥ तत्तच्छाखोक्ता ज्योतिष्टोमादयः शाखान्तरोक्तेभ्यस्तेभ्यो भिन्नाः काठककौथुमादिभिन्ननामवत्त्वात् ॥ ज्योतिर्ज्योतिष्टोमादिवदिति साधने हेतोः स्वरूपासिद्धत्वात् । काठकमधीत इति प्रयोगदर्शनेन काठकेन यजेतेत्याद्यदर्शनेन तेषां ग्रन्थनामतया ग्रन्थसंयोगेन कर्मणि लाक्षणिकतया च कर्मनामत्वाभावेन पक्षे हेत्वभावात् ॥ अथ काठके भवङ्काठकमिति समाख्यामाश्रित्य यौगिकत्वेन हेतुं विशेष्यार्चिकयाजुषहौत्राध्वर्यवकर्मवदिति दृष्टान्तेन भेदः साध्यते । तदप्यसङ्गतम् ॥ नानाशास्त्रमवलंधनाद्येकचिकित्सावदिति दृष्टान्तेन हेतोः साधारणत्वात् ॥ किञ्चैवं योगिकनामभेदेन कर्मभेदसाधने एकशाखोक्तानामग्निहोत्रदर्शपूर्णमासादीनामप्येकत्वेनैककर्म्यापत्तेश्च । किञ्च ॥ काठकादिसंज्ञानाम्प्रवचनानन्तरभावित्वेन ततःपूर्वमभेदात्तदनन्तरम्भेदवैरूप्यापत्तेश्च । नापि रूपभेदात् । वाचनिकत्वेन तस्यापि साधारणत्वात् "पयसा जुहोति यवैर्जुहोति विष्णुरुपांशु यष्टव्यः विश्वेदेवा उपांशु यष्टव्याः" इत्यादिषु रूपभेदेप्यग्निहोत्रोपांशुयागयोरभेदात् ॥ नापि धर्मविशेषात् । कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति नान्य इति विशेषस्याध्ययनधर्मत्वेन कर्मधर्मत्वस्यैवाभावात् ॥ नाप्यविशेषपुनर्वचनात् । एकत्र प्रकरणे बहुकृत्वः श्रवणाभावेन तस्यैवाभावात् । तच्छ्रवणेन स एवायं याग इति प्रत्यभिज्ञोदयाच्च । न च क्वाप्यग्नीषोमीयमेकादशकपालं क्वचिद्द्वादशकपालमिति गुणविशेषविधानार्थायाः पुनरुक्तेरनुवादकत्वं शंक्यम् । तथासत्येककर्मत्वस्यैव सिद्धेः । वस्तुतस्तु नानुवादकत्वं । शाखात्वानुपपत्तिप्रसङ्गात् ॥ यथा वृक्षे यावन्ति पुष्पफलपत्राणि शाखाभेदेन तत्र तत्र भवन्ति तथात्र वेदस्थं कृत्स्नं गुणकाण्डं तत्र तत्र शाखाभेदेन वर्तत इति सादृश्येन तस्य तस्य भागस्य शाखात्वव्यपदेशात् । तथा सति यथा तत्तच्छाखीयकुसुमादिषु न गुणप्रधानभावस्तथात्रापि तौल्येनानुवादा-

भावात् । नचैवं सति कर्मप्रत्यभिज्ञायाः सजातीयविषयकत्वेन कर्मभेदः शंक्यः । सिद्धान्तसूत्रोक्तयुक्तिभिस्तास्मिन्निरस्ते प्रत्यभिज्ञायाःसजातीयविषयत्वस्याशक्य शङ्कत्वात् । किञ्चैकप्रत्यविशेषपुनरुक्तौ तत्सार्थक्याय कर्मभेद आद्रियते । प्रकृते तु प्रतिपत्तृभेदान्न कर्मभेदः शंक्यः। वस्तुतस्तु प्रतिपत्तृभेदेऽपि न कर्मभेदः शक्य-शंकः। अन्यथैकमग्निहोत्रवाक्यमपि तांस्तान्प्रति प्रोच्यमानमग्निहोत्रमपि भिन्द्यात्। किञ्चासमाप्तिवचनसमाप्तिवचनाभ्यामपि कर्मैक्यम् । यथाऽन्वारोहेषु मैत्रायणीयानामग्निः समाप्यतेऽस्माकन्तु न समाप्यत इति हि वदन्ति। यदि कर्मभेदस्तदा तत्समाप्त्यसमाप्त्योर्भेदात्तत्कर्मानूद्य तेनोत्प्रेक्षयेयुः ॥ नापि निन्दातो भेदः "प्रातः प्रातरनृतन्ते वदंति पुरोदया जुह्वति येऽग्निहोत्रन्दिवाकीर्त्य यदि वा कीर्त्तयन्तःसूर्यं ज्योतिर्न तदा ज्योतिरेषाम्" इत्यनुदितहोमनिन्दाया उदिते जुहोतीति विधिसमीपे यथातिथये प्रद्रुतायान्नमाहरेयुस्तादृक् तद्यदुदिते जुह्वतीत्युदितहोमानिन्दायाश्चानुदिते जुहोतीति विधिसमीपे पाठेन तस्या विधेयस्तुत्यर्थत्वेन तयोः पक्षयोर्निन्द्यत्वाभावाद्विकल्पपर्यवसायित्वेनाभेदकत्वात्॥ नाप्यशक्तितो भेदः। तस्या इदानीन्तनेष्वेव सत्वेन पूर्वान्सर्वशाखाज्ञान् शक्तान्प्रत्यभेदकत्वात् ॥ नचैवम्प्रतिपत्रैक्यानिपातेन पुनरुक्ततापत्तिः । तस्याऽनन्तरूपबोधनार्थत्वात् । रूपाद्यभेदेन तथानिश्चयात् । नापि समाप्तेर्भेदः । दृष्टोत्तरकत्वात् ॥ आध्वर्यवसमाप्तौ ज्योतिष्टोमसमाप्तिव्यपदेशवत्किञ्चित्कर्मसमाप्तावपि तद्दर्शनाच्च । नापि प्रायश्चित्ताद्भेदः । तस्य प्रक्रमनिमित्तकत्वात् ॥ उदिते होष्यामीति प्रक्रम्यान्यथाकरण एव तद्दर्शनात् ॥ नाप्यन्यार्थदर्शनाद्भेदः । द्वादशाहे यदि पुरादिदीक्षमाणाः स्युर्यदि वैषां ग्रहपतिश्चानुसत्रिण इति ॥ अथ यद्यदीक्षमाणा इति द्वादशाहे इष्टज्योतिष्टोमानामनिष्टज्योतिष्टोमानान्दर्शनश्रुतेर्यदि दीक्षमाणा द्वादशाहेनेत्येवम्परत्वात् ॥ नचात्र मानाभावः। एतस्याः श्रुतेः सामवेदीयत्वेन सामवेदे च ज्योतिष्टोमस्याविहितत्वेन तदीयताण्ड्यब्राह्मणस्थाया "एष एवाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः । य एतेनानिष्ट्वाऽन्येन यजेत गर्तपत्यमेव तज्जायेत प्रवामीयेत" इति प्रत्यवायादिबोधिकायां श्रुतौ वेदान्तरविहितज्योतिष्टोमानुवादेन तत्प्राथम्यबोधनस्य लिङ्गस्य वेदान्तरविहितसर्वज्योतिष्टोमसाधारणतया तमनिष्ट्वा यागान्तरकरणे तस्य दोषस्यापि साधारणताया एवेष्टत्वात्कर्मभेदपक्षेप्यसमदुक्तकल्पनाया एवावश्यकत्वात् ॥ किञ्च ॥ यदि सर्वशाखाप्रत्ययमेकङ्कर्म न स्यात्तदा शाखान्तरविहितस्य शाखान्तरे गुणो न विधीयेत ॥ स च दृश्यते ॥ यथा मैत्रायणीयानां ऋतवो वै प्रयाजाः समास्तत्र होतव्या इति समत्वं गुणः श्रूयते समिधादयः प्रयाजास्तु नाम्नायन्ते

वेदनामसों प्रसिद्ध हैं॥ ऐसे विभागको सहस्रमूर्ति होयवेमें उपयोग है, यज्ञकी सहस्रमूर्तिनमें एकमूर्ति जा वेदके जितने अंशकरकें सिद्धहोयहै वो अंश वाही वेदकी शाखा कहावेहै. यार्गानिको विभाग व्यासजीके शिष्यननें कियो है ॥ २५ ॥ २६ ॥

**प्रकारभेदे पूर्वन्तु विकल्पो ह्यैच्छिको मतः ॥**
**अधुना नियतः शाखाभेदात्तत्तदधीतिषु॥२७॥**
**कर्म्मवद्ब्रह्मभेदाश्च गीयन्ते बहुधर्षिभिः ॥**
**तेषांभिन्नतया पाठे उच्छेदो भवतीति हि ॥**
**कर्मशाखागताश्चैके निर्णयः पृथगेव हि ॥२८॥**

तत्त्वदीपप्रकाशः ।

इदानीमनुष्ठाने कः प्रकारः केनानुष्ठेयः किमिच्छया व्यवस्थया वेति सन्देहे निर्णयप्रकारमाह ॥ **प्रकारभेद इति** ॥ ब्रह्मादीनामैच्छिक एव आधुनिकानां व्यवस्थित इत्यर्थः ॥ २७ ॥ पुरुषः षोढा विहित इति पञ्चात्मके कर्म्मणि निरुक्त षष्ठांशस्यापेक्षा भवति तत्प्रतिपादक-मुत्तरकाण्डं तच्च ब्रह्म तदप्यनन्तरूपमन्यथानन्तमूर्तित्वं न स्यात ॥ अतो यत्रैव पञ्चात्मके यच्छिरो भवितुं युक्तन्तत्प्रतिपादिकोपनिष-त्तत्रैव योजिता ॥ तथैव हौत्रादिकमपि ज्ञातव्यम ॥ तदेतदाह ॥ **क-र्मवद्ब्रह्मभेदा इति** ॥ इदमलौकिकम्भवतीत्यत्र प्रमाणामित्याह ॥ **गीयन्ते बहुधर्षिभिरिति** ॥ तेषामध्ययनसिद्ध्यर्थमाह ॥ **तेषामिति** ॥ तावतैव सम्पूर्णशाखाध्यायित्वं विध्यभावादुच्छेदो भवतीत्येक एवार्थः प्रयोजनं वाच्यञ्च स्यात् ॥ अन्यथा एकवाक्यता न भवेदिति तत्राह ॥ **निर्णयः पृथगेव हीति** ॥ व्यासेन कृतस्तेषाम्पाठार्थमेवैकवाक्यता निर्णय-स्तु पृथगेव व्यासेन कृतः ॥ अतो ज्ञायते वाक्यैकत्वम्प्रयोजनैकत्वञ्च काण्डद्वयस्य नास्तीति ॥ द्वितीयस्यार्थावबोधपर्यन्तमध्ययनम् । स्वाध्या-

यविधिनैव तस्यापि परिग्रहात् ॥ अन्यथा ब्रह्मणि सन्देहाभावान्निर्णयो व्यर्थः स्यात् ॥ अतः काण्डद्वयं भिन्नमपि एकत्र पठितमंशतः परस्परोपकारार्थं च । आधिभौतिकैर्यज्ञैश्चित्तशुद्धिर्वेदान्तैर्जीवस्वरूपविज्ञानमिति॥मुख्यरूपत्वसिध्यर्थन्तु पृथङ्निर्णय इति हिशब्दार्थः॥२८॥

आवरणभंगः ।

इदानीमित्यादि।ननु यागानां भगवद्रूपत्वेन साधारणत्वात्तत्प्रकाराणामपि तथात्वेन शाखाप्रणयनस्य मन्दार्थत्वेऽपि तासां प्रसिद्धत्वेन च सर्वेषां सर्वानुष्ठानप्राप्तावष्टदोषदुष्टस्यैच्छिकविकल्पस्य प्रसक्तिरिति तदभावायाधिकारिभेदोऽवश्यमभ्युपेयो यथा "वसन्ते ब्राह्मणोग्नीनादधीत" इत्यादौ । तथा सति तत्तदधिकारिणाम्फलसिद्धयै एकस्य कर्मणो बहुप्रकारत्वं नतु भगवन्मूर्तित्वसिद्धयै इत्याशयेनोक्तविधे सन्देहे पूर्वोक्तसाधनाय निर्णयमाहेत्यर्थः ॥ ॥ ब्रह्मादीनामित्यादि ॥ ॥ तथा चाष्टदोषदुष्टस्य विकल्पस्य पूर्वं सत्वान्नाधिकारिफलं कर्मभेदप्रयोजकङ्किन्तु भगवन्मूर्तित्वमेव प्रयोजकं शाखाभेदश्च मन्दार्थमेव नत्वधिकारिभेदज्ञापनार्थ इत्यर्थः ॥ एते न पूर्वन्तावता आयुषा तथानुष्ठानेनाभिव्यक्तादिरिदानीमेवमेतावत्करणेऽपि तदिति भगवतो व्यासस्य च कृपालुतापि सूचिता ज्ञेया ॥ २७ ॥ एवं पूर्वकाण्डार्थं सपरिकरन्निरूप्योत्तरकाण्डस्यैकवाक्यत्वाय तत्तच्छाखासु तत्तदुपनिषदाम्पाठे बीजमाहुः ॥ ॥ पुरुष इत्यादि ॥ ॥ तदिति ॥ ॥ उत्तरकाण्डप्रतिपाद्यमित्यर्थः ॥ एतेनोत्तरकाण्डप्रमेयमुक्तम् ॥ उक्तार्थपोषायाहुः ॥ तथैवेत्यादि॥ ॥ एकमेव ब्रह्म तत्स्वरूपमनन्तविधमिति ॥ ॥ कथन्तज्ज्ञेयमित्याद्याशङ्कायामाहुः ॥ इदमित्यादि ॥ ॥ ऋषिभिरिति ॥ उपनिषद्रूपैर्वेदवाक्यैरित्यर्थः ॥ ऋषिपदस्य वेदवाचकत्वं "तदेतदृषिः पश्यन्नवोचत्" इत्यादिश्रुतौ अत ऋषयो दधुस्त्वयि मनोवचनाचरितमिति श्रुतिगीते चोक्तम् ॥ तावतैवेति ॥ पूर्वकाण्डमात्रेणेत्यर्थः ॥ विध्यभावादिति ॥ अध्यापनाध्ययनविध्योः पूर्वकाण्डाध्ययनमात्रेणैव नैराकांक्ष्याद्वेदान्ताध्ययनाय तदतिरिक्तविध्यभावात् अर्थ इत्यस्यैव विवरणम्प्रयोजनमित्यादि ॥ अन्यथेति ॥ ॥ वाच्यप्रयोजनयोर्भेदात्तथा चोभयतःपाशारज्जुरिति भावः ॥ भिन्नवाक्यत्वमेकवाक्यत्वञ्चेति द्वयमपि समर्थयितुमाहुः ॥ तेषामित्यादि ॥ ॥ तेषामिति ॥ ॥ वेदान्तानाम् ॥ मूले कर्मशाखागता इति ॥ ॥ उपनिषद इति शेषः ॥ विवृतौ एकवाक्यतेति ॥ ॥ शाखान्तर्गतत्वं नास्तीति ॥ ॥ अतो भिन्नवाक्यत्वमेवेतिभावः ॥ उपनिषदां शाखान्तर्गतत्वस्य पूर्वोक्तम्प्रयोजनं विशदीकुर्वन्ति ॥ द्वितियस्येत्यादि ॥

द्वितीयस्येत्युत्तरकाण्डस्य ॥ अन्यथेति ॥ ॥ पाठमात्राध्ययनेनध्ययने चार्थज्ञाना-भावेनेत्यर्थः ॥ भिन्नवाक्यत्वं समर्थयित्वैकवाक्यत्वं समर्थयन्ति ॥ ॥अंशत इत्या-दि॥ ॥अंशत इति शास्त्रैकदेशात् ॥ उपकारं विवृण्वंति ॥ ॥ अधिभौतिकेत्यादि ॥ तथाच विज्ञाते जीवस्वरूपे कर्तृनित्यत्वावगत्या जन्मान्तरभाविविश्वासः कर्ममा-र्गीयस्य । वेदान्तिन उपकारस्तु स्फुट एव । अयश्च शास्त्रैकदेशजन्य एव ॥ ननु यागस्य भौतिकत्वे स्वर्लोकस्य फलत्वेनोक्तत्वात्कथञ्चित्तशुद्धेः फलत्वेन कथन-मिति चेन्न आनुषङ्गिकत्वेन तस्या अदोषात् ॥ अन्यथा देहात्मवादस्मार्तवादादि-भिरन्यथाप्रतिपत्त्या मतभेदेन विप्रतिपत्तौ संशये फलाभावप्रसङ्गादिति दिक् ॥ नन्वेवं सति स्वार्थबोधे समाम्नानामङ्गाङ्गित्वाद्यपेक्षया वाक्यानामेकवाक्यत्वम्पुनः संहत्यजायत इति प्रयोजनैक्ये भिन्नवाक्यत्वव्याघात इत्यत आहुः ॥ मुख्ये-त्यादि ॥ तथाच रूपभेदेनोभयमप्यविरुद्धमितिभावः ॥ २८ ॥

व्रजभाषाटीका ।

अभी अनुष्ठान कोनरीतिसों करनो यज्ञ तो सहस्रमूर्तिवालो है कोन मूर्तिको अनुष्ठान करनोचाहिये अथवा अपनी इच्छाके अनुसार चाहे जा शाखाके अनुसार यज्ञभगवानकी एकमूर्तिको अनुष्ठान करलेनो ऐसो सन्देह प्राप्तभयो तहाँ निर्णय करे हैं ॥ प्रकारभेद इति ॥ ब्रह्मादिक तो अपनी इच्छाके अनुसारही सहस्र-मूर्तिवाले यज्ञभगवानको अनुष्ठान करे हैं क्योंकी उननें सहस्रप्रका-रही धारणकरराखेहैं । आधुनिक जीव तो अल्पायुष्यवाले मन्द-बुद्धिवाले हैं तासों सहस्रमूर्तिनमेंसों एकही मूर्तिको अनुष्ठान कर-सकें हैं, तहाँ जाशाखाको अध्ययन परम्परासों चलो आतोहोय वा शाखामें जाप्रकारकी यज्ञमूर्तिको वर्णन होय वाके अनुसार वा यज्ञमूर्तिकोही अनुष्ठान करनो. अभीके कालमें यही नियम है पुरुषके छ अङ्ग होवें हैं, चरण २ हस्त २ (मध्यभाग) धड १ मस्तक १ उनमेंसों पांच अङ्गको तो पूर्वकाण्डमें वर्णन आयो, छठो अङ्ग जो शिर है वाको प्रतिपादन करवेवारे उत्तरकाण्डको उपनिषद्भाग है.

जैसे पूर्वकाण्डोक्त पांच अङ्ग अनन्तरूप हैं तैसेंही उत्तरकाण्ड वेदान्तमें वर्णन कियो जो ब्रह्म है वोभी अनन्तरूप है अर्थात् जैसें हस्तपादादिक हजारन हैं वैसे मस्तकभी हजारन हैं ॥ २७ ॥ कर्मवदिति ॥ ये अलौकिक है जैसे न्यारी २ शाखानकरके कर्मके अनेक भेद हैं तैसें न्यारे २ उपनिषदनमें ब्रह्मभी अनन्तरूपवालो प्रतिपादन कियोहै । केवल पूर्वकाण्डके अध्ययनमात्रसों अपनी सम्पूर्णशाखाको अध्ययन भयो नहिंकहावेहैं, जो ऐसें होय तो उत्तरकाण्डात्मक उपनिषदनके अध्यनकी न्यारी विधि नहिंहोयवेके कारणसों कोईभी उपनिषदनकों नहिं पढेंगे तो उपनिषदनको ( उच्छेद ) तिरोभाव होयजायगो तासों दोनों काण्डनको एकही प्रयोजन कहनो चाहिये अन्यथा एकवाक्यता नहोयगी और वेदभी दोनोंकाण्डकोही नाम है ॥ २८ ॥

**असन्दिग्धोऽपि वेदार्थः स्थूणाखननवत्कृतः॥**
**मीमांसानिर्णयैः प्राज्ञैर्दुर्बुद्धेस्तु ततो द्वयम्॥२९**
**जैमिनिः कर्मतत्त्वज्ञो निर्णयम्पूर्व उक्तवान्॥**
**व्यासः स्वयं हि सर्वज्ञ उत्तरे निर्णयं जगौ॥३०॥**

तत्त्वदीपप्रकाशः ।

नन्वर्थावबोधेनैव निःसन्देहो जात इति किं निर्णयेन अर्थार्थावबोधेन सन्देहनिवृत्तिस्तदा दुष्टा परम्परा स्यादित्याशंक्याह ॥ **असन्दिग्धोपीति** ॥ पाठदशायां यद्यपि न सन्देहस्तथापि कालान्तरे सन्देहो भविष्यतीति लक्षणकरणवन्मीमांसाकरणं॥ तत्र लौकिको दृष्टान्तः ॥ **स्थूणाखननवदिति** ॥ स्थूणा निखातापि पुनरुद्धृत्य निखात्यते तथा निःसन्दिग्धोऽपि सन्देहमापद्य दार्ढ्याय निरूप्यते मीमांसानि-

र्णयकारैः॥ इदमुत्तमम्प्रति तेषाम्प्रयोजनं सफलं भवति ॥ मन्दमध्यमान्प्रति तु सन्देहाभावो दार्ढ्यं चेति द्वयम् ॥ २९ ॥ तत्र निर्णयकर्तारमाह ॥ जैमिनिरिति ॥ कर्मज्ञानं निर्णयकरणे हेतुः॥ उत्तरत्र व्यासः ॥ असर्वज्ञेन तन्निर्णयः कर्तुमशक्य इति सर्वज्ञो व्यास उत्तरत्र कर्त्ता ॥ ३० ॥

आवरणभंगः ।

मीमांसयोः सार्थकत्वबोधनाय किञ्चिदाशंक्य परिहरन्ति ॥ नन्वित्यादि ॥ अंगादिविचारेणैव काण्डद्वयात्मको वेदो निःसन्देहो जात इति निर्णयेन जैमिनिना व्यासैश्च कृतेन तेन किमित्यर्थः॥ लक्षणकरणवदिति ॥ लक्षणग्रन्थस्य प्रातिशाख्यादेः करणवदित्यर्थः ॥ तथाच सन्देहनिराकरणार्थं मीमांसाकरणमावश्यकमितिभावः॥ इदञ्च ब्रह्मसूत्रभाष्ये प्रथमाधिकरणसिद्धान्ते सम्यक्तया प्रपञ्चितम् ॥ २९ ॥ व्यासोक्तस्य बलिष्ठत्वज्ञापनाय निर्णयकर्त्रोंस्तारतम्यं ज्ञापयन्त आहुः ॥ तत्रेत्यादि ॥ ॥ करण इति ॥ ॥ निर्णयकरणे ॥ कर्मज्ञानमित्यादि ॥ ॥ एतेन मीमांसयोः प्रमाणप्रमेयसाधनफलैः प्रमेयबलं सूचितम् ॥ यद्वैदिकं बलन्तदेव बलमिति ॥ ३० ॥

ब्रजभाषाटिका ।

पूर्वकाण्डकेसाथ उत्तरकाण्डको अध्ययन होयवेकेलिये दोनोंकाण्डनकी एकवाक्यता है-निर्णय तो उत्तरकाण्डको व्यासजीनें न्यारोही कियो है तासों प्रयोजन न्यारो है तथा वाक्यभेदभी है ॥ परन्तु ( स्वाध्यायोऽध्येतव्यः ) इत्यादिश्रुतिमें वेदके अध्ययनमें उपनिषदनकोभी ग्रहण है तासों उत्तरकाण्डकोभी अर्थज्ञानपर्यन्त अध्ययन करनो,जो अर्थ जानेविना पाठमात्रसोंही अध्ययन सिद्ध होयजातोहोय तो मूलके पाठमें कोईकूँभीँसन्देह नहिं होयगो तब तो ब्रह्मसूत्रनकेद्वारा कियो भयो निर्णय व्यर्थही जायगो तासों उपनिषदनको अर्थसहित पढनों।दोनों काण्ड भिन्न हैं परन्तु एकही स्थानमें पढे हैं सो एकदेशकेद्वारा परस्पर उपकार होयवेकेलिये पढे हैं अर्थात् वेदान्तकेद्वारा जीव नित्य है ऐसो ज्ञान होय तब दूसरे

जन्ममें स्वर्गादिकप्राप्ति होयवेकेलिये यज्ञादिकर्ममें विश्वास होय यहही वेदान्तको पूर्वकाण्डमें उपकार है।।ऐसेंही आधिभौतिकयज्ञन करके आनुषङ्गिक चित्तशुद्धि होय तब वेदान्तको ज्ञान स्थिर होय येही पूर्वकाण्डको वेदान्तमें उपकार है तथापि उपनिषदनको मुख्यार्थ नाहिं सिद्धभयो तब व्यासजीनें ब्रह्मसूत्र बनायके मुख्यार्थ सिद्ध करवेकेलिये न्यारो निर्णय कियो ।। प्रश्न—अर्थज्ञानसोंही वेदको सन्देह दूरहोजायगो जैमिनिऋषि तथा व्यासजीनें दोनोंमीमांसासूत्र क्यों बनाये उत्तर—पाठसमयमें सन्देह नाहिं है तथापि कालान्तरमें सन्देह आवश्य होयगो तब प्रातिशाख्यभाष्यद्वारा जैसें शब्दनके सन्देह दूरकियेजाय हैं तैसें अर्थको सन्देह मीमांसाद्वारा दूर होयगो ।। गाडीभईभी थूणी दृढताकेलिये फिर उखाडके गाडीजावे है ऐसेंही उत्तमाधिकारीनके हृदयमें निःसन्देह वेदार्थ है तामेंभी सन्देह उत्पन्नकरके दृढता होयवेकेलिये सूत्रनद्वारा निर्णयकारननें निर्णय कियोहै और जिनके हृदयमें सन्देह है ऐसे जे हीनाधिकारी तथा मध्यमाधिकारी उनके तो सन्देह मीमांसासूत्रनके द्वाराही दूरहोयहैं तथा दृढताभी होयहै ।। २९ ।। जैमिनि कर्मतत्वके जानववारे हैं तासोंपूर्व काण्डको निर्णय जैमिनिऋषिनें कियो और व्यासजी सर्वज्ञ हैं तासों उत्तरकाण्डको निर्णय व्यासजीने पोतेही कियो है ।। ३० ।।

उभयोर्हि परिज्ञाने सर्ववेदार्थनिर्णयः ।। निर्णयो बहुभिर्नष्टःपश्चाद्वक्ष्ये तयोर्गतिम् ।। ३१ ।।
पुरुषो विहितः षोढा करौ पादौ शिरोन्तरम् ।।
शिरो ब्रह्म हरिः पूर्वं यज्ञः पञ्चविधः स्वयम् ।।
अनन्तमूर्तिर्भगवान् तेन शाखास्तथा कृताः ३२

तत्त्वदीपप्रकाशः ।

अतः सर्ववेदार्थज्ञानायोभयं ज्ञातव्यमित्याह ॥ उभयोर्हीति ॥ ननु निर्णायके विद्यमाने कथं वेदार्थाज्ञानङ्कथं वा भगवद्भजनमिति तत्राह ॥ निर्णयो बहुभिर्नष्ट इति ॥ अन्यथा व्याख्यातृभिः श्रुतिसूत्रमविचार्य स्वेच्छया वदद्भिः ॥ तर्हि कथन्निस्तारस्तत्राह ॥ पश्चादिति ॥ गतिमुद्धारप्रकारम् ॥ ३१ ॥ उपसंहरन् पूर्वोक्तमर्थं स्पष्टमाह ॥ पुरुष इति ॥ षोढा षट्प्रकारः ॥ अन्तरं मध्यं तत्र षट्सु शिरो-ब्रह्म ॥ सम्पूर्णः पुरुषोऽनन्तमूर्तिस्तेनानन्ताः शाखाः कृता इति सर्वो वेदः प्रमाणम् ॥ ३२ ॥ इति श्रुतिप्रकरणम् ॥

आवरणभंगः ।

॥ पश्चादिति ॥ ॥ उत्तरग्रन्थे वर्णाश्रमवतान्धर्म इत्यत्र ज्ञाने यर्हीत्यत्र च यथायथं वक्ष्यत इत्यर्थः॥३१॥ ॥ पूर्वोक्तमर्थमिति ॥ ॥ यज्ञस्य भगवद्रूपत्वरूपम्पूर्वकाण्डीयम्ब्रह्मणो हरित्वरूपमुत्तरकाण्डीयञ्चेत्यर्थः ॥ ॥ षोढेत्यादि ॥ तथाचाग्निहोत्रदर्शपूर्णमासौ करौ । पशुचातुर्मास्ययागौ पादौ । सोमो मध्यम् । अत्राऽपि श्रुतिर्द्रष्टव्या शाखान्तरे ॥ शिरो ब्रह्मेति ऋचाम्मूर्द्धानं यजुषामुत्तमाङ्गम् । साम्नां शिरोऽथर्वणां मुण्डमिति कौषीतकिश्रुतेरित्यर्थः ॥ अत्र पूर्वकाण्डप्रमेयविचार इदं सिद्धम् । यज्ञोभगवदात्मकः क्रियारूपः प्रमेयन्तदभिव्यञ्जिका लौकिकी क्रिया साऽपि वेदान्तोक्तज्ञानसहितैव तथेति मर्यादायां ज्ञानकर्मसमुच्चय एवेति साधनम् । तथाच मुक्तसङ्गोनहम्वादीतिलक्षणकः सात्विकः कर्त्ता सर्वभूतेषु येनैकमिति सात्विकज्ञानयुक्तफलाकांक्षिभिर्यज्ञ इत्युक्तप्रकारेण सात्विकं यज्ञङ्करोति तदा स्वाज्ञाकरणसन्तुष्टेन भगवता यज्ञरूपाभिव्यक्तिद्वारा क्रममुक्तिर्दीयते । अतिकृपया तु सद्योमुक्तिः । अत्र यथायथं यज्ञाभिव्यक्तिः । कृपा च द्वारभूता । सात्विकज्ञानाभावे पृथक्त्वेन तु यज्ज्ञानमिति राजसज्ञानवांश्चेत्सात्विकः सात्विकं यागङ्करोति तदा नित्यकर्मणामाध्यात्मिकत्वे फलाकांक्षाराहित्येन यथोक्तकर्मकरणात्कर्मसचिवानान्देवानान्तोषद्वारा वाक्यशेषोक्तमात्मसुखं योगिनामिव यथासङ्कल्पम्भवति ॥ तत्र देवताप्रीतिर्वा द्रव्येण प्रीता देवतैव वा व्यापारः। राजसज्ञानवान् रागी कर्मफलप्रेप्सुरितिलक्षणको राजसश्चेत् अभिसन्धाय तु फलमिति लक्षणकं राजसं यागं करोति तदा यागस्य भौतिकत्वे स्वर्लोकोऽपूर्व-

द्वारा भवति ॥ तत्रापूर्वमेव व्यापार इति सव्यापारम्फलमिति सिद्धमाहुः ॥ ॥ सम्पूर्ण इत्यादि ॥प्रमाणमिति ॥ स्वोक्तार्थस्य भगवद्रूपत्वप्रमाजनक इत्यर्थः ॥३२॥

व्रजभाषाटीका ।

वेदान्तनिर्णय अल्पज्ञ नहिंकरसकेंहै तासों सर्वज्ञ वेदव्यासजीनें उत्तरकाण्डको निर्णय कियो तासों समस्तवेदको अर्थ जानने केलिये दोनों मीमांसासूत्रनको ज्ञान आवश्यक है ॥ शङ्का—निर्णयकरवेवारे सूत्र विद्यमान हैं फिर जीवनकूँ वेदार्थज्ञान तथा भगवान्के भजनमें प्रवृत्ति क्यों नहिं होय है. उत्तर— "निर्णयो बहुभिर्नष्टः" इति श्रुतिसूत्रको तात्पर्य विनाविचारे स्वेच्छासों व्याख्यान करवेवालेननें निर्णय बिगाडदियोहै तब अभीके मनुष्यनको कैसें निस्तार होय तहाँ निस्तारहोयवेके प्रकार आगे "वर्णाश्रमवतान्धर्मः" इत्यादिश्लोकनमें कहेंगे ॥ ३१ ॥ अङ्गनकूँ स्पष्ट कहेंहैं । दर्शपूर्णमास दोनों हस्त हैं, पशुयज्ञ चातुर्मास्य दोनों चरण हैं, सोमयज्ञ मध्यभाग ( धड ) है, ब्रह्मरूप हरि मस्तक है, ये सम्पूर्ण पुरुष अनन्तमूर्तिवालो है तासों अनन्तशाखा हैं याहीसों सब वेद प्रमाण है ॥ इति वेदनिर्णयः ॥ ३२ ॥

## अथ स्मृतिप्रकरणम् ॥

**स्मृतिर्बहुविधा प्रोक्ता वेदाचारविभेदतः ॥**
**ऋषीणां पूर्वचरितस्मरणं स्मृतिरुच्यते ॥३३॥**
**तदाचाराल्लोकतश्च न्यायान्नित्यानुमेयतः ॥**
**प्रवृत्तिर्जीविका लोके व्यवहारो विशुद्धता ॥३४॥**

तत्त्वदीपप्रकाशः ।

एवं वेदान्निर्णीय स्मृतिनिर्णयमाह ॥स्मृतिर्बहुविधेति॥ वेदवन्न स्मृतिनिर्णयः॥ वेदे हि पञ्चात्मको द्विरूपः षडङ्गसहितो निरूपितः॥ न तथा

स्मृतिः ॥ किन्तु बहुविधा ॥ अत्र वेदोपि मूलं व्यवहारोपीति तदाह ॥ वेदाचारविभेदत इति ॥ स्मृतेर्लक्षणमाह ॥ ऋषीणामिति ॥ स्मरणं स्मृतिः ॥३ ३॥ तस्य स्मरणस्यानुभव एव मूलम् ॥ स त्वनुभवो बहुधा-जायत इत्याह ॥ तदाचारादिति ॥ पूर्वकल्पे यथाचारः स्थितः।ऋषीणां यथा वा लोकव्यवहारस्तत्रापि देशभेदेन यो देशाचारो येन ऋषिणा स्मृतस्तेन तथोपनिबद्ध इति चकारार्थः ॥न्यायोऽपि मूलं सोऽपि पूर्वकल्पास्थितः ॥ एते त्रयोऽपि व्यवहारोपयोगिनः ॥ धर्मोपयोगिनीं स्मृतिमाह ॥ नित्यानुमेयत इति ॥ योगबलेन नित्यानुमेयवेदं स्मृत्वा यदवादिषुस्तदवश्यकृत्यम् ॥ चतुर्णाम्फलमाह ॥ प्रवृत्तिरिति ॥ आचाराल्लोके प्रवृत्तिः प्रकर्षेण स्थितिर्भवति लोकानुसारेण जीविका भवति ॥ न्यायेन व्यवहारः ॥ नित्यानुमेयवेदोक्तेन विशुद्धता भवति ॥ अनेनैव वेदार्थे तस्या उपयोगः ॥ ननु प्रत्यक्ष एव वेदो मूलमस्तु किन्नित्यानुमेयवेदेन अनुपलब्धेरिति चेदुच्छन्नशाखाप्रच्छन्नशाखा वा मूलम्भविष्यतीति मैवम् ॥ व्यासादिभिरपि सर्ववेदद्रष्टृभिरप्यनुमानत्वेन निरूपणात् ॥ " अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् " इति प्रत्यक्षवेदमूलत्वेनानुमानम्भवेत् ॥ अतः स्मृत्यानुमेय एव वेदो भवतीति नित्यानुमेय एव वेदो मूलम् ॥ अन्यथा वेदव्यासः "स्मृतिश्च " इति न वदेत् ॥ विद्यमाने प्रत्यक्षे वेदे किमिति ध्वनारिनामुदाहरेत् ॥ ३ ४ ॥

आवरणभंगः ।

एवम्बलनिश्चायनार्थं वेदा इति प्रमाणमध्ये प्रथमोद्दिष्टस्य वेदस्य पूर्वकाण्डप्रमेयभूतो विषयो निर्णीतः । अतःपरं श्रीकृष्णवाक्यानि निर्णतव्यानि ॥ तेषाञ्च पूर्वं स्मृतित्वेनोक्तत्वाद्वेदनिर्णायकत्वार्थं स्मृत्यन्तरापेक्षयोत्कृष्टत्वञ्च वक्तव्यम् ॥ अविरुद्धन्तु यत्त्वस्येति ।"द्वापरादौ तु धर्मस्य" इति पूर्वोक्तमपि विशदीकरिष्यन्तः स्मार्त्तप्रमेयबलनिश्चायनाय स्मृतिन्निर्णिनीषन्ति ॥ एवमित्यादि । ननु स्मृतिनिर्णयो न पार्थक्येन कर्त्तव्यस्तासां वेदमूलकत्वात्तन्निर्णयादिशा स्मृतिनिर्ण-

यस्यापि सिद्धेरित्यत आहुः ॥ ॥ वेदवन्नेत्यादि ॥ ॥ कथम्बहुधेत्याकांक्षायां हेतुमाहुः ॥ ॥ अत्रेत्यादि ॥ ॥ आचारमूलकत्वं वैसर्जनाधिकरणाज्ज्ञेयम् । तथाच न वेदार्थनिर्णयेनैतान्निर्णयसिद्धिरिति पृथङ्निर्णय आवश्यक इत्यर्थः ॥ ॥ स्मृतेरित्यादि ॥ ॥ स्मृतीनामुभयमूलकत्वं बोधयितुन्तल्लक्षणमाहेत्यर्थः ॥ ॥ ऋषीणामिति ॥ ॥ कर्तृषष्ठी तेन ऋषिकर्तृकम्पूर्वाचारस्मरणप्रयुक्तं वाक्यं स्मृतिरित्यर्थः ॥ इति प्रमाणस्वरूपमुक्तम् ॥ एतेन "स्वयम्भूरेषभगवान्वेदो गीतस्त्वया पुरा। शिवाद्या ऋषिपर्यन्ताः स्मर्त्तारोऽस्य न कारकाः" इति "न केचिद्वेदकर्तारो वेदं स्मृत्वा चतुर्मुखः" इति देवीपुराणपराशरस्मृत्योर्वाक्याद्वेदस्यापि स्मृतिगोचरत्वेन स्मृतित्वप्रसक्तिर्निरस्ता तत्र शब्दस्यैव स्मृतिगोचरत्वात् स्मृतौ त्वर्थस्य तथात्वादिति ॥ ३३ ॥ तत्रापीत्यादि ॥ एतेन स्मृत्यंशविशेषाणामितरेतरविरोधः परिहृतः ॥ तत्तद्देशविशेषाचारे तस्य तस्य सावकाशत्वेन व्यवस्थितत्वादविरोधात् ॥ यथावर्णव्यवस्थितदशद्वादशपञ्चदशाहमासाशौचसर्वसाधरणदशाहाशौचपक्षयोः ॥ न्याय इति ॥ ब्राह्मवाहदन्तकपौरन्दरबार्हस्पत्यौशनसप्राचेतसादिरूपन्नीतिशास्त्रम् ॥ एते त्रय इति ॥ आचारलोकन्यायाः व्यवहारोपयोगिनो व्यवहाराध्यायमूलभूतत्वात्तथेत्यर्थः ॥ धर्मोपयोगिनीमिति । गृह्यसूत्राचारप्रायश्चित्ताध्यायरूपां यागाद्युपयोगिनोमित्यर्थः ॥ तस्याःकुत एवम्भाव इत्याकांक्षायामाहुः ॥ योगेत्यादि ॥ प्रकर्षेण स्थितिरिति ॥ तद्विषयत्वेन वक्ष्यमाणानां व्रततीर्थगत्यादिकर्मणाम्प्रवाह इत्यर्थः ॥ ॥ अनेनैवेति ॥ विशुद्धिजनकत्वेनैव ॥ ॥ उपयोग इति ॥ ॥ साक्षादुपकारकत्वम् ॥ उत्सन्नप्रच्छन्नविप्रकीर्णशाखामूलकत्ववादिनिरासाय किञ्चिदाशङ्कन्ते ॥ ॥ नन्वित्यादि ॥ अयमर्थः । धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति स्मृत्यधिकरणपूर्वपक्षसूत्र अचोदनामूलस्य स्मृतिवाक्यस्यानादरणीयत्वमुक्तम् ॥ तत्र कथमचोदनामूलत्वमित्याकांक्षायाङ्किन्तेषां प्रत्यक्षचोदनामूलत्वमुतोत्सन्नचोदनामूलत्वमथवा प्रच्छन्नचोदनामूलत्वमाहोस्विन्नित्यानुमेयतन्मूलत्वङ्किंवा विप्रकीर्णतन्मूलत्वमिति विमर्शे भाट्टाः ॥ नाद्यस्तदनुपलम्भात् ॥ उपलभ्यमानत्वे स्मृतिप्रणयनवैयर्थ्यापातात् ॥ न द्वितीयः ॥ स्मार्त्तमूलश्रुतिसङ्घातात्मकशाखोत्सादाङ्गीकारे सहस्रसामशाखा एकशतमध्वर्युशाखा एकविंशतिशाखम्बह्वृचमित्यादिशाखापरिमाणस्य महाभाष्यादिप्रसिद्धत्वेन तदतिरिक्तभावनिश्चयात्तासाञ्च सदा प्रसिद्धतया उत्सादस्याशक्यवचनत्वात् ॥ अध्येतॄणामत्यन्तावहितत्वेनसर्वशाखागततावन्मात्रश्रुत्युत्सादाङ्गीकारस्याप्यशक्यवचनत्वाच्च ॥ न तृतीयः ।

गणनाप्रसिद्ध्यैव प्रच्छन्नत्वनिरासात् ॥ न तुरीयः अन्धपरम्परापत्तेः ॥ नच लि-
ङ्गादिभिः श्रुत्यनुमानवत्स्मृत्या श्रुत्यनुमाने कोऽपि न दोष इति वाच्यम् ॥ लिङ्गा-
दीनां श्रौतत्वेन स्मृतीनाञ्च पौरुषेयत्वेन पुरुषदोषशङ्काकलङ्कितया तद्वैषम्यात् ॥
किञ्च ॥ स्मरणस्यानुभवसमानाकारविषयत्वनियमेन अष्टका कर्त्तव्येति स्मृत्या
अष्टकाकर्त्तव्यताज्ञानं स्मृतिकारस्यानुमेयन्तेन तादृशश्रुतिस्वरूपं तेन श्रुतिज्ञान-
ञ्च कल्पयित्वा स्मृतिप्रामाण्यं साधनीयमिति गौरवप्रयासबाहुल्यम् ॥ गुरुमते
ज्ञानमात्रस्य स्वतःप्रामाण्यादनुमानस्यार्थमात्रे पर्यवसानान्न श्रुतिकल्पनपर्य-
न्तस्य प्रसर इत्यपि । तस्माद्विप्रकीर्णशाखामूलत्वं स्मृतीनां युक्तम् ॥ विप्रकीर्ण-
त्वञ्च भिन्नदेशपठितत्वम् । तच्च परप्रकरणपठितत्वम् । आरभ्याधीतमिति यावत् ॥
तथाच नित्यानुमेयपक्षेन्धपरम्परया रूपनिर्णयवत्स्मृतिप्रमेयमूलनिर्णयो न
कथमपि शक्यवचन इति विप्रकीर्णपक्ष एव साधीयानित्याहुः ॥ तदेतदुक्तम् ॥
अनुपलब्धेरिति ॥ सिद्धान्तमाहुः ॥ मैवमित्यादि ॥ ॥ अनुमानत्वेनेति ॥
अत्र कर्मव्युत्पत्तिः ॥ अनुमेयत्वेन वेदस्येत्यर्थः ॥ स्मृतीनामनुमानत्वेनेति वा ।
तदर्थन्द्वादशलक्षणीस्मृतिपादस्थद्वितीयसूत्रं प्रमाणत्वेनाहुः ॥ ॥ अपि वेत्या-
दि ॥ ॥ नानुमानम्भवेदिति ॥ जैमिनेरितिशेषः ॥ तथा च तथासतिप्रमाणं
विप्रकीर्णं स्यादित्येव वदेत् ॥ अन्धपरम्परात्वं योगबलेनेत्यादिना प्रागेव नि-
रस्तम् । एतेन सूत्रोपन्यासेन स्मृतिपादोक्तरीत्या स्मृतीनाम्प्रामाण्यमपि स्मारितं
ज्ञेयम् ॥ ननु स सामग इति तस्य वेदान्तराज्ञानं सम्भाव्यत इत्याशङ्कायामाहुः ॥
॥ अन्यथेत्यादि ॥ ॥ अन्यथा दाशकितवादिश्रुतिवदनुभवे ॥ ॥ द्व्यन्तरि-
तामिति ॥ ॥ धर्मादिविषया स्मृतिस्तदनुभवजन्या स्मृतित्वात् स्मृत्यन्तरव-
दित्यादिनानुभवानुमाने तेन च तादृशार्थानुमानमिति स्मृतिः ॥ श्रुतिमपेक्ष्य
द्वाभ्यामनुभवार्थाभ्यामन्तरिता भवतीति तथेत्यर्थः ॥ नच वेदमेव स्मृत्वा तदर्थ-
स्योपनिबद्धुं शक्यत्वादेकान्तरितत्वमेव न द्व्यन्तरितत्वमिति शक्यं योगबलेन
वेदमनुभूय तत्कथनस्यापि शक्यवचनत्वेन तस्य भागस्य स्मृति त्वोच्छेदप्र-
सङ्गात् ॥ अतो नित्यानुमेयवेदमूलत्वमेव साधीय इति निश्चयः ॥ अत एव पिताम-
हस्मृतिर्विष्णुस्मृतिश्च युज्यते ॥ ३४ ॥

व्रजभाषाटीका ।

॥ श्रीकृष्णाय नमः ॥ अथ वेदार्थको निर्णय करके स्मृतिनको
निर्णय करें हैं । वेदके निर्णयमें स्मृतिको गतार्थ नहिंहोयमकेंहै

वेदमें तो अग्निहोत्र पूर्णमास पशु चातुर्मास्य सोमयाग इन भेद-नकरके पञ्चात्मक तथा प्रकृतिविकृतिभेदकरके दोरूपवाले षडङ्ग-साधनसहित भगवान्को वर्णन है ऐसें स्मृतिको निर्णय नहिं है किन्तु स्मृति बहुतप्रकारकी हैं। स्मृतिनमें वेदभी मूल है और व्य-वहारभी मूल है, वेदके तथा सदाचारके भेदकरकें स्मृति बहुतप्र-कारकी है. स्मृतिके लक्षण कहतहैं॥ ऋषीणामिति॥ऋषिलोगन-नें पहिलीके आचारनको स्मरण करकें जो वाक्य हैं उनको नाम स्मृति है तहाँ यह नियम है जाको अनुभव होयहै ताकोही स्मरण होय॥ ३३॥ अनुभव अनेकप्रकारको है ॥ पूर्वकल्पमें ऋषिन-को जैसो आचार हतो जैसो लोकको व्यवहार हतो न्यारे २ देश-नके न्यारे २ जैसे आचार हते जा ऋषिनें जैसो अनुभव कियो हतो वाकूँ वैसोही स्मरण आयो वा ऋषिनें वैसोही अपनी स्मृ-तिमें वर्णन कियो यासों जिनआचारनमें परस्परविरोध दीखेहै उ-नकी देशभेदकरके व्यवस्था समुझलेनी॥ जैसें कितनेक स्मृतिवा-क्यनमें तो ब्राह्मणकूँ दशदिनको क्षत्रियकूँ बारहदिनको वैश्यकूँ पञ्चदशदिनको शूद्रकूँ महिनाभरको सूतक लिखेहैं, कितनेक वा-क्यनमें सबही वर्णके मनुष्यकेलिये दशदिनको सूतक लिखेहैं ऐसे स्थलमें देशभेदकरकें व्यवस्था करलेनी, अर्थात् जादेशमें पूर्वकालमें जैसो अशौचको प्रचार हतो वा देशवासीनके लिये ऋषिननें वैसोही अशौच वर्णनकियो॥ तात्पर्य यह है कि दोनोंपक्ष स्मृतिमें लिखेहैं तासों दोनोंही पक्ष प्रमाण हैं। जा देशमें सर्ववर्णमें दशदिनके अशौचको प्रचार होय वाहीदेशकेलिये वा वाक्यको समुझनो, जा देशमें चारोंवर्णनमें न्यारो २ अशौच प्रचलित है वादेशमें दशदिन द्वादशदिन पञ्चदशदिन मास-

मात्रके अशौच निरूपणकरवेवारे वाक्यनकरकें व्यवस्था समुझनी॥ ऐसेंही न्यायशास्त्रभी स्मृतिनको मूल है अर्थात् चन्द्र बृहस्पति शुक्र आदि देवतानको कियोभयो नीतिशास्त्रभी स्मृतिको मूल है। आचार लोकव्यवहार न्याय ये तीनों व्यवहाराध्यायके मूलभूत हैं तासों व्यवहारके उपयोगी हैं। धर्ममें उपयोगवारी स्मृतिको वर्णन करें हैं, योगके द्वारा नित्यानुमेयवेदको स्मरण करकें ऋषिननें जो बात कहीहै वाकूं अवश्यकरवेयोग्य समुझनी। जैसें गृह्यसूत्र आचारप्रायश्चित्ताध्यायादिरूप जो स्मृति है वाकूं यज्ञादिकनके उपयोगी होयवेसों धर्मोपयोगिनी समुझनी. इनचारोंके फलको वर्णन करें हैं॥ आचारसों लोकमें प्रवृत्ति होवेहै प्रकर्षकरके स्थिति होवे है अर्थात् व्रत तीर्थगमनादिकर्मनको प्रवाह होवेहै॥ लोक व्यवहार मूलक स्मृतिके अनुसार बर्तावकरवेसों जीविका होवे है॥ नीतिशास्त्रमूलकस्मृतिके अनुसार बर्ताव करवेसों व्यवहार चले है॥नित्यानुमेयवेदोक्तस्मृतिके अनुसार आचरणकरवेसों चित्त शुद्ध होयहै॥चित्त शुद्धकरवेवारी है ताहीसों यह स्मृति वेदार्थमें साक्षात उपकार करवेवारी है ॥शङ्का—जिन स्मृतिनमें आचारप्रायश्चित्तादिक लिखेहैं उनस्मृतिनको ऋषिननें प्रत्यक्ष विद्यमान जो वेद है वाहीके अनुसार वर्णन कियो है एसो माननो ॥ उत्तर—एसें होयतो स्मृतिनमें जैसे आचारप्रायश्चित्तादिक लिखेहैं वैसेही प्रत्यक्ष वेदमें लिखेदीखनें चाहिये सो नहिं दीखेहै तासों नित्यानुमेयवेदको स्मरण करकेंही स्मृतिको वर्णन कियोहै एसें माननो ॥शङ्का—उच्छिन्न प्रच्छन्न अर्थात् लुप्त होगई जो वेदकी शाखा उनको स्मरणकरकें स्मृति बनाईहै ऐसे माननो॥ उत्तर॥ व्यासजीकूं आदिलेके सम्पूर्णवेदकूं जानवेवारे जे जैमिनि आदि ऋषि हैं उननेंभी

आचारनिरूपक स्मृतिनकूँ अनुमानरूप मानीहै। स्मृतिनके द्वारा वेदकूँ अनुमेय मान्योहै ॥ जो कदाचित् प्रत्यक्ष वेदही स्मृतिनको मूल होय तो स्मृतिनकूँ अनुमान रूप क्यों मानते याविषयमें जैमिनिकृतपूर्वमीमांसाके स्मृतिपादको दूसरो सूत्र (अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्) यह प्रमाण है तासों आचारप्रायश्चित्ताध्यायादिरूप स्मृतिनसों अनुमेय वेद एक जुदोही है वहही नित्यानुमेय वेद है वह वेदही स्मृतिनको मूल है. यदि ऐसें नहीं होय तो वेदव्यासजी "स्मृतेश्च" यह सूत्र नहिं बनावते क्योंकी वेदको मनुआदिऋषिननें योगबलसों अनुभव करकें वाही अनुभवको अपने बनाये मनुस्मृतिआदि ग्रन्थनमें वर्णनकियोहोय तो उनग्रन्थनको स्मृतिपणो नहिंबनसकेगो. अनुभवरूपता होजायगी तथा प्रत्यक्षविद्यमान वेदकेही अनुसार स्मृतिनमें वर्णन होय तो प्रत्यक्षवेद विद्यमानही है "द्व्यन्तरिताम्" दोय जामें व्यवधान ऐसी स्मृतिको व्यासजी क्यों नाम लेते अर्थात् स्मृति वेदकी अपेक्षा अनुभव और अर्थ इन दोनोंकरकें व्यवधानवाली होवेहै याको विस्तार याश्लोकके आवरणभङ्गमें लिख्योहै ॥ तात्पर्य यह है जो आचारप्रायश्चित्तादि वर्णनकरवेवारी स्मृति है उनको वेदमूलक नहिं मानेंहैं तबतो अप्रामाणिक होजायगी क्योंकि जैमिनिऋषिनें "धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्" या स्मृत्यधिकरणके सूत्रमें वेदविधिमूलक जे स्मृतिवाक्य नहिं हैं उनकूँ आदरणीय नहिं राखें हैं और जो प्रत्यक्ष वेद विधिमूलक मानेंहै तो प्रत्यक्षविद्यमान वेदसोंही कार्य होजायगो स्मृतिनको बनावनों वृथा होयहै तासों अनुभवविना स्मरण नहिंहोयहै यह नियम है यासों जा अनुभ-

वको स्मरण करकें मनुस्मृति आदि बनीहैं वह अनुभव नित्यानुमेय वेदरूपही है ॥ ३४ ॥

**संवादे चान्यशेषत्वान्न स्मृत्यर्थं स्पृशेच्छ्रुतिः ॥ गृहादिरिव देहस्य धर्मस्योपकृतिः स्मृतिः ॥ उभयोः समवाये तु धर्मः पुष्टो न चान्यथा ॥ ३५ ॥ गर्भाधानादिसंस्काराः सन्ध्योपास्त्यादिकन्तथा ॥ नित्यश्राद्धादिकर्माणि पाकयज्ञादिकन्तथा ॥ ३६ ॥ प्रायश्चित्तमिति ह्येष पञ्चधा धर्मसंग्रहः ॥ नित्यानुमेयवेदस्तु मूलम्पञ्चविधस्य हि ॥ ३७ ॥**

तत्त्वदीपप्रकाशः ।

ननु दृश्यते स्मृतिसम्वादी वेदभागः । यथा " धन्वन्निव प्रपा असि " " नाप्सु मूत्रपुरीषङ्कुर्यात् " " न विवसनः स्नायात् " इत्यादि तत्राह ॥ संवादे चान्यशेषत्वादिति ॥ वेदेहि प्रकरणं सर्वत्र नियामकम् ॥ " तस्मादाहिताग्निर्नानृतं वदेत् " इति॥नहि आहिताग्नेरनृतनिषेधकं सर्वेषां भवति ॥ नाप्यबीष्टकोपधानकर्त्तुः ॥ जले निष्ठीवनादिनिषेधः सर्वेषाम्भवति ॥ नापि प्रपाया लोकसिद्धाया दृष्टान्तार्थङ्कीर्त्तितायास्तदेव वाक्यं विधायकम्भवति ॥ वाक्यभेदप्रसङ्गात् ॥ यथा वेदेषु क्वचित्संवादो भिन्नशिष्याणान्नाभागोपाख्यानादीनान्तथा नित्यानुमेयवेदार्थेनापीति न स्मृत्यर्थं श्रुतिः प्रत्यक्षा स्पृशतीत्यर्थः ॥ ननु किं स्मृत्येत्याशंक्याह ॥ गृहादिरिवेति॥देहस्थानीयो वैदिको धर्मः ॥ गृहस्थानीयः स्मार्त्तः ॥ उभाभ्यां जीवः सुखी नान्यथा ॥ ३५ ॥ नित्यानुमेयवेदमूलिकायाः स्मृतेरर्थमाह ॥ गर्भाधानादिति ॥ षोडश

संस्काराः सन्ध्योपासनङ्कालादिसहितम् ॥ नहि तादृशानुपूर्वीविशिष्टं " रक्षांसि हवा पुरोनुवाकः " इत्यत्र वर्तते ॥ नित्यश्राद्धादिविधानं मासिकश्राद्धविधिः ॥ पाकयज्ञाः स्थालीपाकादयः ॥ आदिशब्देन वैश्वदेवादिकमपि गृह्योक्तमखिलमिति यावत् ॥ ३६ ॥ प्रायश्चित्तं पातकादीनाम् ॥ ३७ ॥

आवरणभंगः ।

कस्मिँश्चिद्देशे पुनरव्याप्तिं हृदि कृत्वा विप्रकीर्णशाखामूलत्वमाशङ्कन्ते ॥ ननु दृश्यत इत्यादि ॥ ॥ समाधिमाहुः ॥ ॥ वेदे हीत्यादि ॥ ॥ मूले संवादे चेति चकारोऽप्यर्थे ॥ ॥ तदेवेत्यादि ॥ ॥ कुमारशिखाधारणवत्तेन विध्युन्नयने तस्यानुमेयत्वेन नित्यानुमेयानतिरिक्तत्वात्तन्मूलकत्वादेतस्य विधायकतायाः शक्यत्वात् ॥ ॥ वाक्येत्यादि ॥ ॥ श्रौतानाम्प्रकरणावरुद्धत्वेन सङ्कुचितत्वात्तदनादृत्य साधारणत्वेऽधिकार्यन्तरप्रवेशेन वाक्यम्भिद्येतेत्यर्थः ॥ तस्मान्न विप्रकीर्णपक्षो युक्त इति भावः ॥ एवं सिद्धायां लक्षणशुद्धौ योंशो वेदमूलकः सोप्याचारान्तरितत्वान्मूलभूतवेदस्यैतद्वैलक्षण्याच्च न वेदनिर्णयेन निर्णीतो भवतीति पृथक्तया स्मृतिनिर्णय आवश्यक इति साधितम् ॥ एवं स्मृतीनाम्प्रामाण्यन्तन्निर्णयावश्यकत्वञ्च साधयित्वा प्रयोजनविमर्शायाहुः ॥ ॥ नन्वित्यादि ॥ ॥ मूले उपकृतिपदेनोपकरणभूतोर्थ उच्यते । देहस्थानीयेत्यादिना च विव्रीयते । तथाच स्वाध्यायाध्ययनयागतपोब्रह्मविचाराणान्धर्माणां यथाययमाश्रमैकसाध्यत्वात्तन्निरूपिकाणान्तद्धर्मनिरूपिकाणाञ्च स्मृतीनां वैदिकधर्मपोषणमेव प्रयोजनमित्यर्थः ॥ ३५ ॥ ॥ नित्येत्यादि ॥ ॥ या धर्म उपकरोति द्वाभ्यां विषयनिर्देशेन तां ज्ञापयितुन्तस्याः प्रमेयमाहेत्यर्थः ॥ षोडशेति ॥ "गर्भाधानमृतौ पुंसः सवनं स्पंदनात्पुरा" इत्यादिना निरूपितः ॥ गर्भाधानादिसंस्काराभावे शुद्ध्यभावेनाधिकारार्थन्तत्कथनमावश्यकम् ॥ उत्तरसंस्काराभावे फलप्रतिबन्ध इति तदपि तथा ॥ एवं सन्ध्योपास्त्यादिकमपि शुद्धिजनकत्वेन कर्माधिकारसम्पादकम् ॥ "सन्ध्याहीनोऽशुचिर्नित्यम्" इति "शौचाचार विहीनानां समस्ता निष्फलाः क्रियाः" इत्यादिवाक्यात् ॥ "अकाले विहिता सन्ध्या या सा वन्ध्यावधूरिव" इति "दिवोदितानि कर्माणि प्रमादादकृतानि चेत् ॥ यामिन्याः प्रहरं यावत्तावत्सर्वाणि कारयेत्" इतिचाप्रत्यक्षवेदमूलकत्वाभावायाहुः ॥ ॥ नहीत्यादि ॥ ॥ एवमेव नित्यश्राद्धादिषु शुद्धिहेतुत्वं प्रत्यक्षवेदमू-

लकत्वाभावश्च ज्ञातव्यः ॥ एवं वैश्वदेवमपि पञ्चसूनापनुत्तयेऽन्नशुद्धयै चावश्यकम् ॥ प्रायश्चित्तमपि तथा ॥ तेन शुद्धौ कर्मयोग्यत्वसम्भवादिति ॥ स्थालीपाकादय इति ॥ सप्त पाकयज्ञाः । औपासनहोमो वैश्वदेवम्पार्वणमष्टकामासिकश्राद्धं सर्पबलिरीशानबलिरिति ॥ एतदेव विवृण्वन्ति ॥ ॥ आदिशब्देनेत्यादि यावदित्यन्तम् ॥ ॥ प्रायश्चित्तादीनामित्यादिपदङ्कर्मविपाकसङ्ग्रहार्थम् ॥ ३६॥३७॥

व्रजभाषाटीका ।

शङ्का—स्मृतिनमें जैसे धर्म दीखेंहैं तैसे प्रत्यक्ष वेदमेंभी दीखें हैं जैसे " धन्वनः प्रपा असि " " नाप्सु मूत्रपुरीषं कुर्यात् "। " न विवसनः स्नायात् " अर्थ—हे अग्नि तुम निर्जलदेशकी प्याऊ हो अर्थात् निर्जलदेशमें प्याऊ जैसें मनुष्यकूँ प्यारीहै तैसे तुम हमकूँ प्यारे हो। जलमें मूत्रपुरीष नहिंकरनों। नग्न होकर नहिं स्नानकरनो इत्यादि अनेक धर्म वेदमें लिखेहैं तासों प्रत्यक्ष वेदमूलकही स्मृतिनकों माननों॥ उत्तर—सम्वादे चान्यशेषत्वादिति ॥ वेदमेंभी प्रकरण सबठिकाने नियामक हैं. जैसें " आहिताग्निर्नानृतं वदेत् " अर्थ—अग्निहोत्री मिथ्या नहिंबोलै यह वाक्य है सो अग्निहोत्रादिकरवेवारेनकेलियें मिथ्या बोलवेकी नाई करे हैं सबनकेलिये मिथ्याको निषेध या वाक्यसों नहिंहोयसकेहै ऐसे यज्ञमें इष्टिका ईट स्थापनकरनेवालेकेलिये जलमें थूँकवेको निषेध है वह निषेध सबकेलिये नहिंहोयसकेहै ऐसेही लोकप्रसिद्ध प्याऊको दृष्टान्तकेलिये वेदमें नाम लिख्योहै तासों वेदमें सब मनुष्यनकूँ प्याऊ बनायवेकी आज्ञा दीनीहै यह नहिंकहसकेहै ॥ यदि वेदमें यज्ञके प्रकरणमें कहे जे वाक्य उनकूँ सब मनुष्यनके ऊपर मानलोगे तो पशुको आलभन ईटनको स्थापन इषेत्वाआदि मन्त्रसों वृक्षकी शाखाको छेदन सबनकूँ यज्ञ नहिं होय तबभी सर्वदाही करनो पडेगो तासों जायज्ञके प्रकरणमें जो वाक्य

होय वह वाक्य वा यज्ञके करवेवारेकेलियेंही समुझनों. जो सब-नकेलिये मानें तो ( वाक्यभेद ) अर्थात् एकवाक्यता नहिं-रहसकेगी क्योंकी वाप्रकरणकूँ छोडकर साधारण जब मानेंगे तब वा वाक्यके और अधिकारी होयसकेंगे । ये वाक्यभेद बडो दूषण है जैसें वेदमें कहीं कहीं नाभागराजा आदिकनके उपा-ख्यानको सम्वाद है तैसें नित्यानुमेय वेदके अर्थके साथभी कचित्सम्वाद है तासों स्मृतिके अर्थकूँ प्रत्यक्ष श्रुति स्पर्श नहिंकरमेंकहे किन्तु स्मृति नित्यानुमेयवेदमूलकही है ॥ स्मृतियें क्यों बनाई या शङ्काकूँ दूरकरतेभये स्मृतिको प्रयोजन कहेहें (गृहादिरिति)॥जेसें देह या जीवकूँ सुख देवेवारो है तैसेंही वेदोक्त यज्ञ तप ब्रह्मज्ञान आदि धर्म याआत्माको सुखदेवेवाले हैं. जैसे देहको पोषणकरवे वारो गृह है तैसें वेदोक्तयज्ञादिकनको पोषणकरवेवारे स्मृतिके लिखेभये आश्रमादि धर्म हैं जैसें देह गृह ये दोनों होय तब जीव सुखी होय ऐसेंही वेदोक्तधर्म तथा स्मृतिलिखित धर्म इन दोनोंकरकें धर्म पुष्ट होवेहै एकसों नाहिं ॥ ३५ ॥ नित्यानुमेय वेदमूलक जो स्मृति है वाको अर्थ कहेहें ( गर्भाधानेति ) गर्भा-धानकूँ आदिलेकें सोलहसंस्कार तथा समयके समय सन्ध्याकी उपासना करनों तासों शुद्धि होय क्योंकि ( सन्ध्याहीनो ऽशुचिर्नित्यम् ) या वाक्यमें सन्ध्या नहिंकरवेवारेकूं अपवित्र बतायो है ॥ "शौचाचारविहीनानां समस्ता निष्फलाः क्रियाः"। या वाक्यमें आचारहीन अपवित्र पुरुषके किये कर्मकूँ निष्फल बताये हैं ॥ तथा "अकालविहिता सन्ध्या या सा वन्ध्यावधूरिव" या वाक्यमें कालचूककें करी भई सन्ध्याकूं वांझस्त्रीके समान निष्फल बताई है, जैसें अनुक्रमसों स्मृतिनमें सन्ध्योपासनादिक

कर्म लिखेहैं वैसे क्रमसों "रक्षांसि ह वा पुरोनुवाकः" इत्यादि वेद मार्गमें नाहिंलिखे हैं॥ नित्यश्राद्धादिकनकी विधि मासिकश्राद्धकी विधि गृह्यसूत्रोक्त औपासन होम १ वैश्वदेव २ पार्वणश्राद्ध ३ अष्टका ४ मासिकश्राद्ध ५ सर्पबलि ६ ईशानबलि ७ ये सात पाकयज्ञ हैं, पाक सिद्धकरवेमें जो चक्की चूल्ही आदिमें पाँचप्रकारकी हिंसा होवेहै वाकूं दूर करवेकेलियें वैश्वदेव अवश्य करनों चाहिये. इन कर्मनकूं अपने गृह्यसूत्रके अनुसार करनों॥ तात्पर्य यह है १ संस्कार १ सन्ध्योपासनादिक २ नित्यश्राद्धादिक ३ तथा पाकयज्ञ ४ तथा पापनके प्रायश्चित्त ५ इन पांचधर्मनको संग्रह नित्यानुमेय वेदमूलकस्मृतिनमें है ॥ ३६ ॥ ३७ ॥

**व्रततीर्थादिकं काम्यन्नित्यवद्बोध्यते क्वचित ॥**
**पूर्वाचारेण सम्प्राप्तम्पुराणं मूलमस्य हि ॥३८॥**
**कृष्यादिजीविकाशास्त्रं पूर्वेष्याचारतः प्रमा ॥**
**करदण्डादिशास्त्रस्य मूलं युक्तिःपुराविदाम्३९**

तत्त्वदीपप्रकाशः ।

व्रततीर्थादीनामपि नित्यानुमेयो वेदो मूलं भविष्यतीत्याशंक्याह ॥ व्रततीर्थादिकमिति ॥ श्रुतिमूलत्वे ब्राह्मणानामपि नित्यं कर्त्तव्यानि स्युरिति काम्यमित्युक्तम् ॥ किन्तु वेदानविकृतानां तन्नित्यम्भवतीति नित्यवद्बोध्यते ॥ तस्य च मूलम्पुराणम् ॥ तथा सति स्मृतित्वङ्कथमिति चेत्तत्राह ॥ पूर्वाचारेण सम्प्राप्तमिति ॥ न हि पुराणं दृष्ट्वा तस्य निर्माणं किन्तु आचारादेव ॥ ३८ ॥ इदानीमाचारः कुत्र मूलमित्याकांक्षायामाह ॥ कृष्यादीति ॥ षड्गवादिभागदानादिविधानं पूर्वेष्याचारतः प्राप्तं तथैव कृर्तव्यम्प्रमाणमित्यर्थः ॥ करदण्डादेर्युक्तिमूलम् ॥ करोत्र कृषिव्यतिरिक्तः ॥ ३९ ॥

आवरणभंगः ।

एवं वेदमूलिका विशुद्धिफलिका स्मृतिर्विचारिता पौराणाचारमूलिकाम्प्रवृत्तिफलिकां विचारयन्ति ॥ ॥ व्रतेत्यादि ॥ ॥ भविष्यतीति ॥ ॥ तेषामपि शुद्धिजनकत्वाविशेषाद्भविष्यतीत्यर्थः ॥ काम्यत्वे गमकमाहुः ॥ ॥ श्रुतीत्यादि ॥ ॥ तीर्थानित्यत्वं साग्निकस्याग्निं विहाय तीर्थगमननिषेधस्य वाक्य दर्शनात्। व्रतानित्यत्वं च "अनड्वान् ब्रह्मचारी च दीक्षितश्चेति ते त्रयः॥ अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम्" इतिवाक्याच्च ज्ञेयम् ॥ तेन वेदे यथा नित्यकर्मप्रसिद्ध्यर्थं चित्रोद्भिदादिबोधनन्तथा स्मृताविदमित्यर्थः ॥ तर्हि नित्यवत्कुतो बोध्यत इत्याशङ्कायामाहुः ॥ किन्त्वित्यादि ॥ ॥ कथमिति ॥ ॥ वेदमूलकत्वाभावात्कथमित्यर्थः ॥ आचारादेवेति ॥ सदाचारादेव ॥ तथाच सदाचारमूलकत्वन्तस्या इत्यर्थः ॥ एतेन व्रततीर्थादिप्रवाहरक्षा पूर्वेषांचारादेवेति सिद्ध्यतीति प्रवृत्तिर्जीविकेत्युक्तस्य फलस्यापि न विरोधः ॥ ३८ ॥ एवम्पौराणाचारमूलिकाया विचारेण तस्याः प्रमेयमुक्तम् ॥ लोकमूलिकाम्विचारयन्ति ॥ ॥ इदानीमित्यादि ॥ ॥ आचार इति ॥ ॥ लोकाचारः ॥ कृष्यादीत्यादिपदसंग्राह्यं तत्प्रमेयं दिङ्मात्रेणाहुः ॥ ॥षडित्यादि॥ "स्नानं सन्ध्या जपश्चैव देवानां पूजनं तथा ॥ तर्पणं वैश्वदेवश्च षट्कर्मा द्विज उच्यते ॥ षट्कर्माभिरतो नित्यकृषिकर्म समाचरेत्॥ हलमष्टगवं श्रेष्ठं षड्गवं मध्यमं स्मृतम् ॥ चतुर्गवं नृशंसानां द्विगवं वृषघातिनाम्"इति। "विप्रस्यैवम्विधा वृत्तिस्तृणकाष्ठं च विक्रयेत्" इति पाराशरोक्तजातीयं पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे त्वर्थे पितापुत्रयोस्तुल्यं स्वामित्वम्पितृविभक्ताविभागानन्तरोत्पन्नस्य सम्विभागन्दद्युरित्यादि विष्णूक्तजातीयम्॥ आदिपदेन प्रतिग्रहादिरूपश्च विधानं कार्यम्॥ आपद्यपि धर्मरक्षणाय तदुक्तरीत्यैव कर्त्तव्यं। यतः पूर्वेषांचारतः प्राप्तमतस्तच्छास्त्रम्प्रमाणमिति मूलाभिप्राय इत्यर्थः॥ नीतिशास्त्रमूलिकाम्विचारयन्ति ॥ ॥ करेत्यादि ॥ ॥ सपरिकरायाः कृषेरुक्तौ तदन्तर्गतो राजभागोऽप्युक्तप्रायएवेति पुनः कथनमयुक्तमित्यत आहुः ॥ ॥ कृषिव्यतिरिक्त इति ॥ ॥ उत्कोचादिरूप इत्यर्थः ॥ दण्डस्तु योब्राह्मणायावगुरेत्तं शतेन पातयेदित्यादि "अदुष्टाश्च त्यजन् दण्ड्यो दूषयँस्तु मृषा शतम्" इत्यादि "धिग्दण्डम्प्रथमन्दद्यात्" इत्यादि विष्णुयाज्ञवल्क्यमनूक्तजातीयो ज्ञेयः ॥ ३९ ॥

व्रजभाषाटीका ।

व्रत करनो तथा तीर्थादिकनमें गमन करनो इत्यादि जो स्मृ-

तिनमें धर्म कहेहैं इन धर्मनको मूल पुराण है, ये धर्म अग्निहोत्री-के लियें नित्य नहीं है क्योंकि वाकूँ अग्नि छोडकें विदेश जायवेको निषेध है, तथा "नैषां सिद्धिरनश्नताम्" इत्यादिवाक्य-नमें उपवासादिककोभी निषेध है ताहीसों ये धर्म काम्य कहावें हैं परन्तु वैदिक अग्निहोत्रादिकर्म नहीं करें हैं उनके लिये तो ये नित्य हैं तासों नित्यकर्मके समान व्रततीर्थादिकनको नित्य करनो बोधनकियो है ॥ तहाँ व्रततीर्थादिक पुराणमूलक हैं तब इनको स्मृतिपणो कैसें सम्भवसकें है यह शङ्का नहींकरनी, क्योंकी पुराण देखकें ये स्मृति नहीं बनाई है किन्तु पूर्वकल्पके सदाचारको स्मरणकरकें बनाई है तासों व्रततीर्थादिप्रतिपादक स्मृति आचारमूलकहै ॥ ३८ ॥ लोकमूलिकास्मृतिको विचारकरें हैं ॥इदानीमित्यादि॥ अभी आचार कहाँ प्रमाण है ऐसी आकांक्षा भई तहाँ कहें हैं ॥ कृष्यादीति ॥ स्मृतिनमें जहाँ ब्राह्मणादिकनकूं आपत्कालमें खेतीकरनो लिख्यो है, जैसे " हलमष्टगवं श्रेष्ठं षड्गवम्मध्यमं स्मृतम् ॥ चतुर्गवं नृशंसानां द्विगवम्वृषघातिनाम् "। अर्थ—एकहलके आठ बैल जोडकें खेतीकरनो उत्तम पक्ष है, छः बैलसों खेतीकरनो मध्यम पक्ष है, चार बैलसों खेती करनों निर्दयपणो है, दोबैलसों खेतीकरनों बैलको मारडारनोहै इत्यादि ॥ ऐसेंही जिनस्थलनमें पितामहादिकनके द्रव्यको विभाग करनो लिख्योहै तथा दानलेनों लिख्यो है उनस्मृतिभागनकूँ लोकव्यवहारको स्मरणकरके बनाये हैं तासों लोकमूलकस्मृतिभाग कहावें हैं, परन्तु पूर्वऋषिनके आचारसों प्राप्त है तासों प्रमाण है यहमूलको अभिप्राय है॥ जा स्मृतिभागमें खेतीवाले विना औरनसों कर लेनों तथा दण्ड देनों लिख्योहोये

वा स्मृतिभागकूँ युक्तिमूलक जाननों, नीतिमूलक स्मृतिभी याही सों कहें हैं ॥ ३९ ॥

शुद्धिङ्केचित् पृथक् प्राहुः संस्कारः कस्यचिन्मतः॥ देशकालद्रव्यकर्तृमन्त्रकर्मविभेदतः ॥ षोढा शुद्धिः स्मृता सापि द्विधा ह्यन्योन्यतः स्वतः ॥४० ॥ सर्वशेषेयमाख्याता श्रुत्यर्थेऽपि विशेषतः॥ धर्मः सम्पद्यते षड्भिरधर्मो ह्यन्यथा भवेत् ॥ ४१ ॥

तत्त्वदीपप्रकाशः ।

द्रव्यादिशुद्धौ विकल्पमाह ॥ शुद्धिमिति ॥ संस्कारपक्षे वेदो मूलं पृथक्पक्षे आचार इति ॥ प्रसङ्गाच्छुद्धेः स्वरूपमाह ॥ देशकालेति ॥ षड्भिः शुद्धिः षण्णाञ्च शुद्धिरिति द्विधा॥ ४ ०॥सर्वशेषत्वाच्च वेदो मूलमित्यभिप्रायेणाह ॥सर्वशेषेयमिति॥ बाधकमाह ॥ धर्म इति ॥ ४ १ ॥

आवरणभंगः ।

एवङ्कर्तृशोधकः स्मृतिभागो विचारितः । नीतिमूलिकायाः प्रमेयश्चोक्तम् । इदानीन्देशादिशोधकशुद्धिस्वरूपविचारमाहुः॥ ॥ द्रव्यादीति ॥ ॥ शुद्धाविति ॥ ॥ शुद्धिस्वरूपा । शुद्धिस्वरूपे विकल्पे बीजमाहुः ॥ ॥संस्कारेत्यादि ॥ ॥ पृथगिति ॥ ॥ पदार्थान्तरम् ॥ ॥ प्रसङ्गादित्यादि ॥ ॥ संस्कारपक्षे कर्मयोग्यतात्मकातिशयरूपं स्वरूपं सिद्धमिति पृथक्पक्षेपि स्वरूपस्योपेक्षानर्हत्वात्पृथक्त्वम्विवेकुन्तत्स्वरूपमाहेत्यर्थः ॥ ॥ षड्भिरित्यादि ॥ ॥ तथाचान्योन्यतः शुद्धौ संस्काररूपत्वस्य शक्यवचनत्वेपि स्वतःशुद्धौ संस्कारत्वस्याशक्यवचनत्वात्तत्स्वरूपं संस्कारात्पृथगेवेत्यर्थः ॥ उदाहरणन्तु "नवं वा निर्मलं वापि शुचीति द्रव्यमुच्यते" इति शुचिसंज्ञामभिधाय "अथ सर्वाणि धान्यानि वस्त्राण्याभरणानि च ॥ अवर्ज्यावर्ज्यज्ञातानि शुचीन्येतानि केवलम्" इति "स्वयमेवहि यद्द्रव्यङ्केवलम्मेध्यताङ्गतम् । स्थावरं जंगमं वापि स्वयं शुद्धमिति स्मृतम्" इति स्वयं शुद्धसंज्ञामभिधाय "वसतिश्चमसो यानम्वाहनं साधनानि च ॥ क्षुरो नौरासनञ्चेति स्वयं शुद्धमिति स्मृतम्"

इतिदेवलस्मृतौ ॥ अत्र धान्यादीनां शुचित्वेऽपि व्रीहीन् प्रोक्षतीत्यादिना तत्तत्संस्कारविधानात्तत्पूर्वकालीनं धान्यादिशुचित्वात्मकं शुद्धिस्वरूपम्विविक्तम्भवति । हेमाद्रिस्तु अशुद्धिर्नाम द्रव्यादेः स्पर्शनानर्हतापादको दोषविशेषः । संस्कारविशेषोत्पादिता तन्निवृत्तिः शुद्धिरित्याह । तद्देवलवचनविरोधाच्चिन्त्यम् ॥ अत्र च षड्भिः शुद्धिर्यथा व्रीह्यादेः सत्पात्रस्थत्वं नवत्वं शृतत्वन्तद्दातृविशुद्धतत्वं मन्त्रपूतत्वङ्कृताग्रयणत्वमित्येवम्बोध्याः ॥ ४० ॥ ॥ सर्वेत्यादि ॥ ॥ पृथगूपायाः शुद्धेर्जीविकादिशेषत्वेनापि कथनात्तथेत्यर्थः ॥ ॥ बाधकमिति ॥ ॥ शुद्ध्यभावे बाधकम् । तथाच पृथक्पक्षे श्रौतोपयोगिनीत्यर्थः ॥ मूलन्त्वेवं योज्यं॥ इयं शुद्धिः सर्वशेषा आख्याता श्रुत्यर्थे विशेषत आख्याता हि यतो हेतोः धर्मः षड्भिःकालादिभिः सम्पद्यत अतस्तस्या विशेषतः श्रुत्यर्थशेषत्वं युक्तम् ॥ अन्यथा कालाद्यशुद्धौ अधर्मो भवेदिति ॥ एतेन साधन मुक्तं ज्ञेयम् ॥ ४१ ॥

व्रजभाषाटीका ।

स्मृतिनमें जास्थालमें पदार्थकी शुद्धि लिखी है वा स्मृतिभागको नित्यानुमेय वेदमूलक जाननों, क्योंकी शुद्धिके संस्कारमें अन्तर्भाव है, संस्कारसों ( पृथक् ) न्यारी पदार्थकी शुद्धि मानोंगे तो वा स्मृतिभागकों आचारमूलक मानेंगे. परस्परशुद्धि तथा स्वतः शुद्धि इनभेदनकरकें शुद्धि दोप्रकारकीहै. द्रव्य देश काल मन्त्र कर्म कर्ता इनकी परस्पर शुद्धि जैसें व्रीहीकी मन्त्रादिकनकेद्वारा शुद्धि होवेहै, स्वतः शुद्धि जैसें " क्षुरो नौ रासनञ्चेति स्वयं शुद्धमिति स्मृतम् " अर्थ छुरा नाव आसन आदि पदार्थ स्वयं शुद्ध हैं इत्यादि जाबालस्मृतिके वाक्यमें लिखीहै, यह जो पदार्थनकी शुद्धि है सो जिविका व्यवहार लोकस्थिति इनसबनकी अङ्ग है तथापि वेदार्थकी विशेषकरके अङ्गभूत हैं, क्योंकी देश काल द्रव्य कर्ता मन्त्र कर्म ये छः पदार्थ जब शुद्ध होंय तब धर्म सिद्धहोय ॥ यदि ये कालादिक छः पदार्थ अशुद्ध होंय तो अधर्म होय ॥४०॥४१॥

**कल्पसूत्रेषु वेदत्वं स्मृतित्वञ्च प्रतीयते ॥ अर्थतः कर्तृतश्चापि तुल्यत्वात्पाठतः स्मृतिः॥४२॥**

**सौकर्यार्थङ्कृतिस्तस्य सङ्कलीकृत्य वर्णना-त् ॥ तेनापि क्रियमाणस्तु धर्मः श्रौतो भवेद् ध्रुवम् ॥ ४३ ॥**

तत्त्वदीपप्रकाशः ।

कल्पसूत्राणामृषिप्रणीतत्वात्स्मृतित्वमाशंक्य परिहरति ॥ **कल्पसूत्रेष्विति** ॥ व्यवस्थामाह ॥ **अर्थत इति** । अर्थो वैदिकः ॥ स्वराद्यभावात्कर्त्तुः स्मरणाच्च स्मृतित्वम् ॥ ४२ ॥ तर्हि अर्थस्य वैदिकत्वे को हेतुस्तत्राह ॥ **सौकर्यार्थमिति** ॥ कर्म्मज्ञानार्थमेव कल्पसूत्रन्द्रष्टव्यं नतु तदुक्तत्वेन कर्त्तव्यमिति मुख्यः पक्षः ॥ **गौणमाह** ॥ **तेनापीति** ॥ आधुनिकानां सङ्ग्रहार्थमुक्तम् ॥ ४३ ॥

आवरणभंगः ।

व्यवस्थामाहेति ॥ उभयरूपत्वं युक्तमेवेति वक्तुन्तामाहेत्यर्थः ॥ ॥ वैदिक-इति ॥ ॥ नित्यानुमेयातिरिक्तश्रुतिप्रसिद्धः ॥ पाठत इत्यस्य विवरणं ॥ स्वराद्यभावादिति ॥ ॥ तथाच अर्थतो वेदत्वं कर्तृतः पाठतश्च कल्पसूत्रं स्मृतिरपि भवतीति मूलयोजना ॥ ४२ ॥ ॥ तर्हीति ॥ ॥ हेतुद्वयेन चेत्स्मृतित्वं दृढन्तर्हीत्यर्थः ॥ ॥ सौकर्यार्थमिति ॥ प्रत्यक्षवेदमवलोक्य साङ्गप्रधानप्रयोगैक्यप्रकारपरिचर्यार्थम् ॥ अर्थस्य वैदिकत्वाय बीजभूतं ज्ञानप्रकारमाहुः ॥ ॥ कर्मेत्यादि ॥ ॥ मुख्य इति ॥ ॥ मुख्यो मरीच्यादिभिः क्रियमाणः ॥ ॥ तेनापीति ॥ ॥ वेदाङ्गभूतकल्पसूत्रोक्तत्वेनापि मूले ध्रुवमित्यनेन सङ्कलीकृत्य वर्णनापूर्वं तस्य वाक्यस्य श्रुतिरूपत्वादिति हेतुरभिप्रेयते ॥ ४३ ॥

व्रजभाषाटीका ।

कल्पसूत्र ऋषिप्रणीतहै, वेद जैसे स्वर उनमें नहिंहैं तासों उनको पाठ स्मृतिनमें गिणोजावेहै तथा अर्थ उनको वैदिकहै, अर्थात् वेद विहित यज्ञादिकनकी विधि बतायवेवारे हैं तासों अर्थसों उनकी वेदमें गणना है ॥ ४२ ॥ अर्थसों कल्पसूत्रनके वैदिक होयवेमें कहा हेतु है तहां कहें हैं ॥ सौकार्यार्थमिति ॥ यज्ञादिककर्मनको

सुकरतासों ज्ञान होयवेकेलियें कल्पसूत्रनकूं देखनेंचाहिये परन्तु यज्ञादिकनके उत्तमाधिकारी मरीचिकूं आदिलेकें जे ऋषि हते उनके किये यज्ञनमें कल्पसूत्रनकी अपेक्षा नहिंहती. उनके शुद्ध अन्तःकरण हते तासों बिनाकल्पसूत्रही कर्मको स्वरूप भासमान होयजानोहतो यह मुख्यपक्ष है॥ अभीके मनुष्यनकूं यज्ञादिक कर्मनको प्रकार जानवेकेलिये कल्पसूत्र देखवेकी आवश्यकता है, कल्पसूत्रनकेद्वारा करेभये यज्ञादिकही वैदिकधर्म समुझेजावें हैं४३

**इष्ट्योपासनकर्म्माणि न श्रौतानि कथञ्चन ॥ भेदद्वैजात्यतश्चापि काल एकस्तयोः परम ॥ ४४ ॥ कालबाधान्न कर्त्तव्यं स्मार्तं श्रौतो बली यतः॥ पश्चाद्वा गौणकालेऽपि कर्त्तव्यमिति केचन ॥ ४५ ॥**

तत्त्वदीपप्रकाशः ।

गृह्याणां श्रौतत्वमाशंक्य परिहरति ॥ **इष्टीति** ॥ इष्टिः स्थालीपाकः तत्र हेतुः ॥ **भेदादिति** ॥ अग्न्यादि सर्वं श्रौतस्मार्त्तयोर्भिन्नम्विजातीयञ्च ॥ तर्हि कथमेककालविधानन्तत्राह ॥ **काल एक इति** ॥ तथापि श्रौतस्य बलवत्वाय निर्णयमाह ॥ **कालबाधादिति** ॥ मुख्ये काले बलिष्ठत्वाच्छ्रौतमेव कर्त्तव्यमतः कालस्य निमित्तस्याभावात्स्मार्त्तं न कर्त्तव्यम् ॥ अतएव सर्वाधानविधिः ॥ पक्षान्तरमाह ॥ **पश्चादिति** ॥ ४४ ॥ ४५ ॥

आवरणभंगः ।

॥ गृह्याणामित्यादि ॥ ॥ उक्तयैव दिशा गृह्योक्तधर्माणां श्रौतत्वमाशंक्य वक्ष्यमाणहेतुभ्यान्तत्परिहरतीत्यर्थः ॥ ॥ भिन्नं विजातीयमिति ॥ नाम्ना भिन्नं धर्मेण विजातीयमित्यर्थः ॥ ॥ तर्हीति ॥ ॥ स्मार्त्तस्य कल्पोक्तधर्मतुल्यत्वाभावे ॥ ॥अतएवेत्यादि ॥ ॥ सर्वाधानविधिः सर्व-

मादधातीति विधिः । एवञ्चास्मिन्पक्षे इष्टचौपासनयोरनावश्यकतया अकरणा सदतिरिक्तस्यैव गृहस्थानीयत्वम्बोध्यम् ॥ ॥ पक्षान्तरमाहेति ॥ ॥ नन्वर्द्ध- मादधातीत्यपि विध्यन्तरं दृश्यते तथा नित्यानुमेयवेदमूलकत्वेन तयोरपि साधकत्वमिति कथमेकान्ततस्तद्बाध इत्यतः पक्षान्तरमाहेत्यर्थः ॥ तथाच मुख्य- काले स्मार्तस्य शिष्टैरकरणात्तन्निर्बलमिति ज्ञायते तेन विधिसत्वेपि कृताकृतं तत् । अतो मतान्तरमेवेति भावः ॥ ४४ ॥ ॥ ४५ ॥

व्रजभाषाटीका ।

गृह्यसूत्र श्रौत नहिं है इष्टि औपासन ये दोनों स्मार्तकर्म हैं, श्रौत तथा स्मार्त अग्न्याधानादि न्यारे २ और विजातीय हैं अर्थात् नामसोंभी भेद है. शङ्का–जब श्रौत स्मार्त अग्निहोत्र अ- लग अलग हैं तब दोनोंही अग्निहोत्र करवेको एककालको विधा- न कैसें बनसकें ॥ उत्तर ॥ एककालको विधानहै तथापि वेदोक्तक- र्म स्मार्तकर्मकी अपेक्षा प्रबल है तासों मुख्यकालमें वैदिककर्मही करनों योग्यहै ॥ श्रौत करे पीछें स्मार्त अग्निहोत्र करवेको निमित्त काल रह्योनाहिं तासों स्मार्त इष्टि औपासन नहिंकरनों ॥ पक्षान्तर कहें हैं ॥ श्रौतकर्म करें पीछें गौणकालमें स्मार्तकर्म करनों ऐसें कितनेक कहें है ॥ ४४ ॥ ४५ ॥

**स्मार्तमात्रस्य करणादाभासो ब्रह्मणो भवेत् ॥**
**स्वर्गाभासाद्यपि फलं श्रौतमात्रेपि चाखिलं ॥**
**॥ ४६ ॥ ब्रह्मप्रकरणं स्मार्त्तकल्पसूत्रवदेव हि ॥**
**पुराणमूलकश्चापि ह्याश्रमाचारतोदितम् ॥ ४७ ॥**

तत्त्वदीपप्रकाशः ।

एवं श्रौतस्य बलिष्ठत्वायासहायशूरता निरूपिता क्वचि- त्तथा स्मार्तस्यापि भविष्यतीत्याशंक्याह ॥ स्मार्त्तमात्रस्येति ॥ ब्रह्म वेदः तद्वेत्तीति ब्राह्मणः ॥ स्मृतिरपि वेदमूलिकेति द्व्यन्तरितत्वात्प्र-

तिबिम्बवेदाभासो भवति ॥ अतो ब्राह्मणोपि तादृस्याभासः फलञ्च तथेत्याह ॥ **स्वर्गाभासेति** ॥ चित्तशुद्धौ वासनाक्षयाभावो दैत्योपहतलोके च स्थितिरिति श्रुतौ ॥ तद्विपरीतमाह ॥ **श्रौतमात्र इति** ॥ अखिलं मुख्यम् ॥ ४६ ॥ स्मृतौ ब्रह्मनिरूपणम्प्रत्यक्षोपनिषन्मूलकम्भविष्यतीति प्रकारान्तरमाह ॥ **ब्रह्मप्रकरणमिति** ॥ तावान् भागः कल्पसूत्रवदिति तेनापि ब्रह्मज्ञानम्फलायेति गौणः पक्षः ॥ मुख्यमाह ॥ **पुराणमूलकमिति**॥ ननु स्मृतिर्मुख्या पुराणापेक्षया बलिष्ठा वेदसमानाधिकरणात्कथं पुराणमुपजीवेदित्याशङ्क्याह ॥ **आश्रमाचारतेति** ॥ सर्वा आश्रमाः स्मार्त्तास्तेषामाचारनिरूपणप्रस्तावे चतुर्थाश्रमे ब्रह्मध्यानं मुख्यम् ॥ पुराणे च तदुक्तमिति ततो गृहीतमुपनिषदर्थग्रहणे उपनिषत्त्वभङ्गाद्दोषःस्यात्, शाखाव्यवस्था च भज्येतातः स्मार्तं ब्रह्मज्ञानञ्च वैदिकवत्फलसाधकम् ॥ ४७ ॥ **इति स्मृतिप्रकरणम्** ॥

आवरणभंगः ।

॥ एवमिति ॥ ॥ सर्वाधानविधिना मुख्यकालकरणेन चेत्यर्थः ॥ ॥ भविष्यतीति ॥ ॥ अर्द्धाधानविधिनानुमेया भविष्यतीत्यर्थः ॥ ॥ तद्वेत्तीति ॥ ॥ "ब्रह्मज्ञो ब्राह्मणः स्मृतः" इत्यर्थज्ञानपूर्वकानुष्ठानस्य विवक्षितत्वात्तत्करण एव मुख्यं ब्राह्मणत्वं "यो दुर्ब्राह्मणः" इत्यादिश्रुतेश्च । तदकरणे यत्तदाहुः॥ स्मृतिरित्यादि ॥ आभास इति॥ स्मार्तो धर्म इति शेषः । अतः स्वरूपतः फलतश्च जघन्यत्वान्न क्वाप्यसहायशूरत्वमिति श्रौतपोषकत्वमेव स्मृतिप्रयोजनमिति निश्चयः ॥ ॥ ४६ ॥ एवन्धर्मोपयोगिनी स्मृतिर्विचारिता ॥ ज्ञानोपयोगिनीं विचारयन्ति॥ ॥ ॥ स्मृतावित्यादि ॥ ॥ प्रत्यक्षोपनिषन्मूलिकामिति ॥ ॥ योगियाज्ञवल्क्यस्मृतौ माण्डुक्यमैत्रायणीयोपनिषत्सम्वादस्य दृश्यमानत्वात्सर्वत्र प्रत्यक्षोपनिषन्मूलकमित्यर्थः ॥ ॥ कल्पसूत्रवदिति ॥ ॥ बोधसौकर्यार्थं सङ्कलीकृत्योपनिषद्भ्यो गृहीत इति श्रौत इत्यर्थः ॥ अस्य पक्षस्य गौणत्व उपपत्तिरनुपदमेव वाच्या ॥ मुख्ये किञ्चिदाशंकन्ते ॥ ॥ नन्वित्यादि ॥ ॥ बलिष्ठेति ॥ ॥ श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते तत्र श्रौतं बलिष्ठं स्यात्तयोर्द्वैधे स्मृतिर्व

रेति व्यासस्मृतिवाक्यात्तथेत्यर्थः ॥ वेदसामानाधिकरण्यन्तूपपादितमेव ॥ समाधिमुपपादयन्ति ॥ ॥ सर्वे इत्यादि ॥ ॥ ननु पुराणेभ्य एव गृहीतमित्यस्य किं विनिगमकमित्यत आहुः ॥ ॥ उपेत्यादि ॥ ॥ दोष इति ॥ ॥ ॥ प्रतिपाद्ये दोष इत्यर्थः ॥ दूरषणान्तरमाहुः ॥ शाखेत्यादि ॥ अयमर्थः ॥ स्मार्त्तं ब्रह्मप्रकरणमेकतरोपानिषदर्थसंग्रहरूपं सर्वोपनिषदर्थसंग्रहरूपं वा । आद्ये उपनिषन्नाम्नस्तत्रानुपानिबन्धनात्किंशाखीयस्य तदावश्यकमिति ज्ञातुमशक्तिर्यथाकथञ्चिज्ज्ञाने च तस्य भागस्य सर्वसाधारणत्वभङ्गप्रसङ्गः । द्वितीये च सर्वेषाम्फलसाधकत्वाविशेषात्तत्तदुपनिषदान्तत्तच्छाखायामुपनिबन्धनवैयर्थ्यप्रङ्ग इति तथेत्यर्थः ॥ सिद्धमाहुः ॥ ॥ अत इत्यादि ॥ ॥ तेनायमेव पक्षो मुख्य इति पूर्वोक्तस्य गौणत्व उपपत्तिरुक्ता ॥ एवं सर्वस्य स्मार्तप्रमेयस्य निरूपणेन प्रमाणप्रमेयसाधनफलैस्तद्बलं निश्चितन्तत्रेदं सिद्धम् ॥ स्मृतिरूपप्रमाणस्य स्वरूपं जन्यं नतु वेदवन्नित्यं तत्र यत् व्रतादिकं कृष्यादिप्रकारः करादिप्रकारो गर्भाधानादिकश्च प्रमेयं साधनात्मकन्तद्यथार्हं लोकसंग्रहादिकं साधयदपि श्रौते धर्मे शुद्धताजननेनोपकरोति स्वतंत्रन्तु स्वर्गाभासादि साधयति नतु श्रौतवदिति ॥ ब्रह्मप्रकरणन्तु श्रौतसंग्रहात्मकत्वे श्रौतत्वेन तत्रोपकरोति । पौराणत्वे तत्रोपकरोतीति न स्वतन्त्रफलसाधकम् । तेनोभयापेक्षया निर्बलमिति स्मृतेर्बलवत्वन्तु वर्णधर्म एवेति तेन पूर्वप्रकरणोक्ते अविरुद्धन्तु यत्त्वस्येत्यादिरूपे रसे भावनाविपरीतभावने निवारिते ॥ ४७ ॥ इति स्मृतिप्रकरणम् ॥

व्रजभाषाटीका ।

श्रौतकर्म बलवत् है तासों असहायशूर है अर्थात् स्मार्तकर्मकी याकूं अपेक्षा नहिं है, ऐसें स्मार्तकर्मभी असहायशूर होयगो या शङ्काकूं दूरकरें हैं ॥ स्मार्तमात्रस्येति ॥ ब्रह्म जो वेद है ताकूं जाने अर्थात् अर्थ जानके जो वेदको अनुष्ठान करें है वो ब्राह्मण है, स्मृति है सोभी नित्यानुमेयवेदमूलक है तथापि अर्थ और अनुभव इन दोकरिकै व्यवधानवालीहै, तासों जैसें कांचको व्यवधान होयवेसों दर्पणको मुखको प्रतिबिम्ब कहावेहै ऐसेंही स्मार्तधर्म वैदिकधर्मको आभास कहावेहै ॥ ऐसेंही जो ब्राह्मण श्रौतकर्म छोडकें केवल स्मृतिके कर्ममात्र करें है वोभी ब्राह्मणाभास

कहावेहै और वाकर्मसों फलभी वैसोही होवेहै ये आगेके श्लोक में कहें हैं ॥ स्वर्गाभासेति ॥ चित्तशुद्धि होयजावे और वासनाको क्षय नहोय दैत्यनको जामें उपद्रव होय ऐसे लोकमें स्थित होयकें सुखभोग करेहै यह स्वर्गाभास केवल स्मार्तकर्मको फल है ॥ याको तात्पर्य आवरणभङ्गमें लिख्योहै कि श्रौतधर्मको पोषण करनों स्मार्तधर्मको प्रयोजन है। स्वतन्त्र होयकें मुख्यफल नाहिं दे सकेहै, केवल श्रौतकर्ममात्रके करवेसों तो अखिल मुख्यस्वर्गादि-फल होवेहै येही वेदकी स्मृतिकी अपेक्षा अधिकता है ॥ ४६ ॥ स्मृतिनमें ब्रह्मप्रकरण प्रत्यक्ष उपनिषन्मूल होयगो ऐसी शङ्का दूरकरतेभये प्रकारान्तर दिखावें हैं ॥ ब्रह्मप्रकरणमिति ॥ स्मृतिनमें जो ब्रह्मज्ञानको वर्णन है सो कल्पसूत्रनमें जैसो वेदोक्तकर्मनको आनुपूर्वी सङ्कलन कियो है तैसें उपनिषदके ज्ञानके सुगमताकेलिये संग्रह करके स्मृतिनमें वर्णनकियोहै तासों स्मृतिनकेद्वारा प्रकट-भयोभी ब्रह्मज्ञान फलार्थ है। यह गौणपक्ष है मुख्यपक्ष तो यहही है जो स्मृतिनमें लिख्यो ब्रह्मज्ञान सो पुराणमूलक है तहाँ शङ्का होवे है- स्मृति तो मुख्य है पुराणनकी अपेक्षा प्रबल है स्मृति क्यों पुराणनको आश्रयकरती होयगी तहाँ उत्तर आज्ञाकेंरहैं॥आश्रमा-चारतोदितमिति ॥ सब आश्रम स्मृतिमें लिखे हैंतथा उन आश्र-मनके आचार निरूपणकरे हैं तहां चौथे आश्रममें ब्रह्मध्यानको मुख्यतासों वर्णन करें हैं वा ब्रह्मध्यानको वर्णन पुराणमें कह्योहै तासों पुराणसोंही संग्रहकरके स्मृतिमें ब्रह्मध्यानको वर्णनकियोहै॥ उपनिषदनके अर्थको स्मृतिनमें संग्रह कियोहै ऐसें मानोगे तो उपनिषदत्वभङ्गदोष आवेगो अर्थात स्मृतिनकरकेही कार्यसिद्धि होजायगी फिर न्यारी न्यारी शाखामें न्यारे न्यारे उप[illegible]को

पाठ व्यर्थ होयगो,तथा स्मृतिनको लिख्यो ब्रह्मज्ञान सबशाखावाले नकेलियेही हितकारी मानेंगे तो अपनी अपनी शाखाके उपनिषदको लिख्योही ब्रह्मज्ञान फलार्थ है या प्रकारकी जो मर्यादा है ताको भङ्ग होयगो तासों स्मृतिनको लिख्यो ब्रह्मज्ञान स्वतन्त्र होयके वैदिकज्ञान जैसो फलसाधक नहिं है किन्तु उपनिषदनके ज्ञानको उपकारक है ॥ वर्णधर्ममेंही स्मृति बलवती है ॥ ४७ ॥

इति स्मृतिप्रकरणम् ।

**पुराणं वेदवत्पूर्वसिद्धं सर्वोपयोगि तत् ॥ सर्वोपकरणानीव धर्मस्य नरगेहयोः ॥ ४८ ॥ तदज्ञाने सर्वमौढ्यं तेन तद्धृदयं स्मृतम् ॥ भावयुक्तस्य धर्मस्य प्रमितौ तत्प्रयुज्यते ॥४९ ॥**

तत्त्वदीपप्रकाशः ।

एवं स्मृतिमुपपाद्य पुराणनिर्णयमाह ॥ **पुराणमिति** ॥ तस्य वेदधर्मातिदेशः ॥ तेन धर्मार्थकाममोक्षा भक्तिश्चेति पञ्च नित्याः काम्याश्च विकृतास्तत्रापि देशादीनामङ्गत्वं पञ्चानामपि देशादिषट्कमङ्गम्पृथक् ॥ व्यासस्य कर्तृत्वमाशंक्य निराकरोति ॥ **पूर्वसिद्धमिति** ॥ नित्यमित्यर्थः ॥ तस्य प्रजोजनमाह ॥ **सर्वोपयोगीति** ॥ द्विविधा हि चत्वारोपि पुरुषार्थाः ईश्वरविचारिता जीवविचारिताश्च ॥ तत्रेश्वरविचारिता वैदिका जीवविचारिताः पौराणिका इति । अतः सर्वोपयोगित्वम् । वैदिकेऽप्युपयोममाह ॥**सर्वोपकरणानीवेति** ॥ श्रौतो धर्मो देहस्थानीयः स्मार्तो गृहस्थानीयः ॥ उपकरणस्थानीयः पौराणिक इति ॥ ४८ ॥ उपकारणाभावे सर्वथा स्थितिर्न भवतीति तस्यावश्यकत्वमाह ॥ **तदज्ञाने** इति ॥ पुराणार्थाज्ञाने सर्वमौढ्यं बहिः पदार्थज्ञानाभावात् ॥ अतएव "श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्" इति हृदयत्वम् ॥

उपयोगस्थानमाह ॥ भावयुक्तस्येति ॥ वेदे यज्ञादय उक्तास्तेषामभि-प्रायज्ञानम्पुराणादेव कदाचित्कर्तव्यं कदाचिन्न कर्त्तव्यम् ॥ "कर्मणो-ह्यपि बोद्धव्यम्" इतिवत् ॥ भावस्य ज्ञानम्पुराणात् ॥ ४१ ॥

आवरणभंगः ।

अतःपरम्पौराणप्रमेयस्य बलविचारणाय तन्निर्णयार्थमुपक्रमन्ते ॥ ॥ एव-मित्यादि ॥ ॥ वेदोपबृंहणत्वे स्मृतित्वेनैव सूत्रेषु तेषां ग्रहणेन तत्तुल्यत्वात् । तत्र पुराणलक्षणस्य प्रसिद्धत्वान्नाममात्रेणैव निर्दिशन्ति ॥ ॥ पुराणमिति॥ ॥ स्मृतिनिर्णयादेतन्निर्णयस्य वैलक्षण्यं ज्ञापयितुम्पुराणे कञ्चिद्विशेषमाहुः ॥ तस्येत्यादि ॥ ॥ अतो वेदवदेवास्य निर्णयः कर्त्तव्य इति भावः । एतेन प्रमाणस्वरूपमुक्तम् ॥ एवञ्च बृहदारण्यके "इतिहासः पुराणम्"इति छांदोग्ये च सनत्कुमारनारदसम्वादे "इतिहासःपुराणम्वेदानाम्पञ्चमोवेदः" इति श्रुतिरपि यु-ज्यते॥केचित्तु श्रौतान्येवेतिहासादीन्यादाय तेषां पञ्चमत्वमस्यां श्रुतौ व्याचचक्षिरे तत्तुच्छं तस्य वेदचतुष्टयान्तर्गतत्वेन पृथक्पाठसंख्ययोर्विरोधात्तावतो वेदभाग-स्य प्रक्षिप्तत्वापादकत्वाच्च ॥ पुराणादीनाम्वेदरूपत्वाभावे तैर्वेदोपबृंहणाभाव-प्रसक्तेश्च ॥ तथानङ्गीकारे तु "इतिहासपुराणाभ्याम्वेदं समुपबृंहयेत् ॥ बिभेत्यल्प श्रुताद्वेदो मामयं प्रहरिष्यति" इति ब्रह्माण्डीयप्रथमाध्यायवाक्यस्य "वेदाः प्रति-ष्ठिताः सर्वे पुराणे नात्र संशयः " इति विष्णुपुराणवाक्यस्य "इतिहासपुराणैस्तु कृतोयं निश्चलः पुरा" इति स्कान्दप्रभासखण्डीयस्य "नान्यथा ज्ञायते धर्मो बम्हविद्या च वैदिकी॥ तस्माद्धर्मःपुराणंच श्रद्धातव्यं मनीषिभिः" "इति कौर्मप-ञ्चदशाध्यायवाक्यस्य च विरोधापत्तेः॥ न चायमर्थवाद इति वाच्यम् । " पुराणे-ष्वर्थवादत्वं ये वदन्ति नरधमाः । तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हि" इति बृहन्नारदीये दोषस्मरणात् । अत इतिहासपुराणे प्रसिद्धे एव ग्राह्ये तेनात्र वेदातिदेशो युक्त एवेति दिक् ॥ तेन यत्सिद्ध्यति तदाहुः॥ ॥ तेनेत्यादि ॥ ॥ पृथगिति ॥ ॥ तेन यत्सिध्यति तदाहुः । तेन प्रतिपद्यत इति ज्ञातव्यमिति शेषः॥ तथाच यथा वेदेऽग्निहोत्रादयः पञ्चार्था अनेकरूपाः सभेदाःसाङ्गा उक्ता-स्तथा पुराणे धर्मादयोर्था उक्ता इत्यर्थः ॥ तथोक्तं मात्स्ये " धर्मश्चार्थश्च काम-श्च मोक्षश्च परिकीर्त्यते ॥ सर्वेष्वेव पुराणेषु तद्विरोधेषु यत्फलम्" इति । भक्तिरपि तथा । यथाचारमाधवे पुराणसारवचने । शैवञ्च वैष्णवं शाक्तं सौरं वैनायकन्तथा । स्कांदं च भक्तिमार्गस्य दर्शनानि षडेवहि"इति॥ अत्र व्युत्पत्त्यर्थं किञ्चिदुदाह्री-यते तत्र नित्यो धर्मो यथाऽतिथिपूजनादिः । "अतिथिर्विमुखो यातः पुण्यमादाय

गच्छति" इति ॥ काम्यो यथा पुत्रार्थन्दितिपयोव्रतम् । नित्यार्थो यथा ब्राह्मणस्य यात्रार्थं कुसूलकुम्भीधान्यादि ॥ वानप्रस्थस्य "स्वयं सञ्चिनुयात्सर्वमात्मनो वृत्तिकारणम्"इति । "यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्॥अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति"॥इत्यादिवाक्यैस्तस्य नित्यत्वम्॥काम्यो यथा इलायाः पुंस्त्वादिः ॥ नित्यकाम्यो यथा ऋतौ स्वदारागमनम् ॥ "ऋतुस्नातान्तु यो भार्यां शक्तःसन्नोपच्छगति ॥ घोरायाम्भ्रूणहत्यायां युज्यते नात्र संशयः" इत्यादिभिः । काम्यो यथा आग्नीध्रस्य पूर्वचित्तिसङ्गः । नित्यो मोक्षः सायुज्यम् ॥ काम्यः सालोक्यादिः । यथा सूतसंहितायां मुक्तिखण्डे ।" एवं बहुविधाः प्रोक्ता मुक्तयः पुरुषोत्तमे ॥ एतास्वशुद्धचित्तानामिच्छा नित्यम्प्रजायते । सायुज्यरूप परमा मुक्तिर्भुवि परात्मनि ॥ पारमार्थिकतादात्म्यरूपाप्यज्ञाननाशतः" इति ॥ द्विविधा भक्तिर्यथा श्रीभागवते "अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषम्परम् ॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनञ्जनाः ॥ स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः"इति मोक्षस्य भक्तेश्च नित्यत्वन्तदभावे संसारदुःखानिवृत्त्या ज्ञेयम् ॥ एवमेतदङ्गान्यपि ॥ तत्र धर्मस्याङ्गानि यथैकादशस्कन्धे "अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत्"इत्यत्र निषेधमुखेन तदितरो देशो धर्मसाधकत्वेन बोधितः ॥ एवङ्कालः । यथा "कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा"इति॥तत्र स्वतो यथा"प्रौष्ठपद्यष्टकाभूयः पितृलोके भविष्यति"इति मात्स्ये ॥ द्रव्यतो तथा । नवेऽन्नादौ जाते आग्रयणस्य । एतेनैव द्रव्यं ज्ञेयम् । यथाच पयोव्रते "सिनीवाल्यां मृदा लिप्य स्नायात्क्रोडविदीर्णया"इत्यादि । कर्त्ता यथा "एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मज"इत्यत्र प्रजाकामः । एवं नित्येपि ज्ञेयः । मन्त्रो यथा "त्वन्देव्यादिवराहेण"इत्यादि मृत्तिकास्नानमन्त्रः ॥ कर्माप्युक्तप्रायमेव । यथात्रत्यं पयोव्रताङ्गभूतं मृत्तिकास्नानं । अर्थस्याङ्गानि । तत्र देशो यथा मात्स्ये राजधर्मेषु । राजा सहायसम्पन्नः प्रभूतयवसेन्धनम् ॥ रम्यमानतसामन्तमगम्यं देशमाविशेत्" इति । कालो यथा "वणिङ्मुनिनृपाः स्नाता निर्गम्यार्थान्प्रपेदिरे" इत्यादौ दशमस्कन्धे शरत्कालोऽर्थसाधनत्वेनोक्तः ॥ यथाच मात्स्ये "पुष्टा योधा भृता भृत्याः प्रभूतश्च बलं मम ॥ मूलरक्षासमर्थोस्मि तदा यात्राम्प्रयोजयेत्"इत्यादिभिः । द्रव्यं यथा विष्णुधर्मोत्तरादिषु । "सङ्ग्रहश्चात्र सर्वेषामायुधानाम्प्रशस्यते"इत्यादिराजधर्मकथने ॥ कर्त्ता यथा मात्स्ये । "यस्मिन्कर्मणि यस्य स्याद्विशेषेण च कौशलम् । तस्मिन्कर्मणि तं राजा परीक्ष्य

विनियोजयेत्"इति । मंत्रो यथा नारायणकवचादयः । कर्म यथा मात्स्ये "संग्रामेष्वनिवर्त्तित्वम्प्रजानाम्परिपालनं ॥ शुश्रूषा ब्राह्मणानाञ्च राज्ञां निःश्रेयसम्परम्"इति । कामस्याङ्गानि तत्र देशः। यथा"प्रायशः प्राकृता लोकास्त्रियं रहसि बिभ्रति"इत्यादौ । कालो यथर्तुरात्र्यादिः॥ द्रव्यं यथा गारुडे"मनःशिला पत्रकञ्च सगोरोचनकुंकुमं ॥ एभिः कृते च तिलके नरः स्त्रीवशतामियात्"इति । कर्त्ता यथा पुराणान्तरे वरलक्षणे "यस्याशु प्लवते बीजं ह्लादि मूत्रञ्च फेनिलम् । पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः" इति । मन्त्रो यथा गारुडे ॥ गणपतिमन्त्रमुक्त्वा "अयुतञ्जुहुयाद्यस्तु शुचिः प्रयतमानसः । दृष्टमात्रे सदा तस्य वशमायान्ति योषितः" इति । कर्म यथा गारुडे "रतिकाले महादेव पार्वतीप्रिय शङ्कर ॥ निजं शुक्रं गृहीत्वा तु वामहस्तेन यः पुमान् । कामिनीचरणं वामं लिम्पेत्स स्यात्स्त्रियाः प्रियः" इति मोक्षस्याङ्गानि । तत्र देशो यथा"सप्त पुर्यस्त्रयो ग्रामा नवारण्या नवोषराः"इति पुराणान्तरे मोक्षदत्वेन गणिताः। यथा वाराहे"काश्यादिपुर्यो यदि सन्ति लोके तासान्तु मध्ये मथुरैव धन्या ॥ या जन्ममौञ्जीव्रतमृत्युदाहैर्नृणाञ्चतुर्धा विदधाति मुक्तिम्" इति ॥ कालो यथा "अग्निर्ज्योतिरहः शुक्लः"इत्यादिजातीयकवाक्यबोधितः ॥ द्रव्यं यथा " वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ॥ संसिद्ध्यत्याश्वसंमोहः शुद्धसत्वः शिलान्धसा" इति ॥ कर्ता यथा । न कामकर्मबीजानां यस्य चेतसि सम्भवः॥वासुदेवैकनिलयः स वै भागवतोत्तमः"इत्येकादशस्कन्धे ॥ मन्त्रो यथा ब्रह्माण्डपुराणे धरिणीशेषसम्वादः । "निर्विश्य भोगानन्ते च कृष्णासायुज्यमाप्नुयात्"इत्युपसंहारात्। कर्म यथा एकादशस्कन्धे जायन्तेयवाक्ये पूजाम्प्रकृत्य"एवमग्न्यर्कतोयादावतिथौ हृदये च यः। यजतीश्वरमात्मान माचिरान्मुच्यते हि सः"इति । भक्त्यङ्गानि यथा जनकजायन्तेयसंवादे" देशः क्वचिन्महाराज द्रविडेषु च भूरिशः" इति । कालो यथा तत्रैव " कृतादिषु प्रजा राजन्कलाविच्छन्ति सम्भवं । कलौ खलु भविष्यन्ति नारायणपरायणाः" इति ॥ द्रव्यं यथा तत्रैव " कावेरी च महापुण्या प्रतीची च महानदी ॥ ये पिबन्ति जलन्तासां मनुजा मनुजेश्वर ॥ प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः "इति॥ कर्त्ता यथा । "देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा ॥ भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम्" इति सप्तमस्कन्धे ॥ मन्त्रो यथा षष्ठस्कन्धे गद्यरूपो मन्त्रो येन शेषसाक्षात्कारः॥ कर्म यथैकादशे"भक्तियोगं स लभते एवं यः पूजयेत माम्" इति । एवमिदन्दिङ्मात्रम्प्रदर्शितम् ॥ एवमन्यदपि यथायोग्यमूह्यम् ॥ एतदेवोक्तम्पृथक्क् पृथगिति । एवं वेदस्य यज्ञार्थत्ववत्पुराणस्यैवं पुमर्थार्थना सूचिता

॥ व्यासस्य कर्तृत्वमाशङ्क्येति ॥ " अष्टादशपुराणानि कृत्वा सत्यवतीसुतः " इति वाक्यादाशंक्येत्यर्थः ॥ ॥ नित्यमिति ॥ ॥ " पुराणं सर्वशास्त्राणाम्प्रथमम्ब्रह्मणा स्मृतं ॥ नित्यं शब्दमयं ब्रह्म शतकोटिप्रविस्तरम् ॥ अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः । पुराणमेकमेवासीत्तस्मिन् कल्पान्तरेऽनघ" इति मात्स्यवाक्यात्तथेत्यर्थः ॥ एवम्पुराणस्वरूपविषयकः सन्देहो निराकृतः॥ एवञ्च व्यासकर्तृत्वं श्लोकसंग्रहवत्पुराणसमासकरणाद्बोध्यम् ॥ ॥ तस्येत्यादि ॥ ॥ वेदवत्पूर्वसिद्धत्वे वेदादेवार्थसिद्धेः किम्पुराणेनेत्याशङ्कानिरासाय तदाहेत्यर्थः ॥ ॥ सर्वोपयोगीति ॥ ॥ चतुर्वर्णोपयोगी ॥ तथाच वेदस्तु त्रैवर्णिकोपयोगी इदन्तु सर्वोपयोगीतीदमेव सर्वोपकाररूपम्प्रयोजनमित्यर्थः ॥ ननु नेदम्प्रयोजनन्त्रैवर्णिकानां वेदादेवार्थसिद्धेः । अतः शूद्रोपयोगित्वमात्रं वक्तव्यमित्याशङ्कायान्तदुपपादयंति ॥ ॥ द्विविधेत्यादि ॥ ॥ वैदिका इति ॥ ॥ प्रकृतियज्ञसाध्यो धर्मः । यज्ञोविकृतिसाध्योर्थः । पञ्चाग्निविद्यादिसिद्धः कामः । परविद्यासिद्धो मोक्षः॥ ॥पौराणिका इति॥ ॥व्रतदानादिधर्मो नीतिसाधितोर्थः । वात्स्यायनाद्यनूदितः कामः । सांख्ययोगशैववैष्णवतन्त्रोक्तरीतिका मोक्षाः ॥ पुराणानां सर्वोपयोगित्वञ्च " श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः"इत्यादिवाक्येभ्योवगम्यते । अन्यथा शूद्राणामेव श्रावणं विधीयेतातस्तथेत्यर्थः ॥ ॥ वैदिकेपीत्यादि ॥ ॥ जीवविचारितानाम्वेदानधिकृतार्थत्वात्पुराणानान्तादृशतदर्थत्वमायातीति तन्निरासाय वैदिके यज्ञादिरूपे धर्मेऽपि तदुपयोगमाहेत्यर्थः ॥ ४८ ॥ ॥ स्थितिर्न भवतीति ॥ ॥ तथाच वैदिकार्थत्वान्महानेवोपयोग इत्यर्थः ॥ ॥ तस्यावश्यकत्वमाहेति ॥ ॥ उपकरणाभावेपि देहादिस्थितेर्लोके दर्शनान्न पुराणस्य तदर्थत्वमिति शङ्कायान्तदाहेत्यर्थः ॥ ॥ हृदयत्वमिति ॥ ॥ धर्महृदयत्वम् । भावयुक्तस्येत्यत्र भावपदेनाभिप्राय उच्यते । तदुपपादयन्ति ॥ वेदे इत्यादिना ॥ ॥ कदाचिदित्यादि ॥ ॥ यथा ब्रह्माण्डपुराणे कलिवर्ज्यकथनेऽग्निहोत्रादिनिषेधः ॥ यथाच "यावद्वर्णविभागोस्ति यावद्वेदः प्रवर्त्तते । संन्यासञ्चाग्निहोत्रञ्च तावत्कुर्यात्कलौ युगे" इति प्रतिप्रसवः । यथाच " आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इतिश्रुत्या सर्वस्य साग्निकस्य श्रौताग्निभिर्दाहे प्राप्ते "वैतानम्प्रक्षिपेदप्सु आवसथ्यञ्चतुष्पथे॥ पात्राणि तु दहेदग्नौ यजमाने वृथा मृते" इत्येवञ्जातीयकेन श्रुतेः पतितातिरिक्तविषयत्वरूपो भावो बोध्यते ॥ यथाच श्रीभागवते "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ॥ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति बोध्यते तथेत्यर्थः ॥ एवम्वेदार्थसन्देहवारकत्वेन मीमांसावदुपयोगो बोधितः ॥ ४९ ॥

ज्यमुक्ति "सायुज्यरूपा परमा मुक्तिर्भुवि परात्मनि" ॥ काम्यमोक्ष जैसें सालोक्यमुक्तिप्रभृति, ऐसेंही निष्काम होकें भक्ति करीजाय वह नित्यभक्ति कहावें है ॥ सर्वकाम अथवा मोक्षकामनाकेलिये भक्ति करीजाय वो काम्यभक्ति कहीजावे है ॥ जैसें अग्निहोत्रादिकनमें देशकालादि छः पदार्थ अङ्ग हैं तैसें धर्मादिपदार्थनकेभी न्यारे२देशकालादिक अङ्ग हैं॥शङ्का–"अष्टादशपुराणानां कर्ता सत्यवतीसुतः" अर्थ–अठारहपुराणके कर्त्ता व्यासजी हैं इत्यादिवचनसों व्यासजी पुराणके बनायवेवारे हैं यह निश्चय होताहै उनकूँ वेदतुल्यता कैसें सम्भवसके ॥ उत्तर–पुराण सब नित्य हैं, पहिलीसोंही सिद्ध हैं॥"पुराणं सर्वशास्त्राणाम्प्रथमम्ब्रह्मणा स्मृतम् ॥ नित्यं शब्दमयं ब्रह्म शतकोटि प्रविस्तरम् ॥ अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ पुराणमेव तत्रासीत्तस्मिन्कल्पे पुर[illegible]" अर्थ–सबशास्त्रनके पहिली ब्रह्मानें पुराणको स्मरणकियो तापीछें ब्रह्माके मुखसों वेद निकसे वा कल्पमें पहिली पुराण ही हते इत्यादिमात्स्यपुराणके वचन या विषयमें प्रमाण हैं। जैसें धर्मसिन्धुनिर्णयसिन्धुआदिग्रन्थनके श्लोकसंग्रहकरवेमात्रसों कमलाकरभट्टआदि ग्रन्थकर्ता कहावेंहैं तैसें सोक्रोडपुराणको संक्षेपसों चारलाखश्लोकमात्रके संग्रहकर्ता व्यासजी पुराणकर्ता कहावें हैं॥ शङ्का–पुराण वेदके समानहै तबतो वेद विद्यमानही है वाहीसोंही प्र[illegible] सिद्ध होयजायगो पुराणको कहा प्रयोजन है ॥ उत्तर–वेद है सो ब्राह्मण क्षत्रिय वैश्य तीन वर्णकोही उपयोगी है पुराण सबको उपयोगी है तासों सबनको उपकार होनोही पुराण प्रकटहोयवेको फल है ॥ शङ्का–तीनवर्णनको तो वेदहीसों उपकार होयजायेगो केवल शूद्रको उपकार होनोंही पुराणको प्रयोज[illegible] कहनो योग्यहै ॥ उत्तर–चारोंपुरुषार्थ दोप्रकारके हैं

ईश्वरके विचारेभये धर्म अर्थ काम मोक्ष वेदमें लिखे हैं, याजीवके विचारेभये धर्म अर्थ काम मोक्ष पुराणमें लिखे हैं ॥ यदि शूद्रकेही लियें पुराण होय तो " श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः " इत्यादि महाभारतादिकनके वाक्यनमें चारोंवर्णकों पुराणको सुनावनो क्यों विधानकरते ॥ वेदके लिखेभये धर्ममेंभी पुराणनको उपयोग है, वेदोक्त यज्ञादिकधर्म देहस्थानापन्न हैं, स्मृतिनके लिखे संस्कार प्रायश्चितादिक धर्म घरके स्थानापन्न हैं, पुराणके लिखे व्रतदानादिक धर्म गृहकी अन्नवस्त्रादिक सामग्रीके ठिकाने हैं, जैसें घरमें कछु साहित्य नहिं होय तो देहकी स्थिति नहीं होयसकें ऐसें पुराणविना वेदोक्त धर्मकी स्थिति नहिं होसकें तासों पुराणकी अत्यावश्यकता है ॥ ४८ ॥ पुराणके अर्थको ज्ञान नहिं होय तहांताई सबप्रकारसों मनुष्य मूढ रहें है क्योंकि पुराणके जानेविना जगतके बाहरके पदार्थको ज्ञान नहिंहोतहै याहीसों श्रुतिस्मृति ये दोनों धर्मके नेत्र हैं, पुराण धर्मको हृदय है, इत्यादि अनेकवचन हैं ॥ वेदमें यज्ञादिक कहे हैं उनके अभिप्रायको ज्ञान पुराणकेद्वाराही होतहै ॥ वैदिककर्म कब करनों कब नहिंकरनो, कर्म अकर्म विकर्म आदिको स्वरूपज्ञान तथा कर्म कहांताईं करनों इत्यादि बोध पुराणविना नहिंहोय, जैसें ब्रह्माण्डपुराणमें अग्निहोत्रादिकनको निषेध कलियुगमें है ताकी व्यवस्था लिखीहै ॥ " यावद्वर्णविभागोस्ति यावद्वेदःप्रवर्त्तते ॥ सन्यासश्चाग्निहोत्रञ्च तावत्कुर्यात्कलौ युगे " ॥ अर्थ—जहाँताईं ब्राह्मण क्षत्रिय वैश्य शूद्र ये चारों वर्ण न्यारे रहें, जहाँताईं चारों वेद विद्यमान हैं कलियुगमें सन्यास अग्निहोत्र तहाँताईं करनों ॥ जैसें वेदमें लिखीहै अग्निहोत्रीकूँ यज्ञपात्रकरकें सहित अग्निमें जलायदेनों इत्यादिवचनसों सामान्यकरके सबहि अग्नि-

होत्रीको श्रौताग्निकरकें दाह प्राप्तभयो तहाँ "वैतानम्प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ॥ पात्राणि तु दहेदग्नौ यजमाने वृथा मृते"॥ या पुराणवचनकरकें जो अग्निहोत्री पतित न होय वाहीको अग्निहोत्रकी अग्निसों दाह करनों ॥ जो अग्निहोत्री पतित होय तो वाके वैतानकूँ जलमें डारनों आवसथ्य अग्निकूँ चाररस्ताकेमध्यमें धरनों पात्रनकूँ अग्निमें डारने इत्यादि व्यवस्था होतहै, ऐसेंही कर्म्म कहाँतक करनों यह सन्देह भयो तहाँ "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता"॥ अर्थ—तहाँ तांई कर्म करतेरहनो जहाँतांई पूरो वैराग्य मनमें दृढ नहिंहोय इत्यादि श्रीभागवतपुराणके वचनसों व्यवस्था होतहै तासों मीमांसा जैसें वेदके सन्देहकों दूरकरवेवारी है तैसें पुराणभी वेदके सन्देहकों दूरकरवेवारो है ॥ ४९ ॥

**सर्वसृष्टिपदार्थानां यथार्थज्ञापनन्ततः ॥ शाखाविभागवत्तस्य विभागः सोप्यनेकधा ॥५०**
**शतं कल्पास्ततोप्यन्ये सन्ति कृष्णेन निर्मिताः॥सत्वेन रजसा वापि तमसा वाप्यनेकधा५१**

तत्त्वदीपप्रकाशः ।

किञ्च ॥ सृष्टौ यावन्तः पदार्थास्तेषां याथार्थ्यं पुराणादेवावगन्तव्यम् ॥ यथा "प्रन्हादो ह वै कायाधवः" इति कयाधूप्रभृतीनां स्वरूपम् ॥ अष्टादशपुराणादिसमाख्यायामुपायमाह ॥ शाखाविभागवदिति ॥५०॥ तत्र यज्ञस्य भगवत्वं सिद्धमिति न सन्देहः॥ प्रकृते कथमित्याशंक्य प्रकारमाह ॥ शतङ्कल्पा इति ॥ ब्रह्मण एकस्मिन्वर्षे एको मुख्यः कल्पो ब्रह्मजन्मादिवसादिः ॥ ततोऽप्यन्ये दैनंदिनाः ॥ दिनमध्येपि कल्पसमसीं केचिदाहुः ॥ तथा युगान्ते ॥ तत्र सर्वत्र भुवनात्मको वृक्षो

भगवान् नानारूपो भवति ॥ अतस्तत्प्रकारप्रतिपादकानि पुराणानीति शाखाविभागवद्विभागः॥ अवान्तरभेदान्वक्तुमाह॥ सत्वेनेति ॥५१॥

आवरणभंगः।

एवं क्वचिदुपयोगमुक्त्वा धर्ममात्रेषु पुराणोपयोगमाहुः॥ किञ्चेत्यादिना ॥ मूले युज्यत इति उपयुज्यत इत्यर्थः॥ एतेनावान्तरप्रयोजनमुक्तम्॥ अष्टादशेत्यादि॥ सार्द्धद्वयेन प्रमेयं विशदीकर्तुं वेदतुल्यतां दृढीकर्त्तुमत्रोपायमाहेत्यर्थः॥ अष्टादशपुराणादीत्यादिपदेनोपपुराणसंहितानाञ्च संग्रहः॥ स च विभागो मात्स्ये सलक्षणक उक्तः॥"कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो द्विजाः। व्यासरूपमहं कृत्वा संहारामि युगे युगे॥ चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा। तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन्प्रभाष्यते। अद्याप्यमर्त्यलोके तच्छतकोटिप्रविस्तरम्॥ एतदर्थो चतुर्लक्षे संक्षेपेण निवेशितः। पुराणानि दशाष्टौ च साम्प्रतन्तदिहोच्यते॥ नामतस्तानि वक्ष्यामि शृणुध्वमृषिसत्तमाः। ब्रह्मणाभिहितम्पूर्वं यावन्मात्रं मरीचये॥ ब्राह्मं तु दशसाहस्रम्पुराणम्परिकीर्तितम्। एतदेव यदा पद्ममभूद्धिरण्मयं जगत्॥ तद्वृत्तान्ताश्रयन्तद्वै पाद्ममित्युच्यते बुधैः। पाद्मन्तु पञ्चपञ्चाशत्सहस्राणीह पठ्यते। वाराहकल्पवृतान्तमधिकृत्य पराशरः। यत्राह धर्मानखिलांस्तदुक्तं वैष्णवं विदुः। त्रयोविंशतिसाहस्रन्तत्प्रमाणं विदुर्बुधाः। श्वेतकल्पप्रसङ्गेन धर्मान्वायुरिहाब्रवीत्। यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम्। चतुर्विंशत्सहस्राणि पुराणन्तदिहोच्यते। यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः॥ वृत्रासुरवधोपेतन्तद्भागवतमुच्यते। सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः। तद्वृत्तान्तोद्भवन्तच्च पुराणम्परिकीर्तितम्॥ अष्टादशसहस्राणि पुराणन्तत्प्रकीर्तितम्। यत्राह नारदो धर्मान्बृहत्कल्पाश्रयांस्त्विह। पञ्चविंशत्सहस्राणि नारदीयन्तदुच्यते। यत्राधिकृत्य शकुनीन् धर्माधर्मविचारणम्॥ व्याख्यातञ्जैमिनिप्रश्ने पक्षिभिर्धर्मचारिभिः॥ मार्कण्डेयेन कथितन्तत्सर्वं विस्तरेण तु। पुराणं नवसाहस्रं वर्ण्यन्तदिहोच्यते। यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च। वसिष्ठायाग्निना प्रोक्तमाग्नेयन्तत्प्रकीर्तितम्॥ तच्च षोडशसाहस्रं सर्वक्रतुफलप्रदम्। यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः। अघोरकल्पवृत्तान्तप्रसङ्गेन गतिं स्थितिम्॥ मनवे कथयामास भूतग्रामस्य लक्षणम्। चतुर्दशसहस्राणि तथा पञ्चशतानि च॥ भविष्यच्चरितप्रायम्भविष्यन्तदिहोच्यते। रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च। सेतिहासकथापूर्वं जन्मसम्बन्धवर्णिना"इति॥ ब्रह्मचारिणा नारायणरूपिणेत्यर्थः॥"सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतं॥ यत्र ब्रह्मवराहस्य

चरितम्वर्ण्यते मुहुः । तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते । यत्राग्निर्लिंगमध्यस्थः प्राह देवो महेश्वरः । धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च । कल्पान्ते लिङ्गमित्युक्तम्पुराणं ब्रह्मणा स्वयम् ॥ तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ॥ महावराहं तु पुनर्माहात्म्यमधिकृत्यच ॥ विष्णुनाभिहितं क्षोण्यै तद्वाराहमिहोच्यते । मानवस्य प्रसङ्गेन कल्पन्तु मुनिसत्तमाः॥ चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते । यत्र माहेश्वरान्धर्मानधिकृत्य च षण्मुखः॥ कल्पे तत्पुरुषे वृत्ते चरितैरुपबृंहितम् ॥ स्कान्दंनाम पुराणं तदेकाशीति निगद्यते ॥ सहस्राणि शतं चैकमिति मर्त्येषु पठ्यते । त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ॥ त्रिवर्गमभ्यधात्तच्च वामनम्परिकीर्तितम् । पुराणन्दशसाहस्रं कूर्मकल्पानुगं शिवम् । यत्र धर्मार्थकामानां मोक्षस्य च रसातले । माहात्म्यङ्कथयामास कूर्मरूपी जनार्दनः । इन्द्रद्युम्नप्रसङ्गेन ऋषीणां शक्रसन्निधौ ॥ सप्तदशसहस्राणि लक्ष्मीकल्पानुषङ्गिकं ॥ श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः । मत्स्यरूपी च मनवे नरसिंहोपवर्णनं ॥ अधिकृत्याब्रवीत्स प्तकल्पवृत्तं मुनिव्रतम् ॥ तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश ॥ यदा च गारुडे कल्पे विश्वाण्डङ्गरुडोद्भवं ॥ अधिकृत्याब्रवीत्कृष्णो गारुडन्तदिहोच्यते । तदष्टादश चैकन्तु सहस्राणीह पठ्यते । ब्रह्माब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्पुनः । तच्च द्वादशसाहस्रम्पुराणं द्विशताधिकम् । भविष्याणाञ्च कल्पानां श्रूयते यत्र विस्तरः ॥ तद्ब्रह्माण्डपुराणन्तु ब्रह्मणा समुदाहृतम्" इति । एतेषान्विशेषलक्षणान्यपि तत्र २ सन्ति ॥ यथा पाद्मे पाद्मस्य । "स्थिताय भवभीताय ब्रह्मणे नाभिपङ्कजे ॥ प्रोक्तम्भगवता मुख्यं पाद्मं पञ्चोनषष्टि च । भूपातालोत्तराः खण्डाः पुराणेस्मिन्न् त्रयः स्मृताः" यथाच श्रीभागवतलक्षणं स्कान्दे "ग्रन्थोष्टादशसाहस्रो द्वादशस्कन्धसंयुतः । हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥ गायत्र्या च समारम्भस्तद्वै भागवतं विदुः" इति । पाद्मे चोत्तरखण्डे "इदम्भगवता प्रोक्तश्चतुःश्लोक्यां स्वयम्भुवे । नारदाय स वै मह्यमवोन्मुनये ह्यहं । शुकाय ब्रह्मराताय स तु राज्ञेभिमन्यवे ॥ शुकोक्तं विष्णुराताय सदसि ब्रह्मवादिनां ॥ श्रीमद्भागवतं नाम शुनवान्तमसः परम्" इति ॥ एतदेव लक्षणं वाराहेपि परीक्षितः शापकथनप्रसङ्गे श्लोकान्तरेणास्ति । यथाच कूर्मलक्षणं कौर्मे "इदन्तु पंचदशमम्पुराणं कौर्ममुत्तमम् ॥ चतुर्धा संस्थितम्पुण्यं संहितानाम्प्रभेदतः । ब्राह्मी भागवती सौरी वैष्णवी च प्रकीर्त्तिताः॥ चतस्रः संहिताः पुण्या" इति ॥ यथाच पाद्मे ब्रह्माण्डपुराणलक्षणम् ॥ "ब्रह्माण्डं मोक्षधर्माख्यम्" इति ॥ यथाच कौर्मे। "वायवीयमनन्तरम् ॥ अष्टादशमसमुद्दिष्टम्ब्रह्माण्डमिति संज्ञितम्" इति। यथाच ब्रह्मवैवर्त्ते ब्रह्मप्रकृतिगणपतिश्रीकृष्णजन्माख्यखण्डचतुष्कविशिष्टत्वमुक्तं स्वस्य । एवम-

न्यत्रापि ज्ञेयम् ॥ आदित्यपुराणे तु । " ब्राह्मम्पुराणन्तत्राद्यं संहिताभ्यां विभूषितम्। काश्मीरसंहिता यस्याः पुरुषोत्तमसंहिता । श्लोकानान्दशसाहस्रं नानापुण्यकथायुतम् " इति लक्षणम्ब्राह्मस्योक्तम् । एवं "ततो भागवतम्प्रोक्तम्भागद्वयविभूषितम्" इति ॥एवं "चतुर्भिः पर्वभिःप्रोक्तम्भविष्यन्तदनन्तरम्" इति॥ एवम्भागद्वयेन लैङ्गञ्चेति ॥ "संयुक्तमष्टभिः खण्डैः स्कान्दं चैव सविस्तरम्" इति। कौर्मम्भागद्वयविराजितमिति। "भागद्वयेन कथितम्ब्रह्माण्डमितिसंज्ञितम्" इति। गणनाक्रमस्तु सर्वत्रैक एव। उपपुराणानि च सलक्षणानि मात्स्य एव कानिचिद्वर्णितानि। तथाहि। पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनं ॥ तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते। नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते॥ नन्दा पुराणन्तत्प्रोक्तं संख्यानामिति कथ्यते । यत्र सांबं पुरस्कृत्य भविष्येपि कथानकम् । प्रोच्यते तत्पुनर्लोके सांबमेतन्मुनिव्रताः । एवमादित्यसंज्ञञ्च तत्रैव परिपठ्यते ॥ अष्टादशभ्यस्तु पृथक् पुराणं यत्र दृश्यते ॥ विजानीध्वं मुनिश्रेष्ठास्तदेतेभ्यो विनिर्गतम् " इति ॥ एवमेव स्कान्दप्रभासखण्डेपि । आदित्यपुराणे त्वादित्यस्य लक्षणमप्युक्तम् ॥ "यदुक्तम्भानुना पूर्वम्पुत्राय मनवे द्विजाः । तदहं सम्प्रवक्ष्यामि श्रृणुध्वङ्गदतो मम ॥ इदम्ब्रह्मपुराणस्य खिलं सौरमनुत्तमम् । संहिताद्वयसंयुक्तम्पुण्यं शिवकथायुतम्। आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता"इति॥ सर्वेषामुपपुराणानाङ्गणना तु कौर्मे प्रथमाध्याये' आद्यं सनत्कुमारोक्तं नारसिंहं ततःपरं ॥ तृतीयं नांदमुद्दिष्टं कुमारेण तु भाषितम् ॥ चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्॥ दुर्वाससोक्तमाश्चर्यं नारदीयमतःपरम् ॥ कापिलम्मानवञ्चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणञ्चाथ कालिकाव्हयमेवच । माहेश्वरन्तथा सांबं सौरं सर्वार्थसञ्चयम्। पराशरोक्तमपरं मारीचं भार्गवाह्वयम् " इति॥ सूतसंहितायान्तु नान्दस्थाने स्कान्दमुक्त्वाग्रे तल्लक्षणमुक्तम् "लक्षन्तु ग्रन्थसंख्याभिःसर्वविज्ञानसागरम् । स्कान्दमद्याभिवक्ष्याभि पुराणं श्रुतिसम्मितम्। षड्भिर्विधैः संहिताभेदैः पञ्चाशत्खण्डमण्डितं॥ आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता। तृतीया शाङ्करी विप्राश्चतुर्थी वैष्णवी मता । तत्परा संहिता ब्राह्मी सौरान्या संहिता मता" इति । एवं"ततः कालीपुराणाख्यं वासिष्ठं मुनिपुङ्गवाः । ततो वासिष्ठलिङ्गाख्यम्" इति लक्षणमिवोक्तम् ॥ क्रमस्तु कौर्मोक्तरीतिक एव । कालिका पुराणे तु क्रमो नामानि च भिन्नान्येव। तथाहि। शैवं यद्वायुना प्रोक्तं वैरंचं वैष्णवन्तथा। यदिदङ्कालिकाख्यञ्च मूलं भागवतं स्मृतं ॥ सौरञ्च नारदीयञ्च मार्कण्डेयं च वन्हिजम् ॥ भविष्यं ब्रह्मवैवर्तं लैंगञ्चैव त्रयोदशम् ॥ वामनं कौर्मं मात्स्यञ्च सप्तदशं च गारुडम्। स्कान्दमष्टादशम्प्रोक्तम्पुराणञ्च न संशयः" इति।

भविष्यं च सौरपुराणे चतुःपर्वमुक्तं। "चतुर्भिः पर्वभिः प्रोक्तं भविष्यं तदनंतरम्" इति॥भविष्ये तु"पर्वाणि चात्रयंचैव कीर्तितानि स्वयम्भुवा"इत्युक्त्वा ब्राह्मं वैष्णवं शैवन्त्वाष्टम्प्रतिसर्गाख्यञ्चेति तेषां नामान्युक्तानि । यद्यपि तत्रोपपुराणत्वमेषां कंठतो नोक्तं तथापि पुराणान्तरे उपपुराणत्वेन गतिणयोः कालिकासौरयोर्निवेशात्क्रमभेदाच्च ज्ञेयम् । अन्यथा सर्वत्र प्रसिद्धं क्रमं न जह्यात् । नचान्यत्रोपपुराणेषु गणितानां शैवादीनां दर्शनादेतयोः पुराणत्वं शंक्यम् । अप्रयोजकत्वात् । स्कान्दनारदीयब्रह्माण्डेषु नाममात्रसाम्यस्य पुराणान्तरसंमतत्वादन्येषां पुष्करादिवरहस्यविष्णुरहस्यविष्णुधर्मादीनान्दर्शनादेतेष्वप्युपपुराणत्वस्य शक्यवचनत्वात्। अतएव भविष्यपुराणीयप्रथमाध्यायान्ते"सर्वाण्येव पुराणानि संख्यया भरतर्षभ॥ द्वादशैव सहस्राणि प्रोक्तानीह महर्षिभिः ॥ पुनर्वृद्धिङ्गतानीह चाख्यानैर्बहुभिर्नृप ॥ यथा स्कान्दन्तथा चैव भविष्यं कुरुनन्दन ॥ स्कांदं शतसहस्रन्तु श्लोकानां ज्ञातमेव हि ॥ भविष्यमेतदृषिणा लक्षार्द्धं संख्यया स्मृतम्" इति॥ सन्दर्भे महर्षिप्रोक्तत्वसंख्याविशेषाभ्यामुपपुराणत्वमेव स्कान्दभविष्ययोरुद्घाटितं । एवं सति "सर्गोस्याथ विसर्गश्च वृत्तीरक्षान्तराणि च ॥ वंशो वंश्यानुचरितं संस्थाहेतुरपाश्रयः । दशभिर्लक्षणैर्युक्तम्पुराणन्तद्विदो विदुः । केचित्पञ्चविधं प्राहुर्महदल्प व्यवस्थया" इत्युक्त्वाग्रे सर्गादीनान्दशानां लक्षणानि चोक्त्वा "एवं लक्षणलक्ष्याणि पुराणानि पुराविदः । मुनयोऽष्टादश प्राहुःक्षुल्लकानि महान्ति च" इति । द्वादशस्कन्धीयसप्तमाध्यायवाक्याद्यत्र पंचलक्षणत्वन्तत्र महापुराणानामसाम्येपि न महापुराणत्वं किन्तु पुराणत्वमेव । अतएवादित्यपुराणे उक्तमेतच्चतुर्लक्षणम् । एतच्चोपपुराणे"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चैव पुराणम्पंचलक्षणं ॥ ब्रह्मादीनाम्पुराणानामुक्तमेतत्तु लक्षणम् । एतच्चोपपुराणानां खिलत्वाल्लक्षणं स्मृतम्" इति पंचलक्षणत्वमेवोक्तम् । "अष्टादशपुराणानि श्रुत्वा सत्यवतीसुतात् । अन्यान्युपपुराणानि मुनिभिः कीर्त्तितानितु" इति सूतसंहितावाक्याच्च । अत्र मात्स्यादौ लक्षितेषु पुराणेषु ब्राह्मणस्य लक्षणम्प्रसिद्धे ब्राह्मे न दृश्यते । तेन तदुपपुराणम् । वैष्णवे संख्या न मिलति । एवमन्यत्रापि काशीमाहात्म्यादियुक्तं ब्रह्मवैवर्तमन्यदेव उक्तलक्षणाभावात् । महापुराणलक्षणन्तु श्रीभागवत एव दृश्यते नेतरत्र तेन तेषु पुराणत्वमेव बोध्यमिति प्रसङ्गादुक्तम् ॥ प्रकृतमनुसरामः ॥ तथाच व्यासेन समसनाद्व्यासकर्तृत्वम्पुराणेषूच्यते विभागाच्चाष्टादशत्वादिकन्तेन यथा वेदशाखानां काठकादिसमाख्या तथात्र ब्राह्मादिसमाख्या यथा तत्र शाखानां सहस्रत्वमेवमत्राष्टादशत्वम् । तथाच पूर्णो वेदातिदेशोऽत्र सिद्ध इति पञ्चार्थकथनमिह युक्तमिति भावः ॥ ५० ॥ तत्रेत्यादि ॥ ॥ तत्र वेदे

यज्ञस्य भगवत्त्वं "यज्ञो वै विष्णुः" इति श्रुत्या सिद्धमिति शाखानां तद्रूपप्रतिपादकत्वे सन्देहो न प्रकृते कथमित्याशंक्य पुराणे धर्मादिपञ्चार्थप्रतिपादकत्वेन भगवद्रूपप्रतिपादकत्वाभावात्कथं शाखाविभागवत्पुराणविभाग इत्याशंक्य पुराणविभागप्रकारमर्द्धेनाहेत्यर्थः ॥ ब्रह्मण एकस्मिन्नित्यादि॥ ॥ तदुक्तं मात्स्ये कल्पानुकीर्त्तने उपांत्याध्याये । "प्रथमःश्वेतकल्पस्तु द्वितीयो नीललोहितः । वामदेवस्तृतीयस्तु ततो रथन्तरोऽपरः । रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः । सप्तमोथ बृहत्कल्पःकन्दर्पोष्टम उच्यते। सद्योथ नवमः प्रोक्त ईशानो दशमःस्मृतः॥ व्यान एकादशः प्रोक्तस्तथा सारस्वतोपरः॥त्रयोदश उदानस्तु गारुडोथ चतुर्दशः। कौर्मः पञ्चदशः प्रोक्तः पौर्णमासी प्रजापतेः॥षोडशो नारसिंहस्तु समानस्तु ततोपरः॥आग्नेयोष्टादशः प्रोक्तः सोमकल्पस्तथा परः॥मानवो विंशमः प्रोक्त उदान इति चापरः । वैकुंठश्चापरस्तद्वल्लक्ष्मीकल्पस्तथा परः ॥ चतुर्विंशतिमः प्रोक्तः सावित्रीकल्पसंज्ञकः । पञ्चविंशतिमो घोरो वाराहस्तु ततः परः ॥ सप्तविंशोथ वैराजो गौरीकल्पस्तथा परः॥माहेश्वरस्ततः प्रोक्तस्त्रिपुरं यत्र घातितम्। पितृकल्पस्तस्यैवान्यो या कुहूर्ब्रह्मणः स्मृता । इत्येवं ब्रह्मणो मासः सर्वपातकनाशनः॥आदावेवान्हिमाहात्म्यं यस्मिन्यस्य विधीयते । तस्य कल्पशतं नाम विहितं ब्रह्मणा पुरा" इति॥ तथाच यदा ब्राह्मकल्पोक्तरीतिकैव सृष्टिः किंश्चित्किञ्चिद्वैलक्षण्येन भवति । अवान्तरेषु कल्पेषु ब्रह्मणः सत्यलोके शयने भूरादीनाञ्च त्रयाणामेव नाशस्मरणात् । एवं वर्षदिनपर्यन्तम्भवने ब्रह्माण्डस्य कालेन शीर्णतायां ब्रह्माण्डं सर्वमात्मसात्कृत्य जले आवरणात्मके स्वपिति ततः प्रबुद्धःस्वजन्मदिवसत्वान्नवं ब्रह्माण्डं प्रकारान्तरेणोत्पादयति तदा तत्रत्या सृष्टिः पूर्वस्माद्विलक्षणा भवति । सापि पूर्ववद्वर्षदिनपर्यन्तम्भवति । यथा पाद्मः कल्पः तत्रैवैकस्मिन्वर्षे पूर्वोक्ताः श्वेतादयस्तिथिरूपत्वाद्द्वादशवारम्परिवर्तन्ते ॥ अतएव पुराणेषु पृथिव्याः क्वचिज्जघनरूपत्वं क्वचिदब्जरूपत्वं क्वचित्पृथग्रूपत्वम् । एवं लोकेष्वपि वैलक्षण्यमतः कल्पभेदेन तत्सर्वं संगतम्भवति । इदं तृतीयस्कन्धसुबोधिन्यामुपपादितं तन्निबन्धे च श्रीमदाचार्यैः ॥ दैनन्दिनास्तूक्ता एव ॥ दिनमध्येपीति ॥ ॥ यथा पुराणान्तरे क्वापि मयूरकल्पः । यथाच वाराहपुराणे मेघवाहनकल्प उक्तः प्रागितिहासे रुद्रगीतासु । यत्राह भगवान् "त्वंच रुद्र महाबाहो मोहशास्त्राणि कारय ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज" इति रुद्रमाज्ञप्तवान् । रुद्रश्च तन्निर्वाहाय मां वहेति प्रार्थितवान् तदा भगवान्मेघो भूत्वा कल्पमेकं रुद्रमवहत्स मेघवाहनकल्पः । तस्य तिथिरूपेष्वगणनात्तस्मिन् ब्रह्माण्डकरणानुक्तेश्च न जन्मदिवसरूपत्वम् । वराहपुराणलक्षणे महावाराहकल्पाश्रितत्वकथनात् । एवं सति तस्य दिनमाध्य

मिकत्वमायाति । एवमन्यत्रापि बोध्यम् । दिनमध्य इति मन्वन्तरसमाप्तौ युगान्त इति चतुर्युगान्ते ॥ ॥ तत्र सर्वत्रेत्यादि ॥ ॥ जन्मदिनं दैनन्दिनदिनमध्यगत-युगान्तभेदभिन्नेषु कल्पेषु भुवनात्मको वृक्ष ऊर्ध्वमूलमित्यादिनोक्तो भगवान् "येन यत्र यतो यस्य यस्मै यद्यद्यथा यदा । स्यादिदं भगवान् साक्षात्प्रधानपुरुषेश्वरः" इत्यादिवाक्यैर्ब्रह्मवादे भगवद्रूपो नाना क्वचित्सर्वथा वैलक्षण्येन कचिदीषद्वैलक्षण्ये-न नाना भवति ॥ ॥ अतस्तत्प्रकारेत्यादीति ॥ ॥ न पुराणविभागानुपपत्तिरित्य-र्थः ॥ ॥ अवान्तरेत्यादि ॥ ॥ प्रकारभेदबोधनायेतिशेषः । तथाच "सात्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः ॥ राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः । तद्वदग्नेश्च माहात्म्यन्तामसेषु शिवस्य च ॥ सङ्कीर्णेषु सरस्वत्याः पितृणाञ्च नि-गद्यते" इति मात्स्ये संख्यानुक्रमणिकाध्याये ॥ तथा तत्रैव कल्पानुकीर्तनाध्याये श्वेतादींस्त्रिंशत्कल्पानुक्त्वा "संकीर्णास्तामसाश्चैव राजसाः सात्विकास्तथा ॥ रज-स्तमोमयास्तद्वत्रयस्त्रय उदाहृताः । सङ्कीर्णेषु सरस्वत्याः पितॄणां व्युष्टिरुच्यते । अग्नेः शिवस्य माहात्म्यन्तामसेषूपवर्ण्यते । सात्विकेष्वधिकन्तद्वद्विष्णोर्माहात्म्यमु-च्यते। तत्रैव योगसंसिद्धा गमिष्यंति पराङ्गतिम्" इति चोक्तवानितरभेदान्वक्ष्यमि-त्यर्थः ॥ ५१ ॥

व्रजभाषाटीका ।

किञ्च सृष्टिमें जितने पदार्थ हैं उनको यथार्थ स्वरूप पुराणसों-ही जाननों ऐसें वेदमें लिखी है। "प्रह्लादो ह वै कायाधवः" ॥ प्रल्हाद हैं सो कयाधुको पुत्र है इतनोंमात्र वेदमें लिखोहै तहां कयाधुनामवाली हिरण्यकशिपुकी स्त्री है वाके प्रल्हादजी पुत्र हैं इत्यादि यथार्थस्वरूप पुराणसोंही जानोजावेंहै ॥ जैसें सम्पूर्ण वेद-को अध्ययन नहिं होतो देख्यो तब व्यासजीनें वेदके विभाग कर-कें ऋषिनकूं वेद पढायो. जिन जिन ऋषिननें जितनों वेद प-ढ्यो वो वेदभाग शाखानामसों प्रसिद्ध भयो। ऐसेंही एकपुराणके विभाग करकें अष्टादशपुराण उपपुराण रचें हैं॥ मत्स्यपुराणमें म-त्स्यभगवान् आज्ञाकरें हैं "कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो द्वि-जा॥व्यासरूपमहं कृत्वा संहरामि युगे। युगेचतुर्लक्षप्रमाणेन द्वापरे

द्वापरे सदा ॥ तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन्प्रभाष्यते " मत्स्यावतार कहें है जब मनुष्यकी (शतकोटि) सौक्रोडपुराण पढवेकी सामर्थ्य नहिंरही तब मैं व्यासजीको रूप धारणकरकें पुराणको संहार करूंहूँ। जब द्वापर आवें तब चारलाखग्रंथमें अष्टादशपुराण बनाऊँहूँ॥ आगें मत्स्यपुराणमें लिखीहै अभीभीदेवलोकमें सोक्रोड पुराण है वा पुराणको संक्षेपकरके अर्थ इन अष्टादशपुराणनमें है। ब्रह्माजीनें मरीचिऋषिके प्रति जो पुराण दशहजार श्लोकसंख्यावालो कह्योहै वह ब्राह्मपुराण है १॥ जब भगवान्‌की नाभीमेंसों कमल प्रकटभयो वाके वृतान्त जामें लिखेहैं वह पाद्मपुराण है २ वाके पचपनहजार श्लोक हैं॥ वाराहकल्पके जामें वृतान्त हैं,जामें सबधर्मनको वर्णन है वह वैष्णवपुराण ३ है २३००० श्लोकसंख्यावालो है॥ श्वेतकल्पको प्रसङ्गकरकें वायुभगवान्नें जामें धर्म कहे हैं रुद्रको माहात्म्य लिख्यो है वो वायुपुराण ४ है २४००० श्लोकसंख्यावालो है॥ जहां गायत्रीको अधिकारकरकें धर्मको विस्तार लिख्योहै वृत्रासुरको वध जामें है वह १८००० अठारह हजारकी संख्यावालो श्रीभागवतपुराण ५ है॥ वापुराणमें सारस्वतकल्पमें जे मनुष्य देवता हते उनको वृत्तान्त है ॥ जापुराणमें नारदजीनें बृहत्कल्पको आश्रय लेकें धर्मको वर्णन कियो है वह पच्चीसहजार २५०००श्लोककी संख्यावालो नारदीयपुरराण ६ है॥ जापुराणमें शकुनीनको अधिकार करकें धर्म अधर्म विचार कियोहै जैमिनिऋषिके प्रश्नके ऊपर धर्मचारीपक्षिननें जो वर्णन कियो है वाको विस्तार मार्कंडेयऋषिनें कियोहै वाको नाम मार्कण्डेयपुराण है ७॥ वामें ईशानकल्पको वृत्तान्त है९०००नोहजारश्लोकको पूरहै॥ जामें ईशानकल्पको वृत्तान्त वसिष्ठजीकेप्रति अग्निनें वर्णन कियो वह अग्निपुराण है ८ वह १६ सोलहहजारश्लोककी संख्यावालोहै जामें

अघोरकल्पको वृत्तान्त है ब्रह्माजीनें मनुकेप्रति सूर्यके माहात्म्यको वर्णन कियोहै तथा भूतग्रामको लक्षण वर्णन कियो है ॥ जामें रथन्तरकल्पको वृत्तान्त है तथा जामें आगे होयवेवारे वृत्तान्तको वर्णन है१४५०० जामें चौदह हजार पांचसोश्लोकनको पूरहै वह भविष्य पुराण ९ है ॥ जामें ब्रह्मवराहके चरित्रनको वर्णन है, जामें कृष्ण का माहात्म्य सावर्णिमनुनें नारदजीके अर्थ वर्णनकियो है वह ब्रह्मवैवर्तपुराण १० है वह १८००० अठारहहजार है ॥ ब्रह्मानें पृथ्वीके प्रति वर्णनकियोहै २४००० श्लोकको पूरहै जामें प्रसङ्ग करकें मानवकल्पको वर्णन कियो वह वाराहपुराण १२ है ॥ और जामें ब्रह्माजीने माहेश्वरधर्मको वर्णन कियो वो स्कान्दपुराण १३ है ८०००० अश्शीहजारश्लोकसंख्यावालो है ॥ जापुराणमें अग्निलिङ्गमें स्थितभये शिवजीनें धर्मार्थकाममोक्षको वर्णनकियोहै वह अग्निपुराण है ॥ जामें वामनजीकी महिमाको वर्णन है जामें १०००० दशहजारश्लोक हैं वह वामनपुराण है १४ ॥ जामें कूर्मभगवाननें लक्ष्मीकल्पके अनुसार इन्द्र तथा ऋषिनके समक्ष शिवके प्रति वर्णनकियोहै याको १७०००सप्तदशसहस्रश्लोकको पूर है यह कौर्मपुराण है १५॥ जामें मत्स्यरूपी भगवाननें मनुकेअर्थ धर्मवर्णन तथा नरसिंहजीको वर्णन कियोहै जाकी चौदहहजार १४००० श्लोककी संख्या है वाको नाम मत्स्यपुराण १६ है ॥ जामें गरुडजीसों ब्रह्माण्डकी उत्पत्ति लिखीहै गरुडकल्पको जामें वर्णन है वह १८००० श्लोककी संख्यावालो गरुडपुराण १७ है ॥ जामें ब्रह्माण्डको माहात्म्य तथा आगें होयवेवारे कल्पनको विस्तारसों ब्रह्माजीने वर्णनकियोहै वह १२०००बारहहजारश्लोकसंख्यावालो ब्रह्माण्डपुराण है १८ ॥ विस्तारसों पुराणनके लक्षण औरपुराणनमें भी लिखे हैं॥ निबन्धस्थ आदिशब्दकरके उपपुराणसंहितानकोभी

ग्रहणहै ॥ कूर्मपुराणमें उपपुराणनकी गणना करी है, सनत्कुमारसंहिता नान्दीपुराण शिवधर्मपुराण कपिलपुराण वारुणपुराण सांबपुराण कालिकापुराण आदित्यपुराण पाराशरपुराण मारीचपुराण इत्यादि सर्ग विसर्ग स्थान पोषण ऊती मन्वन्तरवर्णन ईशानुकथा निरोध मुक्ति आश्रय ये दशलक्षणवालो होय तासों पुराण कहनों ॥ सर्ग प्रतिसर्ग वंश मन्वन्तर वंशानुचरित ये जामें पांचलक्षण होय ताकों उपपुराण कहनों "अष्टादशपुराणानि श्रुत्वा सत्यवतीसुतात् ॥ अन्यान्युपपुराणानि मुनिभिः कीर्तितानि तु" अर्थ—सूतसंहितामें लिखीहै व्यासजीके मुखसों अष्टादशपुराण सुनके मुनिननें और उपपुराणनकूँ प्रकटकिये हैं ॥ तथा मत्स्यपुराणमें लिखीहै अष्टादशपुराणनसों न्यारो पुराण दीखे तो वाकूं इनपुराणसोंही निकस्यो समुझनों ॥ ५० ॥ जैसें वहाँ वेद यज्ञरूपी भागवान्को वर्णनकरें हैं तैसें पुराण है सो भुवनात्मक भगवान्को वर्णन करें हैं, वहाँ जैसें अग्निहोत्र दर्शपूर्णमासादिभेदकरकें यज्ञभगवान् अनेकरूप हैं और काठककौथुमी आदि शाखाभेदनकरकें वर्णनकियेजावें है ऐसेंही भुवनरूप भगवान ब्राह्मपाद्मवाराहादिकल्पभेदनकरकें अनेक रूप हैं और ब्राह्मपुराणमत्स्यपुराणादि अष्टादशपुराणकरकें वर्णनकियेजाँयहैं, तहाँ विश्वात्मक भगवान्की अनेकरूपताको वर्णनकरतहैं ॥ ब्रह्माजीके एकवर्षमें एक मुख्यकल्प पूरो होय उनकल्पनको ब्रह्मकल्प पद्मकल्प आदि नाम हैं ॥ एकवर्षके तीनसोसाठदिनके तीनसोसाठ दैनंदिन कल्प होयहैं, ब्रह्माजीके महीनाके ३० कल्प होयहैं उनके नाम मत्स्यपुराणमें लिखे हैं ॥ श्वेतकल्प १ नीललोहितकल्प २ वामदेवकल्प ३ रथन्तर ४ रौरव ५ प्राण ६ बृहत्कल्प ७ कन्दर्प ८ सद्य ९ ईशान १० व्यान ११ सारस्वत १२ उदान १३ गारुड

१४ पौर्णमासीके स्थानमें कौर्मकल्प १५ नारसिंह १६ समान १७ आग्नेय १८ सोनकल्प १९ मानवकल्प २० उदानकल्प २१ वैकुंठ २२ लक्ष्मीकल्प २३ सावित्रीकल्प २४ घोरकल्प २५ वाराहकल्प २६ वैराजकल्प २७ गौरीकल्प २८ माहेश्वरकल्प २९ पितृकल्प ३० यह पितृकल्प अमावास्याके स्थानमें है. इन तीस कल्पनको ब्रह्माजीको एकमहीना होतहै ॥ जैसें वेही तिथी दूसरेमहिनेमें आवे है ऐसें यही तीसकल्प बारहमहीनानमें बारहवार फिर फिर आतेरहें हैं ॥ ब्रह्माजीके प्रतिदिनके कल्पके अन्तरमें सबलोकनको नाश नहिंहोयहै किन्तु भूलोक भुवर्लोक स्वर्लोक इन तीनलोकनकोही नाश होयहै तासों प्रतिदिनके कल्पनके साथ तो तीनलोकनकी रचना बदलती रहेहै, क्योंकी ब्रह्माजी सत्यलोकमें शयनकरें हैं तब ये तीनोंलोक बिगडजावें हैं, जब जागें हैं तब फिर इनतीनलोकनकूँ कछु विलक्षणरीतिसों बनायदेतहैं परन्तु प्रतिदिन ब्रह्माण्डभी शीर्णहोतोजावेहै ॥ जहाँतक ब्रह्माजीकें वर्षभरको अन्त आवेहै तहाँताँई ब्रह्माण्डभी विखरजावेहै तब वर्षके अन्तकी रात्रिमें ब्रह्माजी सोवें हैं तब ब्रह्माण्डको अपनें स्वरूपमें लय करकें आवरणात्मक जलमें सोवें हैं। जब दूसरोदिन जागें हैं वादिन ब्रह्माजीको जन्मदिन आजावें है वादिन ब्रह्माजी नयो ब्रह्माण्ड पूर्वसों विलक्षण प्रकटकरें हैं, वाहीदिन वर्षदिन रहवेवारे मुख्यकल्पको प्रारम्भ होयहै ॥ ब्रह्माजीके वर्षपर्यंत वोही सृष्टि रहे है या प्रकारसों वर्षकी ब्रह्माकी आयुष्य होयहै तामेंसो मुख्यकल्प व्यतीत होजातहै याहीसों पृथिवीको कोई कल्पमें कमलरूप, कोईकल्पमें जघनरूपकरके वर्णन पुराणमें कियोहै ॥ मयूरकल्प मेघवाहनकल्प प्रभृति कितनेककल्प दैनन्दिनकल्पसोंभी छोटे हैं वे मध्यान्ह

अपराण्हकालके समान ब्रह्माजीके दिनके मध्यमें मन्वन्तरसमाप्ति तथा चारों युगनकी समाप्तिके साथ समाप्त होते चलेजावें हैं ॥ इन सबप्रकारके कल्पनमें नानारूपवाले ब्रह्माण्डात्मक भगवान्को वर्णन है, क्योंकि "यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥ स्यादिदं भगवान् साक्षात्प्रधानपुरुषेश्वरः" ॥इत्यादिवाक्यसों ब्रह्मवादमें भगवान्ही अनेकरूप होयजावें हैं यह सिद्धान्त है ॥ ५१ ॥

**नानासृष्टिप्रकारा हि नानाधर्मा ह्यनेकधा॥ सर्वस्वरूपी कृष्णस्तु कर्ता तेषु तथोदितः ॥५२॥ सात्विकेषु तु कल्पेषु तत्प्रकारपुराणतः ॥ आचारान्मुक्तिमाप्नोति भवस्त्वन्येषु केवलः धर्महीनस्तत्सहितो राजसेषु सुखन्ततः॥५३॥**

तत्त्वदीपप्रकाशः ।

तामसकल्पेषु शिवात्सृष्टिः॥राजसेषु च ब्रह्मणः॥सात्विकेषु विष्णोः॥ तत्रोच्चनीचत्वमव्यवस्थितमतः समाधानमाह ॥ **सर्वस्वरूपी कृष्ण इति** ॥ ५२ ॥ सर्वत्र मुक्तिरिति पक्षे न कोपि सन्देहः ॥ सात्विकेष्वेव मोक्ष इति पक्षे विशेषमाह ॥ **सात्विकेष्विति** । तत्कल्पानुसारिपुराणोक्तधर्माचरणान्मुक्तिमाप्नोति ताद्दशोधिकारी न तु पाषण्डादिधर्मैरित्यर्थः ॥ अन्येषु तामसेषु जन्मदुःखञ्च भवति न सुखञ्चापि मोक्षः । राजसेषु तु सुखं न दुखञ्चापि मोक्षो यथोक्तधर्मकर्तॄणां ॥ ५३ ॥

आवरणभंगः ।

तद्विशदीकुर्वंति ॥ ॥तामसकल्पेत्यादि ॥ ॥ तत्र तावच्छिवात्सृष्टिः । यथाहि कौर्मे पूर्वभागे चतुर्थाध्याये । "कुतः सर्वमिदञ्जातङ्कस्मिंश्च लयमेष्यति । नियन्ता कश्च सर्वेषां वदस्व पुरषोत्तम॥श्रुत्वा नारायणो वाक्यमृषीणां कूर्मरूपधृक्॥

प्राह गम्भीरया वाचा भूतानाम्प्रभवाप्ययौ । कूर्म उवाच । महेश्वरः परोऽव्यक्त-श्चतुर्व्यूहः सनातनः । अनन्तश्चाप्रमेयश्च नियन्ता विश्वतोमुखः"इत्यारभ्य "नि-शान्ते प्रतिबुद्धोसौ जगदादिरनादिमान्॥ सर्वभूतमयोऽव्यक्तादन्तर्यामीश्वरः परः। प्रकृतिम्पुरुषञ्चैव प्रविश्याशु महेश्वरः । क्षोभयामास योगेन परेण परमेश्वरः" इ-त्यादि चोक्त्वा । " प्रधानात् क्षोभ्यमानाच्च तथा पुंसः पुरातनात् । प्रादुरासी-न्महद्बीजम्प्रधानपुरुषात्मकम्"इत्यादिना सृष्टिरुक्ता । ततःपञ्चदशाध्यायोत्तरमु-परिभागे दशभिरध्यायैरीश्वरगीतोक्ता शिवमाहात्म्यं परब्रह्मरूपता चोक्ता ॥ एवमन्यत्रापि तामसकल्पेषु ज्ञेयम् । भविष्ये तु ब्रह्मणः सकाशात्सृष्टिः । यथा त-त्रैव "कीर्तितानि स्वयम्भुवा"इत्युपक्रम्य"जगदासीत्पुरा तात तमोभूतमलक्षणं॥ अविज्ञेयमतर्क्यञ्च प्रसुप्तमिव सर्वतः ॥ ततः स भगवानीशो ह्यव्यक्तो व्यञ्जय-न्निदं ॥ महाभूतादिदृप्तौजाः प्रोत्थितस्तमनाशनः ॥ सर्वभूतमयोऽचिन्त्यः स एव स्वयमुत्थितः । योसौ षड्विंशको लोके तथा यः पुरुषोत्तमः । भास्करश्च म-हाबाहो परं ब्रह्म च कथ्यते" इत्यादि ब्रह्मणः सकाशात्सृष्टिरुक्ता॥ मार्कण्डेयपु-राणेपि "प्रणिपत्य जगद्योनिमजमाश्रयमव्ययं ॥ चराचरस्य जगतो धातारम्परम-म्पदं॥ ब्रह्माणमादिपुरुषमुत्पत्तिस्थिति संक्षये॥यत्कारणमनौपम्यं यत्र सर्वम्प्रतिष्ठि-तम्"इत्यादिनोपक्रम्य पुरुषाधिष्ठितात्प्रधानान्महदादिसृष्टिरुक्ता ॥ एवमन्येष्वपि ज्ञेयम्। सात्विकेषु तु विष्णुवाराहश्रीभागवतादिषु विष्णोः सकाशात्स्पष्टैव सृष्टिः॥ एवञ्च मात्स्योक्तरीत्या कल्पेषु सात्विकराजसतामससङ्कीर्णत्वकथनादष्टादशपुरा-णेषु द्वयं द्वयं सात्विकसात्विकराजसेत्यादिभेदेनैकैकविधं सन्नवधा भवति तेनैषत्ता-रतम्येप्यदोषः। अतएव हरिवल्लभसुधोदयाख्ये पुराणसमुच्चये पाद्मोत्तरखण्डीयद्वि-चत्वारिंशाध्याये रुद्रोमासम्वादे " मात्स्यं कौर्मं तथा लैंगं शैवं स्कान्दन्तथैव च ॥ आग्नेयञ्च षडेतानि तामसानि निबोध मे ॥ वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शनम् । सात्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥ ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयन्तथैव च॥ भविष्यं वामनं ब्राह्मं राज-सानि निबोध मे ॥ इत्येकैकषट्कस्य सात्विकादिरूपत्वमुक्तन्तदपि न विरुद्ध्यते ॥ प्रकृतमनुसरामः॥ तत्रेत्यादि॥ नानासृष्टिप्रकारेषु नानाधर्मेषु पुराणेषु तत्तत्पुराणे तस्य तस्येश्वररूपतया माहात्म्यस्य च कथनात् । कूर्मपुराणे विष्णुब्रह्मशिवा नुपक्रम्य "अन्योन्यमनुरक्तास्ते ह्यन्योन्यमुपजीविनः ॥ अन्योन्यम्प्रणताश्चैव लील या परमेश्वराः " इति वाक्याच्चोच्चनीचत्वमव्यवस्थितमतोऽनेकेश्वरापातात्तन्नि-वृत्त्यर्थं समाधानमाहेत्यर्थः ॥ ॥ सर्वस्वरूपीत्यादि ॥ ॥ शास्त्रार्थप्रकरणे

ब्रह्मणः सर्वाकारता सर्वकर्तृता चोपपादिता श्रुतिस्मृतिसूत्रानुसारेण ॥ अतस्तद्-रिक्तस्य कर्त्तुरभावात्सर्वाकारो भगवानेव कर्ता । तेषु पुराणेषु तथा तेन तेन शिवादिरूपेणोदित इत्यर्थः ॥ कृष्णशब्दोऽत्र परब्रह्मवाचकः "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परब्रह्म कृष्ण इत्यभिधीयते" इतिश्रुतेः ॥ अत-एव गारुडे "एको नारायणो देवो देवानामीश्वरेश्वरः ॥ परमात्मा परं ब्रह्म जन्माद्यस्य यतोऽभवत् । तत्रैव द्वितीयाध्याये । "सर्वज्ञानान्यहं शंभो ब्रह्मा-त्माहमहं शिवः ॥ अहं ब्रह्मा सर्वलोकाः सर्वदेवमयो ह्यहं" इति ॥ श्रीभागवते च द्वादशे शिववाक्यं "न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते" । त-त्रैव दशमेऽक्रूरस्तुतौ "त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणं । बह्वाचार्य विभेदेन भगवन्समुपासते" । कौर्मेपि पूर्वभागे द्वितीयाध्याये "अहं नारायणो देवो पूर्वमासं न मे परं" इत्युक्त्वाग्रे "यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः" इत्युक्तम् । "अहश्चैव महादेवो न भिन्नो परमार्थतः" इतिच । भविष्ये ब्रह्माण-मुपक्रम्य "योऽसौ षड्विंशको लोके तथा यः पुरुषोत्तमः । भास्करश्च महाबाहो परं ब्रह्म च कथ्यते" इति । अतस्तत्तन्नाम्ना तत्तद्रूपो भगवानेवोच्यत इति व्यवस्था-भावेऽपि न दोष इतिभावः ॥ एतेनापि पूर्वोक्तं दृढीकृतं ज्ञेयम् । यथा यज्ञस्वरूप-स्य भगवत एकत्वेन शाखाभेदेषु भिन्नरूपतायामपि नवीकृतित्वं तथात्र शिवादि रूपेण भेदेऽपि नाब्रह्मरूपत्वं । यथा च तत्तच्छाखोक्तेषु कौंडपायनश्येनादिषु काम्येषु विकृतित्वन्तथात्र सृष्टिकर्तृशिवादिव्यतिरिक्तेष्वेकैकगुणाधिष्ठातृषु तदंशत्वेन विकृतित्वमिति ॥ एवं पुराणप्रतिपाद्यविषयनिश्चायनेन तद्भक्तिस्वरूपमपि नि-श्चायितप्रायं । विकृतितुल्ये गुणमूर्तौ भक्तिःसगुणा तदाकारे कृष्णे तु गुणातीतेति प्रमेयमप्येतेनैवोक्तप्रायम् ॥ अतःपरं द्विविधवाक्यदर्शनात्तदुक्ताचरणफलभूतायां मुक्तौ सन्देहः । वाक्यानि तु पाद्मोत्तरखण्डीयद्विचत्वारिंशे त्रिविधानि शास्त्राणि प्रस्थानानि पुराणानि चोक्त्वा पुराणोक्त्युत्तरमेव "सात्विका मोक्षदाः प्रोक्ता राजसाःस्वर्गदाः शुभाः ॥ तथैव तामसा देवि निरयप्राप्तिहेतवे" इति । सूतसंहिता यान्तु तदुक्ताचारान्मुक्तिरुक्ता मुक्तिखण्डे । एवमन्यत्रापि ॥ ५२ ॥ तत्र कथं व्यव-स्थेत्याकांक्षायान्तमपि सन्देहं निराकर्त्तुमाहुः ॥ ॥ सर्वत्रेत्यादि ॥ ॥ सर्वत्र पुराणेषु मुक्तिबोधकवाक्यैर्मुक्तिरिति पक्षे वाक्यान्तरादृष्टेर्विप्रतिपत्त्यनुदयान्न सन्देहः दृष्टे तु पाद्मवाक्ये विप्रतिपत्त्या सन्देहोदयात्तन्निवृत्त्यर्थं विशेषमाह । सा-त्विककल्पस्थजीवादिपूत्कर्षमाहेत्यर्थः ॥ तथाज्ञानादेव सा शङ्का वक्ष्यमाणरी-त्या निरस्यत इति भावः ॥ उत्कर्षस्य प्रतियोगिसापेक्षत्वात्तान्विशदीकुर्वन्ति ॥ अन्येष्वित्यादि ॥ ॥ तामसेषु जन्म दुःखश्चेत्यत्र हेतुमूले उक्तो धर्महीनपदेन ।

तथाच तेषु धर्माभावात्तथेत्यर्थः ॥ एवं राजसेषु सुखमित्यत्रापि धर्मसाहित्यं हेतुमूले उक्तस्तत्सहितपदेन । अतो नात्रापि सन्देह इति भावः ॥ ५३ ॥

व्रजभाषाटीका ।

और अनेक रूप होयवेकेलिये अनेककल्प श्रीकृष्णचन्द्रनें प्रकटकिये हैं । तहां तामसकल्पमें शिवसों सृष्टि है, राजसकल्पमें ब्रह्मासों, सात्विकल्पमें विष्णुसों सृष्टिहोवे है ॥ गुणनकरके मिश्रितकल्पनमें सरस्वती पितृगण आदि सृष्टि करें हैं, याहीमों पद्मपुराणके उत्तरखण्डमें मात्स्य १ कौर्म २ लैङ्ग ३ शैव ४ स्कान्द ५ आग्नेय ६ इन पुराणनकूँ तामस कहे हैं ॥ वैष्णव १ नारद २ भागवत ३ गरुड ४ पाद्म ५ वाराह ५ इन छः पुराणनकूं सात्विक गिने हैं ॥ ब्रह्माण्ड १ ब्रह्मवैवर्त २ मार्कण्डेय ३ भविष्य ४ वामन ५ ब्रह्म ६ ये छः पुराण राजस हैं ॥ जिन जिन पुराणनमें जिन जिन देवतानसों सृष्टिकी उत्पत्ति लिखीहै उन पुराणनमें उनउन देवतानकोंही अधिक माहात्म्य तथा ईश्वरता लिखी है, उनउन देवताको रूप श्रीकृष्णही धारणकरें हैं ॥ कूर्मपुराणमें लिखीहै "अन्योन्यमनुरक्तास्ते ह्यन्योन्यमुपजीविनः । अन्योन्यं प्रणताश्चैव लीलया परमेश्वराः ॥" अर्थ—ब्रह्मा विष्णु शिवादिक देवता परस्पर अनुरागवाले हैं, परस्पर एककूं एक बडो समझके प्रणाम करतेरहते हैं, लीलाकरके परस्पर एकदेवता एकको आश्रयकरलेत हैं, ये परमेश्वर हैं इत्यादि अनेक शास्त्र देखवेसों अमुकदेवता बडो है अमुकदेवता छोटो है यह निश्चय नहिंहोय है। जो सबहिनकूं ईश्वर मानलें तो अनेक ईश्वर होंयगे तहां समाधान करें हैं ॥ सर्वस्वरूपीति ॥ शास्त्रार्थप्रकरणमें यह निश्चय करआयेहैं ब्रह्महीं अनेक आकारवालो तथा सबको कर्त्ता है और कोई कर्त्ता नहिं

होयसकेंहैं तासों ब्रह्महीं पुराणनमें शिवब्रह्मादिरूपसों वर्णन कियो है, वह परब्रह्म सदानन्दरूप है तासों कृष्णशब्दवाच्य है ता में " परं ब्रह्म कृष्ण इत्यभिधीयते " इत्यादि श्रुति प्रमाण हैं ॥ श्रीभागवतमेंभी कृष्णके प्रति अक्रूरकी स्तुति है ॥ " त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ॥ बह्वाचार्यविभेदेन भगवन्समुपासते " ॥ हे कृष्ण शिवादिरूपकरकें अनेकमार्गद्वारा आपकी ही सबउपासना करें हैं तासों सर्वरूप श्रीकृष्णही उनपुराणनमें सृष्टिकर्त्ता शिव ब्रह्मादि रूपनसों वर्णनकिये हैं ॥ ५२ ॥ सबजीवन की सबपुराणनके बतायेभये मोक्षके साधनसों मोक्ष होजावेंहै ऐसे पक्षमें तो सन्देह प्राप्तही नहींहोय परन्तु पद्मपुराणादिक के वचन देखवेसों तो सात्विकजीवनकीही सात्विककल्पानुसारिपुराणोक्तधर्मके आचरण करवेसों मुक्ति होय है वैसे अधिकारी की पाषंडादिधर्मसों मुक्ति नहिंहोयहै, अधर्मकर्ता जीवनको तामसकल्पनमें जन्म होय और दुःख प्राप्त होय सुख तथा मोक्ष नहिंहोय। धर्मसहित जीवनको राजसकल्पमें जन्म होय न दुःख होवे न मोक्ष होवे किन्तु सुखकी प्राप्ति होय ऐसें सात्विकजीवनकी सात्विकपुराणोक्तधर्माचरणसों निर्गुणावस्था होयकरकें मोक्ष होवें है ॥५३॥

अपेक्षितन्तु सर्वत्र सर्वोक्तं गृह्यते क्वचित ॥
इदानीं त्रिविधा जीवास्तेन त्रितयमीर्यते॥५४॥
प्रवृत्त्यर्थन्तु सर्वत्र मुक्तिः फलमुदीर्यते ॥ तदवस्थापरित्यागाद्वचनं सत्यमेव हि ॥ ५५ ॥

तत्त्वदीपप्रकाशः ।

सर्वेषु कल्पेषु कल्पान्तरोक्ता धर्माः पुरुषार्था वा परिग्राह्याः ॥ यदि तत्कल्पानुसारिणो जीवा भविष्यन्ति यथा तीर्थे नाना-

देशवासिनाम् ॥ तदाह ॥ **अपेक्षितामिति** ॥ प्रकृते त्रिविधान्यपि पुराणानि सन्तीत्याह ॥ **इदानीमिति** ॥ राजसादीनाम्प्रकारान्तरेण पुराणं न हृदयारूढम्भवति ॥ अतस्तेषां केवललौकिकत्वे कल्पान्तरे तेषान्तामसत्वाद्राजसोच्छेदः स्यात् ॥ राजसधर्मानुष्ठाने चोत्तरत्र सात्विकत्वं सम्पद्यते ॥ तथा तामसेष्वपि ज्ञातव्यम् । अतितामसत्वनिवृत्त्यर्थमुत्कर्षार्थञ्च तामसानि पुराणानीत्यर्थः ॥ ५४ ॥ ननु तत्तत्पुराणेषु तत्तदाचारान्मुक्तिरेव निरूप्यते किमुत्कर्षेण सात्विका एव मुच्यन्त इति तु सात्विककल्पव्यवस्था यथा राज्ञान्तत्तदवसरे तेषामनुग्रहनिग्रहौ । अत इदानीं त्रिविधानां मुक्त्यर्थमेव कथनं त्रिविधानि पुराणानीत्याशंक्याह ॥ **प्रवृत्त्यर्थमिति** ॥ मुक्तिः सर्वेषामभिलषिता ॥ अतस्तदर्थमेव सर्वोऽपि प्रवर्तते न संसारार्थमिति सर्वेषां प्रवृत्तिसिद्ध्यर्थं बालानुशासनन्यायेन मुक्तिः फलमुदीर्यते नतु राजसकर्मणा मुक्तिर्भवति ॥ "मध्ये तिष्ठन्ति राजसाः" इति भगवद्वाक्यात् ॥ परमानन्दलक्षणस्य मोक्षस्य वैजात्याभावात् ॥ सात्विकानां नैर्गुण्यं तेन च मोक्षः ॥ तत्र साधनता सर्वथा भगवत्सम्बन्धेनैवावच्छिद्यते नतु ज्ञानित्वेन भक्तत्वेन वा ॥ " मामेव ये प्रपद्यन्ते " इतिवाक्यात् ॥ " तमेव विदित्वातिमृत्युमेति " इत्यादिपरम्परयेति ज्ञातव्यम् ॥ सर्वथा सम्बन्धे पुनर्बहूनि कारणानि तत्रावान्तरजातिभेदेऽपि न काचित् क्षति दण्डवत् ॥ अतः स एव परमपुरुषार्थः ॥ तत्साधनेष्वपि मोक्षपदप्रयोगो यथा लोके ॥ नहि तादृशीमवस्थामापन्नो मुच्यते ॥ अतस्तदवस्था परित्यागो वक्तव्य एव ॥ अतो मुक्तिप्रतिपादकं वाक्यं सत्यमेवेत्याह ॥ **तदवस्थेति** ॥ ५५ ॥

आवरणभंगः ।

॥ सर्वेष्वित्यादि ॥ ॥ सर्वेषु केवलेषु सङ्कीर्णेषु च कल्पेषु कल्पान्तरोक्तास्तदितर कल्पोक्ताःसाधनपुरुषार्थादयःपरिग्राह्याः।यथा तीर्थे नानादेशनिवासिनान्तत्तद्देश-

निवासिनो हि तीर्थे आगता अपि तीर्थस्नानादिकं कुर्वन्तोऽपि स्वस्वदेशकुलवर्णाश्रम सम्प्रदायमनुसृत्यैव कुर्वन्ति नतु तदतिक्रमेण तथा सङ्कीर्णासङ्कीर्णेषु कल्पेष्वपि तादृशा जीवास्तथैव प्रवर्तन्त इति तत्सत्वे ते ग्राह्या इत्यर्थः॥ मूले अपेक्षितं अधिकारिविशेषणीभूतं श्रद्धादिकं सर्वपुराणेषु सर्वपुराणोक्तं क्वचित् अङ्गादौ गृह्यते इत्यर्थः॥ प्रकृतइत्यादि ॥ ॥ योयं श्वेतवाराहाख्यः कल्पस्तमधिकृत्य शिवादिभ्यः सृष्टयकथनादयं सङ्कीर्ण इति भाति तत्र त्रिविधा अपि जीवाः सन्तीति तद्बीजकथनपूर्वकन्त्रिविधपुराणसत्तामाहेत्यर्थः ॥ तदुपपादयन्ति ॥ राजसादीनामित्यादि॥ ॥ केवललौकिकत्वे इति॥ ॥ राजसपुराणाभावेन स्वेच्छाचारित्व इत्यर्थः॥ तथेत्यादि ॥ ॥ तामसपुराणासत्वे तामसानां स्वेच्छाचारित्वेऽतितामसत्वन्ततो नरकः स्यात्। सत्वे तु तदुक्तधर्माचरणेऽग्रे राजसत्वं ततस्तद्धर्मकरणे क्रमात्सात्विकत्वं ततो मोक्ष इत्यर्थः॥ इदम्प्रमेयम्प्रथमस्कन्धाज्ज्ञातव्यम्। "पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः। तमसस्तु रजस्तस्मात्सत्वं यद्ब्रह्मदर्शनम्" इति वाक्येऽस्यार्थस्य स्फुटत्वात्॥ १४॥ एवं सति पुराणान्तरविरोधमाशङ्कन्ते। ननु तत्तदिति॥ उत्कर्षेणेति॥ ॥ तत्तद्गुणत्याजनरूपेणेत्यर्थः॥ नन्वेवं व्यवस्थानङ्गीकारे पार्थिवेत्यादिवाक्यम्विरुद्धयेतेति चेन्नेत्याह॥ सात्विका इत्यादि॥ अस्मिन्नर्थे दृष्टान्तमाहुः॥ यथेत्यादि॥ ॥ अत्र समाधिमाहुः॥ प्रवृत्तीत्यादि॥ बालानुशासनन्यायेनेति त्वं दुग्धं पिब तव केशा दीर्घाः भविष्यंतीति बालोऽनुशास्यते तत्र नहि तस्य केशदैर्घ्ये तात्पर्यमपि तु पयःपाने प्रवृत्तौ तथात्र तत्तत्साधने प्रवृत्तावेव तात्पर्यं न मुक्ताविति तथेत्यर्थः॥ नन्वत्र बालानुशासनन्याय एवेति कथमवगन्तुं शक्य इत्याकांक्षायामर्थापत्तिम्प्रदर्शयन्ति॥ नन्वित्यादि॥ ॥ राजसेनैव तामसा अपि व्याख्याताः॥ नच यत्तु कामेप्सुनाकर्मेत्यादिना यादृगुच्यते तादृशत्वाभावे कर्मणः कथं राजसत्वादिकमिति शंक्यम्। ईदृशत्वाभावेऽपि तादृक्पुराणोक्तत्वमात्रेणापि राजसत्वादिसिद्धेः ॥ जैनसिद्धान्तसिद्धसर्वभूताहिंसावत्तथात्वोपपत्तौ बाधकाभावात्॥ नन्वेवं द्विविधवचनानुरोधात्कारणवैजात्ये फलवैजात्यदर्शनाच्च मोक्ष एवं वैजात्यमङ्गीकार्यमित्यत आहुः॥ परमेत्यादि ॥ ॥ नन्वेवं सति सात्विकादपि कर्मणः कथं मुक्तिर्गुणजन्यत्वस्य तत्रापि तौल्यादित्यत आहुः॥ सात्विकेत्यादि॥ तथाच नहि तस्मादपि साक्षान्मुक्तिरस्माभिरुच्यते येनेदं दूषणमापद्येत किंतु तस्य कर्मणो नान्तरीयाधिकारसम्पादकत्वं ऊर्ध्वं गच्छन्तीतिवाक्यादङ्गीक्रियते॥ अधिकारश्च सत्वेनैव सत्वञ्च ब्रह्मदर्शनमिति नैर्गुण्यसम्पादकत्वादतो न दोष इत्यर्थः॥ ननु गीतावाक्यस्य कर्तृविशेषफलविशेषबोधक-

त्वेन कर्मविशेषफलविशेषनियमबोधकत्वाभावादविरुद्धत्वेन पुराणेषुच सर्वेष्वेव निष्कामकर्मविशेषान्मोक्षस्य कंठोक्तत्वेन श्रौतकर्मवद्भ्योऽपि ज्ञानेन भक्तौ वा जातायां व्यापारे संपन्ने सर्वेभ्य एव मोक्षो भविष्यति । यद्वा तानि ज्ञानं भक्तिं वा जनयित्वोपक्षीयंतां तदुक्तज्ञानभक्तिभ्यामेव मुक्तिर्भविष्यतीत्यङ्गीकार्यम् ॥ अन्यथा मुक्तिवाक्यस्य बाधितार्थत्वेनाप्रामाण्यं स्यादित्याकांक्षायां वचनस्य सत्यत्वमुपपादयितुमाहुः ॥ तत्रेत्यादि ॥ ॥ तत्रेति ॥ ॥ नैर्गुण्ये तथा च निर्गुणत्वेन सम्बन्धत्वेन कार्यकारणभावस्य सावधारणेन गीतावाक्येन निश्चयाद्राजसतामसपुराणीयज्ञानभक्त्यो रूपान्तरविषयकत्वेन सर्वथा भगवत्सम्बन्धाजनकत्वनिश्चयाज्जातेऽपि अकिञ्चित्करे इत्यर्थः ॥ नन्विदमप्रयोजकं श्वेताश्वतरश्रुतौ शिवरूपम्प्रकृत्य तमेव विदित्वेति श्रावणाद्रूपान्तरविषयकज्ञानस्यापि मोक्षसाधनत्वादित्यत आहुः ॥ तमेवेत्यादि ॥ ॥ इत्यादीति ॥ ॥ इत्यादिवाक्यम्परम्परया नैर्गुण्यजनकव्यापारान्तरद्वारा मोक्षसाधनताबोधकं ज्ञातव्यम् ॥ तथाच श्रौतस्यैव कारस्य कर्मवाचकपदसमभिव्याहृतत्वाव्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावाच्च न श्रुतिविरोधः॥परम्परानङ्गीकारेतु गीतावाक्यविरोध इति तथेत्यर्थः ॥ नन्वस्तु रूपान्तरज्ञानस्य परम्पराकारणत्वन्तथापि सर्वथा भगवत्सम्बन्धे तु तस्य साक्षात्कारणता वाच्या तथैव भक्तेरपि।एवंसति रूपाणामनंतत्वात्तद्विषयकज्ञानभक्त्योः सम्बन्धकारणतायामननुगतादवस्थ्यमित्यत आहुः ॥ सर्वथेत्यादि ॥ ॥ "कामं क्रोधम्भयं स्नेहमैक्यं सौहृदमेव वा ॥ नित्यं हरौ विदधते यान्ति तन्मयतां हि ते । सम्बन्धात्कृष्णयो भक्त्या सत्सङ्गान्मामुपागताः । केवलेन हि भावेन गोप्यो गावः खगा मृगाः" ॥ इत्यादिवाक्यैस्तस्य नानासाधनकतायाः शास्त्रसिद्धत्वात्तत्र सम्बन्धेऽवान्तरजातिभेदे शैवत्वादिजातिभेदेऽपि न काचित्क्षतिः "वृषपर्वा बलिर्बाणो मयश्चाथ बिभीषणः" इति तत्तद्रूपभक्तानुपक्रम्य "बहवो मत्पदम्प्राप्तास्त्वाष्ट्रकायाधवादयः" इत्युपसंहारे स्वपदप्राप्तिकथनान्न फलवैजात्यं यथा नानाजातीयदण्डैर्घटरूपं फलं तद्वात्सिद्धमाहुः॥ अत इत्यादि ॥ स इति ॥ ॥ उक्तरूपसम्बन्धः । अयञ्च तन्मयत्वरूपः सर्वात्मभावाख्यः । यान्ति तन्मयतामितिवाक्यात् । प्रपत्तिशब्दवाच्योऽप्ययमेव । नच ज्ञानविशेष एव प्रपत्तिरिति वाच्यं धात्वर्थविरोधात् । न चोपसर्गेण तदवगमः प्राप्त्यर्थस्यापि शक्यवचनत्वात् ॥ ननु भवत्वेवं तथापि कर्मणा मुक्तिबोधकानां वाक्यानां कथं सङ्गतिरित्यत आहुः ॥ तत्साधनेत्यादि ॥ ॥ कर्मफलानां तत्तद्रूपविषयकज्ञानादीनां मुक्तिसाधनत्वाल्लाक्षणिकस्तेषु मोक्षपदप्रयोगः । यथा लोके आरोग्यं प्रथमं सुखं स्वानुकूल्येनेंद्रियप्रवृ-

त्तिकाम इत्यादावित्यर्थः॥ एवं प्रयोगमुपपाद्य पूर्वोक्तयुक्तिं स्मारयन्तः सङ्गतिं वदंति॥ नहीत्यादि॥ ॥तादृशीमिति॥ ॥ राजसतामसकर्मरुच्यानुमितां राजसीं तामसीञ्च ॥ अत्रेदं सिध्यति॥ मुक्त्यर्थं पाषण्डादिरहितेनाधिकारिणा क्रियमाणैस्तामसधर्मैस्तामसावस्थात्यागेन राजसत्वन्ततस्तेन तथा क्रियमाणे राजसधर्मैः सात्विकत्वन्ततस्तादृशेन क्रियमाणैस्तैः सर्वथा भगवत्सम्बन्धे नैर्गुण्यम्। ज्ञानार्थं क्रियमाणैस्तु राजसतामसैर्बहुजन्मविपाकैस्तत्तद्रूपविषयकज्ञानपरिपाके एकं भक्त्यर्थं क्रियमाणैस्तादृशभक्तिपरिपाकस्ततः सर्वथा तद्रूपभगवत्सम्बन्धे नैर्गुण्यन्तेन मोक्ष इति तामसानाम्विलंबबाहुल्यं राजसानान्ततो न्यूनं सात्विकानान्तदभाव इति पौराणिकमुक्तिव्यवस्थेति ॥ एवमत्र क्रममुक्तिरूपम्फलन्निरूपितम्॥ अयमेवार्थो ब्रह्मपुराणे समाप्तिदशायां विष्णुमायानुकीर्तनाध्यायेऽपि प्रतिपादितो व्यासवाक्येषु "शृणुध्वं मुनिशार्दूलाः प्रवक्ष्याम्यनुपूर्वशः॥ यथा कृष्णे भवेद्भक्तिः पुरुषस्य महाफला॥ संसारेऽस्मिन्महाघोरे सर्वभूतभयावहे। महाभयङ्करे नृणान्नानादुःखसमाकुले॥ निर्यग्योनिसहस्रेषु जायमानः पुनः पुनः॥ कथञ्चिल्लभते जन्म देही मानुष्यकं द्विजाः॥ मनुष्यत्वेऽपि विप्रत्वं विप्रत्वेऽपि विवेकिता॥ विवेकाद्धर्मबुद्धिस्तु बुद्ध्या तु श्रेयसां ग्रहः। यावत्पक्षद्वयम्पुंसां न भवेज्जन्मसञ्चितम्। तावन्न जायते बुद्धिर्वासुदेवे जगन्मये॥ तस्माद्वक्ष्यामि भो विप्राः कृष्णे भक्तिर्यथा भवेत्। अन्यदेवेषु या भक्तिः पुरुषस्येह जायते॥ कर्मणा मनसा वाचा तद्गतेनान्तरात्मना। तेन तस्य भवेद्भक्तिर्यजने मुनिसत्तमाः॥ स करोति ततो भक्तिं यजने मुनिसत्तमाः। स करोति ततो विप्रा भक्तिं चाग्नेः समाहितः॥ तुष्टे हुताशने तस्य भक्तिर्भवति भास्करे। पूजाङ्करोति सततमादित्यस्य ततो द्विजाः॥ प्रसन्ने भास्करे तस्य भक्तिर्भवति तत्वतः॥ सेवाङ्करोति विधिवत्स तु शम्भोः प्रयत्नतः॥ तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशवे। संपूज्य तं जगन्नाथं वासुदेवाख्यमव्ययम्। ततो भुक्तिञ्च मुक्तिञ्च स प्राप्नोति द्विजोत्तमाः" इति। गीतायांच "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्॥ अन्तवत्तु फलन्तेषान्तद्भवत्यल्पमेधसाम्॥ देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति॥ अतो राजसादिपुराणस्थानां मुक्तिवचनानान्तदवस्थापरित्याग एव मुक्तिपदार्थ इति निष्कर्षः॥ अत्रेदं सिद्ध्यति॥ पुराणं वेदवदेव भगवन्निश्वासरूपन्तत्तत्कल्पीयभुवनद्रुमात्मकस्य भगवतो लीलाम्प्रतिपादयच्छिवादिरूपस्य माहात्म्यम्परब्रह्मण एव वदति श्रौतधर्मकालादिव्यवस्थां सर्वपदार्थस्वरूपञ्च निर्द्धारयति। तदुक्तरीत्या तद्धर्माचरणे

तु तत्तदवस्थानिवृत्तिरूपैव मुक्तिःक्रमेण परमापि मुक्तिर्भवति। तथैव तदुक्तभक्त्यापि तेन तत्तत्कल्पात्मककालाधीनमेव तद्बलं नतु तन्निरपेक्षमिति ॥ ५५ ॥

व्रजभाषाटीका ।

परन्तु सबकल्पनमें सबकल्पके जीव उत्पन्नहोतेहैं वे जीव अपने अपने कल्पानुसारी धर्मकूँही करें हैं,जैसें नानादेशके निवासी एकतीर्थमें आवें। सबकल्पनमें सबकल्पको धर्म ग्रहणकियोजावैहै या श्वेतवाराहकल्पमें तीनोंप्रकारके ही पुराण हैं, क्योंकी याकल्पमेंभी तीनोंप्रकारके जीव हैं राजसजीवकें तामससात्विकपुराणोक्त धर्म हृदयमें नहिं आवें हैं उनजीवनकूँ राजसधर्म नहिं बनाये जाँयगे तो वे जीव केवल लौकिक रहे आवेंगे तो कल्पान्तरमें फिर तामस होजाँयगें तो राजसोच्छेद होयगो तासों उनजीवनकेलियेही राजसपुराण हैं। उनमें लिखेभये धर्मको अनुष्ठान करवेमों आगेंके जीव सात्विकहोजांयगे । ऐसेंही तामसजीवनको अत्यन्त तामसपणों दूरहोयकें उत्कर्ष होयवेके लियें आगे राजसता होयवेकेलियें तामसपुराण हैं॥ शङ्का—उन उन पुराणनमें उन २ धर्मके आचरण करवेंसों मुक्तिप्राप्ति लिखीहै। सात्विकजीवनकीही मुक्ति होय औरनकी नहींहोय ये व्यवस्था तो सात्विककल्पकीही होनीचाहिये। जैसें राजा प्रजाके ऊपर उनउन अवसरनपर अनुग्रह तथा दण्ड दोनों कार्यकूँ करें है केवल दण्ड अथवा केवल अनुग्रहमात्रही नहिंकरें है ऐसें सबही कल्पनमें तत्तत्पुराणोक्त धर्मसों मोक्ष और अधर्मसों बन्ध होनोंचाहिये तासों या कल्पमेंभी तीनोंप्रकारके जीवनकी मुक्तिके लियें तीनोंप्रकारके पुराण हैं ॥ उत्तर—मुक्तिकी अभिलाषा सबही जीवनकों है तासों सबजीवनकी धर्ममें प्रवृत्ति होयवेकेलियें सबपुराणनमें मुक्तिफल बतायो है। जैसें केश

लोभ देकें बालककूँ दूध पिवायोजाय है कछु दूध पीतेही
ंबढजायहैं ऐसेंही क्रमकरकें निर्गुणावस्था भये सों मुक्ति
अभिप्रायसों राजसतामसपुराणोक्त राजसतामसधर्म-
होनों लिख्योहैं तासों राजसतामसधर्मकूँ मुक्ति करवेवारे
झलेने, क्योंकी "मध्ये तिष्ठन्ति राजसाः" इत्यादिभग-
नके अनुसार राजसजीवकी मध्यलोकमें तामसजीवकी
ोकमेंही स्थिति रहेहै तहां तामसराजसादिजीवनके लिये
ारी मोक्ष है यहभी कल्पना नहिंकरसकें हैं, क्योंकी पर-
पमोक्षमें वैजात्य नहिं है अर्थात् मोक्षपदार्थ एकही है
ामसजीव तामसपुराणोक्तसाधनसों आगे राजस होय,
सजीव राजसपुराणोक्तसाधनसों आगे सात्विक होय, सा-
त्र सात्विकपुराणोक्तसाधन करवेसों निर्गुण होय तब मोक्ष
में "राजसस्तु तमः पश्चात्सत्वं यद्ब्रह्मदर्शनम्" इत्यादिभाग-
प्रमाणहै॥५४॥निर्गुणता भयेसों भगवत्सम्बन्ध होय तब
था।राजसतामसादिपुराणोक्तरूपान्तरकी भक्ति वा रूपान्तर
भयेसों मुक्त नहिं होयहै। "मामेव ये प्रपद्यन्ते" यावाक्यमें
में भगवत्सम्बन्ध भयेसोंही मायाको तरणो लिख्योहै, श्वेता-
'तमेव विदित्वा अतिमृत्युमेति" यावाक्यके पूर्व शिवकूँ
नकरकें उनके ज्ञानसों मोक्ष लिखीहै सो परंपराकरकें पूर्वो-
सार निर्गुणता होयकें सर्वथा भगवत्सम्बन्ध होय तब मोक्ष
र्वथा भगवत्सम्बन्ध होयवेमें बहुत कारण है जैसें कंसराजा
द्वारा सर्वथा भगवत्सम्बन्ध भयो। द्वेषके द्वारा शिशुपाल
त्सम्बन्ध होयकें तन्मयता भई। भगवत्सम्बन्धमें अवान्तर
अर्थात् पशु पक्षी मनुष्य शैव वैष्णव आदि भेद विघ्न-

कर्ता नहिंहैं जैसें चाहे जा काष्ठको दण्ड होय वाके सम्बन्धसों घट बनजावेंहै ऐसेंही कोईप्रकारसोंभी भगवत्सम्बन्ध होनोंचाहिये मुक्त होयजावेंहै । अतएव बिभीषणप्रल्हादादिक असुरभी भगवत्पदकूँ प्राप्तभये तासों भगवत्सम्बन्ध होनोंही परमपुरुषार्थ है ॥ और पुराणनमें जो राजसतामसदेवतानके स्वरूपज्ञानकूँ मोक्षरूप लिखोहै सो वह ज्ञान मोक्षको साधन पूर्वोक्तपरम्पराकरकें है तासों ऐसेस्थलमें पहिलीकी अवस्थाको छूटजानोंही मुक्तिहै॥मुक्तिनाम छूटवेको है जैसें राजसदेवताकी उपासनासों जहाँ मुक्ति लिखीहै तहाँ पहिलीकी तामसावस्थासों छूटजानोंही मुक्ति है याहीमों ब्रह्मपुराणमें सूर्यकेद्वारा शिवभक्ति वाके द्वारा वासुदेवमें भक्ति वामों कृतार्थता लिखीहै तासों मुक्तिप्रतिपादक वाक्यभी साँचे हैं॥५५॥

**चतुर्युगे तु व्यासानां नानात्वात्स्वस्वकालजम्॥ वृत्तान्तमाहुर्नान्यस्य कल्पान्तास्तेन कीर्तिताः ॥ ५६ ॥ सर्वनिर्धारणार्थाय व्यासो भागवमुक्तवान् ॥ एकं कल्पमुपाश्रित्य स्त्रीशूद्राणां हिते रतः ॥ ५७ ॥**

तत्त्वदीपप्रकाशः ।

नन्वेककल्पप्रतिपादकत्वम्पुराणानामसङ्गतं यतश्चतुर्युगवार्तामेव पुराणानि कथयन्ति कलौ सर्वेषाम्पर्यवसानात् ॥ अतोऽष्टादशयुगवार्तैव पुराणानामर्थः कुतो न भवेदित्याशंक्याह ॥ चतुर्युगेति ॥ एकस्मिन् कल्पे सहस्रं व्यासा भवन्ति तेषां द्वापरान्तेऽधिकारः ॥ ततः पुनः कृतौ सर्वविद्यानाम्पूर्णता ॥ पुनरन्यस्य व्यासार्थं द्वापरान्ते निवेशनमिति ॥ अतस्ते स्वचतुर्युगवार्तामेव कथयन्तीति न दोषः ॥ ५६ ॥

भारते भिन्नप्रकार इति तत्रापि कल्पभेदमाह ॥ सर्वनिर्धारणार्थायेति ॥ एकं यं कञ्चन ॥ यत्र कल्पे तथा पदार्थाः ॥ ततः स्त्रीशूद्राणाम्महत्त्वं सिध्यति ॥ यतस्तत्र सर्वेषामाचारो निरूपितः ॥ " न शूद्राय मतिन्दद्यात्" इत्यादिनिषेधस्तत्र न भवति ॥ कृतयुगे मानवा धर्माः पराशरवाक्यात् ॥ ५७ ॥

आवरणभंगः ।

अत्र कल्पात्मककालाधीनत्वन्न युज्यत इत्याशयेन शङ्कते ॥ ॥ नान्वत्यादि ॥ ॥ समाधिग्रन्थस्तु प्रकटार्थः । एकैककल्पप्रतिपादकत्वं द्वापरान्ते व्यासनिवेशश्चास्माभिः पूर्वं मात्स्यवचनोपन्यासेन प्रदर्शितमेव । न दोष इति चतुर्युगवार्त्ताप्रतिपादकत्वं कल्पप्रतिपादकताबाधकम्भवतीत्यर्थः ॥ मूले कल्पान्ता इति पुराणार्था इत्यर्थः ॥५६॥ एवम्पुराणप्रमेयन्निश्चित्येतिहासस्यापि पुराणतुल्यत्वात्तत्प्रमेयं निश्चेतुमाहुः ॥ ॥भारत इत्यादि ॥ ॥भिन्न इति ॥ ॥ पुराणोक्तप्रकाराद्भिन्नः ॥ ॥ सर्वनिर्धारणार्थायेति ॥ ॥ इदानीं त्रिविधपुराणसत्वेन सङ्कीर्णजीवानां किम्पुराणोक्तङ्कार्यमिति पुराणार्थविषयकम्पुराणानामुपबृंहणत्वेन वेदार्थविषयकश्च सन्देहं दृष्ट्वा "धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ॥ यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति वाक्यात्पुराणोक्तार्थस्वरूपबोधकत्वेन भारतव्यपदेशेन "आम्नायार्थश्च दर्शितः" इति वाक्याद्विशेषार्थज्ञापकत्वेन च सर्वेषां श्रुत्युक्तेर्थे सन्देहनिरासायेत्यर्थः ॥ एवम्प्रयोजनकथनमुखेन सनिर्द्धारकन्तस्य प्रमाणस्य स्वरूपमित्युक्तम् ॥ निर्द्धारणे प्रकारमाहुः ॥एकमित्यादि ॥ तथा पदार्था एवञ्च "स्त्रीशूद्रद्विजबन्धूनान्त्रयी न श्रुतिगोचरा ॥ कर्मश्रेयसि मूढानां श्रेय एवम्भवेदिह ॥ इति भारतमाख्यानं कृपया मुनिना कृतम्" इति प्रथमस्कन्धे स्त्रियो धन्याः शूद्रो धन्य इत्युपाख्याने विष्णुपुराणे च प्रसिद्धम् । सर्वनिर्धारणेन किं हितं कृतवानित्यपेक्षायां धर्मनिर्धारणमिति मूलं विवृण्वन्तस्तदाहुः ॥ तत्रेत्यादि ॥ यतस्तत्रेति ॥ यतो हेतोर्भारत इत्यर्थः ॥ एतेन साधनमप्युक्तम् ॥ इत्यादीति ॥ मन्वाद्युक्तः॥ "भारतव्यपदेशेन आम्नायार्थश्च दर्शितः ॥ दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत" इति वाक्यादित्यर्थः ॥ ननु यद्वै किञ्चेति श्रुतेर्नैवमुचितमित्यतः पक्षान्तरमाहुः ॥ कृतयुगेत्यादि ॥ "कृते तु मानवा धर्मास्त्रेतायां दक्षगौतमाः ॥ द्वापरे शाङ्खलिखिताः कलौ पाराशराः स्मृताः" इति पाराशरस्मृतेस्तथेत्यर्थः ॥ ५७ ॥

व्रजभाषाटीका ।

शङ्का–एक एक पुराण एक एक कल्पनको प्रतिपादन करेहै ये बात कैसें सम्भवसकें। पुराणमें तो चतुर्युगकी वार्त्ता लिखीहै तासों अष्टादशचतुर्युगकी वार्त्ताही अष्टादशपुराणनको अर्थ क्यों नहिंहो यसकें॥उत्तर–एककल्पमें हजार व्यास होवेंहैं और उनको द्वापरान्तमेंअधिकार होवे है तापीछें सत्ययुगमें फेर विद्याकी पूर्णता होवेहै फिर दूसरे जीवकों व्यासकरवेकेलियें द्वापरके अन्तमें निवेशकियोजावेहै तासों वे व्यास अपने २ चारोंयुगनकी वार्त्ता कहेहैं यासों न्यारे २ कल्पके प्रतिपादक न्यारे २ पुराण हैं यानिर्णयमें कछु दोष नहिंआवे है, क्योंकी जाकल्पको प्रतिपादक जो पुराण होवे है वा कल्पके सहस्रव्यास वा कल्पकेही सहस्रचतुर्युगनके वृत्तान्त वा पुराणमें कहेहैं ॥ ५६ ॥ महाभारतको तो प्रकार भिन्न है. अभी तीनोंही गुणनके पुराण विद्यमान हैं. सङ्कीर्णजीवनकूँ कोनपुराणके अनुसार वर्ताव करनोंचाहिये तथा वेदार्थविषयक सर्व निर्धार करवेकेलियें महाभारत व्यासजीने बनायो ॥ जाकल्प में वैसे उत्तम धर्मोपयोगी पदार्थ हते ऐसे कोई एककल्पको आश्रयकरकें भारत बनायो है तहां भारतोक्त धर्म करवेसों स्त्रीशूद्रादिकनकूंभी महत्त्व सिद्ध होय है याहीसों भारतमें सबनको धर्म वर्णन कियो है॥ " नशूद्राय मतिं दद्यात् " या मनुस्मृतिके वाक्यमें जो शूद्रनकों ज्ञान देवेको निषेध है सो भारतके ज्ञानदेवेको नहींहै क्योंकि भारत तो सर्वहितार्थही बनायो है। दूसरो याप्रश्नको ये उत्तर है कि मनुस्मृतिके धर्मनकूं पराशरजीनें सत्ययुगमें मानवेयोग्य कहेहैं,कलियुगमें तो पाराशरस्मृतिके धर्मकोंही मानवेयोग्य कहे हैं ऐसे पाराशरस्मृतिके वाक्य याश्लोकके आवरणभंगमें हैं॥ ५७ ॥

धर्मनिर्धारणन्तत्र सर्वेषां समुदाहृतं ॥ प्रत्यब्दं वृक्षवत्कल्पा भुवनद्रुमरूपिणः ॥ ५८ ॥ अन्यकल्पोक्तरीत्यापि कथितो भगवान् स्वयम् ॥ कल्पेस्मिन्सर्वमुक्त्यर्थमवतीर्णस्तु सर्वतः ॥ सर्वतत्त्वं सर्वगूढं प्रसङ्गादाह पाण्डवे ॥ ५९ ॥

तत्त्वदीपप्रकाशः।

कल्पस्वरूपमाह ॥ प्रत्यब्दमिति ॥ ५८ ॥ ननु कृष्णःसर्वमुक्त्यर्थमवतीर्णस्तस्य स्वरूपकथनार्थम्भागवतम्प्रवृत्तन्तच्च सारस्वतकल्पानुसारि मत्स्यपुराणे तथा प्रदर्शनात् ॥ अयञ्च श्वेतवाराहकल्पः अतोऽत्रत्यानाङ्कथं मुक्तिरित्याशंक्याह ॥ अन्यकल्पेति ॥ अन्यकल्पस्य रीतिरेव गृहीता सर्वत्र पुराणे तथैव निर्णयात् ॥ नतु राजसानामेव मोक्षदः ॥ ननु स्वरूपेणैव सर्वमुक्तिङ्करिष्यति किम्भागवतेनैवेत्याशंक्य भगवतोऽभिप्रायकथनार्थमाह ॥ सर्वतत्वं सर्वगूढमिति ॥ अर्जुनार्थेम्प्रसङ्गाद्गीतामाह ॥ अतो ज्ञायते शास्त्रद्वारैव मोचक इति प्रवृत्तिं वा सम्पादयिष्यतीति ॥ ५९ ॥

आवरणभंगः।

॥ कल्पेत्यादि ॥ कल्पो नाम पूर्वोक्तरीतिकं ब्रह्मणो दिनादिकन्तदुपाश्रयणेन धर्मादीनां वैलक्षण्यं कथम्भवति येन स्त्र्यादिहितसिद्धिरित्याकांक्षायाङ्कल्प स्वरूपमाहेत्यर्थः ॥ ॥ प्रत्यब्दमिति ॥ तथात्र तेषां स्वरूपवैलक्षण्येन यथा लोकसंस्थानां नानात्वं तथा लौकिकधर्मादीनामपि नानात्वमिति सुखेन स्त्र्यादिहितसिद्धिरित्यर्थः ॥ तेन काम्यम्फलमप्युक्तम् ॥ ५८ ॥ अतः परं मुख्यप्रमेयादिकं वक्तव्यं। तच्च गीतायां स्फुटमिति तां विचारयितुं तस्याः श्रीभागवतेन सहैककोटित्वाय तत्प्रयोजनकथनपूर्वकं मुख्यफलम्विचारयन्त आशंकन्ते ॥ ननु कृष्ण इत्यादिना ॥ अत्रायमर्थः। स्त्रीशूद्रादीनां महत्वसाफल्यं श्रेयःप्राप्त्या भवति श्रेयस्तु " मोक्षमिच्छेज्जनार्दनात् " इतिवाक्याद्भगवदधीनमिति निर्णीत

न्भगवांस्त्वस्मिन्कल्पेऽवतीर्णः कामादिना सर्वथा स्वसम्बन्धात् स्वरूपेण मोचितवान् ॥ तदुक्तं श्रीभागवते गोप्यःकामादिति ॥ "बलभीमपार्थव्याजाह्वयेन हरिणा-निलयन्तदीयम्" इति गारुडे॥च "अज्ञानिनःसुरवरेशमधिक्षिपन्तो यं पापिनोऽपि शिशुपालसुयोधनाद्याः ॥ मुक्तिङ्गताःस्मरणमात्रविधूतपापाः कः संशयः परमभक्तिमताञ्जनानाम्" इति । तेन तदानीं तु न भारतोपयोगः साम्प्रतन्तु नावतार इतीदानीं स्वरूपज्ञाने सति भक्त्यादिसाधने भारतमुपयुज्येत । ज्ञानन्तु श्रीभागवताधीनन्तच्चोक्तरीत्या नैतत्कल्पानुसारीत्येतत्कल्पीयानान्तदुक्तज्ञानानुपयोगात्तदभावे च भक्त्याद्यभावादिदानीमपि तेन मुक्त्यभाव इतीदानीमपि नोपयोग इत्याशंक्य भारतोक्तप्रकारेण मुक्तिनिरूपणार्थं सार्धेन समाधिमाहेति॥ ॥ अन्येत्यादि ॥ ॥ सारस्वतकल्पे उक्ता या रीतिः सैव भारते गीतायां गृहीता तत्र गमकम् ॥ ॥ सर्वत्रेत्यादि ॥ ॥ श्रीभागवते "अयन्तु ब्रह्मणः कल्पःसाविकल्प उदाहृतः ॥ पाद्मङ्कल्पमथो शृणु" "अयन्तु कथितः कल्पो द्वितीयस्यापि भारत । वराह इति विख्यातो यत्रासीच्छूकरो हरिः" ॥ इतिकल्पान्तराणामपि कथनान्मात्स्ये सप्तकल्पकथनादन्येष्वपि तथा दर्शनात्सर्वेषु पुराणेषु नरामराणां वृत्तान्तस्य रीतिरेव गृह्यत इति निर्णयात्तद्रीत्यात्र भगवानुच्यते न तु तत्कल्पीया एव जीवास्तेषां मुक्तत्वादतो न राजसानामेव मोक्षदः किन्तु सर्वेषामतोऽस्मिन्नपि सर्वतः कामक्रोधादितो मोचयिष्यतीत्यर्थः ॥ भारतश्रीभागवतयोरैकाधिकरण्यञ्च । "मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः ॥ यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीतानु हरेः कथायाम्" इति तृतीयस्कन्धीये विदुरवाक्ये स्फुटम् ॥ ॥ ननु स्वरूपेणैवेत्यादि ॥ ॥ यदि तत्कल्परीतिरेवात्र गृहीता तदा तत्र नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप" इति वाक्यात्स्वरूपेणैव मोक्षन्दास्यति । श्रीभागवतन्तु तत्कल्पानुसारीत्यस्मिन् कल्पे किन्तेन तदीयस्यसाधनांशस्यात्र गृहीतुमशक्यत्वाद्ग्रहणे व्यवस्थाभङ्गप्रसङ्गादित्याशंक्यतेन साधेननास्मिन्नपि कल्पे भगवतो मुक्तिर्दित्सितेति भगवदभिप्रायकथनार्थन्तद्गमकमाहेत्यर्थः ॥ ॥ मूले सर्वतत्वमित्यादि ॥ शोकमोहनिवारणाय सांख्ययोगनिरूपणप्रस्तावे स्वभक्तोपरि कृपया स्मृतस्य बुद्धिस्थस्योपेक्षानर्हत्वाद्राजसविद्यादि कथने मया ततमिदं सर्वमित्यादिना सर्वतत्वं वेदादीनां निष्कृष्टम्प्रमेयं मन्मना भव । स सर्वधर्मानित्यादिना सर्वगूढं इतराज्ञातं साधनफलञ्चार्जुनार्थम्भगवानाहेत्यर्थः ॥ ॥ प्रवृत्तिमिति ॥ ॥ अत्रापि शास्त्रद्वारेति सम्बध्यते । तथाचास्मिन्नपि कल्पे शास्त्रद्वारा मोचयिष्यति भक्तौ शरणे च प्रवृत्तिं वा सम्पादयिष्यती-

ति गीतोपदेशाज्ज्ञायतेऽतो मुख्ये साधने फले च न सन्देह इति भावः ॥ एतेन वेदपुराणार्थनिर्द्धारिकमेतस्य स्वरूपं वेदादिप्रमेयमेव निष्कृष्टरूपेण प्रमेयन्तथैव साधनम्फलञ्चेति विचारितन्तेनैतस्य प्रमेयस्य बलं सर्वाधिकमिति निर्णीतम्॥५९॥

व्रजभाषाटीका ।

प्रतिवर्ष जैसें वृक्षके पत्र पुष्पादिक नानाभांतिके नये नये आतेजावें हैं ऐसें भुवनरूपवृक्षकें कल्पानुसार लोकनकी रचना तथा लौकिक धर्म नाना होतेरहें हैं ॥ शङ्का—श्रीकृष्णचंद्र तो सबनकी मुक्तिकेलिये प्रकटभये हैं उनको स्वरूपवर्णन करवेको भागवत प्रवृत्तभयो है वा भागवतकूं मत्स्यपुराणमें सारस्वतकल्पके अनुसारी बतायो है । अभी श्वेतवाराहकल्प है, अभीके जीवनकी भागवतके ॥ सेवनसों कैसें मुक्ति होवेगी ॥ उत्तर—अन्यकल्पोक्तेति औरकल्पकी रीतिकोही ग्रहण कियो है । सब पुराणमें ऐसोही निर्णय है मत्स्यपुराणमेंही सातकल्पनको वर्णन है भागवतमेंभी । " अयन्तु ब्रह्मणः कल्पः पाद्मकल्पमथो शृणु " इत्यादिस्थलमें ब्रह्मपद्मवाराहादिकल्पनकोभी वृत्तान्त है । तासों याकल्पमें सबनकी स्वरूपकरकेही मुक्ति करवेकोलिये प्रकटभये श्रीकृष्णचन्द्रभगवानको भागवतमें सारस्वतकल्पकी रीतिके अनुसारभी वर्णनाकियो है ॥ ५८ ॥ शङ्का—स्वरूपकरकेंही श्रीकृष्णचंद्र सबनकी मुक्ति करदेंगे भागवत बनायवेको कहा प्रयोजन है ॥ उत्तर—उनही श्रीकृष्णचंद्रभगवाननें प्रसंगसों अर्जुनके अर्थ गूढ सर्वतत्वको जामें वर्णन ऐसें गीताशास्त्रको वर्णनाकियो तासों मालूमपडै है अभीके जीवनकूं शास्त्रद्वाराही मुक्ति देंहै, अवतारसमयमें तो भारतादिकशास्त्रविनाही स्वरूपकरकेंही गोपी पशु पक्षी आदिकनकी मुक्ति होवें है तासों अभीतो भागवतशास्त्रकी अवश्य अपेक्षा है ॥ ५९ ॥

शुकवत्तव्द्यासगीतं सत्वेनास्यावतारतः॥ईश-
वाक्यन्तु तस्यापि दुर्बोधम्भजनादृते ॥ ६०॥
जीवा एव हि सर्वत्र व्यासाः साम्प्रतमेव हि ॥
स्वयम्भूत्वा हरिः कृष्णः स्वांशं व्यासश्चका-
रह ॥ स्वज्ञापनाय भक्तानाम्पदप्राप्त्यै ततः
परम् ॥ ६१ ॥

तत्त्वदीपप्रकाशः ।

नन्वेवं सति कथं व्यासस्यानिर्वृतिस्तत्राह ॥ शुकवदिति ॥ अ-
भिप्रायाज्ञाने हेतुः ॥ सत्वेनास्येति ॥ सत्वांशव्यवधानेनावतारो यतः ॥
ननु वाक्यस्य विद्यमानत्वाद्वाक्यार्थविचारकस्य कथम्भ्रमस्तत्राह
॥ ईशवाक्यमिति ॥ अनेन भजनव्यतिरेकेण भागवतार्थो नावगम्यत
इति सूचितम् ॥ ६० ॥ नन्वेतादृशोऽग्रे कथन्तत्वं वक्ष्यतीत्याशंक्याह
॥ जीवा एव हीति ॥ भगवदिच्छया तदर्थमंशावतारणात्प्रयोजन-
माह ॥ स्वज्ञापनायेति ॥ ततःपरं रूपलीलातिरोभावनानन्तरं
नामलीलया क्रीडाङ्कर्तुं व्यासावतार इत्यर्थः ॥ ६१ ॥

आवरणभंगः ।

तदेतत्सर्वमेव सप्रपंचं सार्द्धैःपंचभिः परिहरंति ॥ नन्वित्यादिना ॥ ॥ एवं
सतीति ॥ व्यासेन भारते गीतोपनिबन्धनादिना सर्वनिर्द्धारे कृते सति । शुक-
वत्तद्व्यासगीतमिति ॥ ॥ तत् गीतोपनिबन्धनरूपं व्यासवाक्यं शुकवत् । शुकस्य
पक्षिण इव अर्थानवबोधेन युद्धारम्भे गीताया उक्तत्वेन युद्धप्रतिबन्धनिवर्त्तकतया
युद्धशेषत्वेनैवोच्चारितं । एवमानुशासनिकेऽपि कालादिशेषत्वेन धर्मत्वेन चोच्चा-
रितन्तेनानिर्वृतिरित्यर्थः ॥ अभिप्रायाज्ञान इति ॥ ॥ अनिर्वृतिहेतुभूते तस्मि-
न्नित्यर्थः ॥ भागवतार्थ इति ॥ ॥ भगवत्प्रोक्तवाक्यार्थः ॥ ६० ॥ अग्रे इति ॥
सूत्रेषु श्रीभागवते चेत्यर्थः ॥ तदर्थमिति ॥ ॥ तत्वकथनार्थन्तथा चांशावतार-

१ अहं युगानां च कृतं धीराणां देवलोऽसितः ॥ द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्म-
वान् ॥ १ ॥ इत्येकादशीयवाक्यात् ॥

कत्वाद्वक्ष्यतीत्यर्थः ॥ प्रयोजनमिति ॥ ॥ तत्वकथनप्रयोजनम् । पद्माख्या इत्यत्र हेतुर्नामलीलया क्रीडाङ्कर्तुमिति ॥ ॥ इत्याशंक्याहेति ॥ ॥ एवञ्जीवशक्यत्वन्तत्वकथनस्याशंक्य तदशक्यत्वमाहेत्यर्थः ॥ ६१ ॥

व्रजभाषाटीका ।

शंका—सर्वतत्व गीताजीमें वर्णनकियोहोतो तो भारत बनायें- पीछे व्यासजीको आत्मा क्यों नहिं प्रसन्नभयो, भागवत बनाये पीछेही क्यों भयो क्योंकि भारतमें तो गीताभी आगई है॥ उत्तर— व्यासजीनें भारतमें गीताजीको वर्णनकियो है सो सुवाकेंतुल्य अ- भिप्राय जानेंविना भगवान्के वाक्यनको वैसोको वैसो पुण्यपाठ करदियो हतो,क्योंकि सत्वगुणके व्यवधानकरकें व्यासजीको अव- तार भयो तासों गीतावाक्य विद्यमान हते तथापि भगवान्के भजन विना उनकूं अर्थको यथार्थज्ञान नहिंभयो तहां ऐसे व्यासजी जि- नकूं गीतार्थज्ञान नहिं है भागवतरूप तत्वको कैसें वर्णनकरेंगे यह शंका नहिं करनी, क्योंकि भगवान्की भक्तिसों सत्वको व्यवधान दूरभयो तब भागवत वर्णन कियो है ॥ ६० ॥ और द्वापरयुगमें जीवही व्यास होजावें हैं या द्वापरयुगमें तो स्वयं पूर्णरूप कृष्ण- चंद्र प्रकटहोयकें रूपलीलाकरके क्रीडा करतेभये रूपलीलाके तिरो- भाव करेंपीछें नामलीला शब्दात्मक भागवतको स्वरूप धारण- करकें क्रीडाकरवेकेलिये पहिलीसोंही अपने अंशकरके व्यासजी- कूं प्रकटकिये ॥ वेद पुराण विद्यमानही हैं जीवभी धर्मनिर्णय करसक्तेहते ये शंका नहिंकरनी जाविषयमें व्यासजीकूं अज्ञान है तहां जीवनकी कहा चलाई, यह बात व्यासजीनें भागवतमें कही है कि मैनें भारतके मिषसों वेदको अर्थ दिखायो, जाभारतमें स्त्रीशूद्रादिकनकोभी वर्णनलिख्यो है ऐसो भारतभी मैने बनायो परन्तु मेरो आत्मा संतुष्ट नहिंभयो तापीछें भगवद्भजनद्वारा -जब

भगवान् प्रसन्नभये तब भगवदिच्छासों व्यवधानकरवेवालो सत्व-गुण दूर भयो तब श्रीभागवत प्रकटकियो सो भागवत भगवान्-को स्वरूप जतायवेकेलिये तथा भगवत्पदकी प्राप्ति करवेकेलिये प्रकटभयो है ॥ ६१ ॥

**सत्वस्य व्यवधानत्वादात्माज्ञानाच्च योगतः॥**
**व्यासकार्यं समस्तञ्च कृतवानधिकन्तथा ॥अ-**
**निर्वृतिस्ततो जाता तेन भागवतं कृतम् ॥६२॥**
**सर्वगोप्यो हि धर्मस्तु वेदे मुख्यतयोदितः ॥**
**ब्रह्ममात्रप्रकाशस्तु कृपया सनकादिगः ॥६३॥**

तत्त्वदीपप्रकाशः ।

, नन्वस्यार्थस्य बुद्धिपरिकल्पितत्वे काव्यवदसत्यता स्यात् ॥ वेद-पुराणयोर्विद्यमानत्वे जीवैरपि कर्त्तुं शक्यत इति किं व्यासावतारेणे-त्याशंक्याह ॥ सत्वस्येति सार्द्धैस्त्रिभिः ॥ यत्र व्यासस्याप्यज्ञानं तत्र जीवानाङ्का वार्तेति निरूपयितुमनिर्वृतिर्भारतनिर्माणं चोक्तन्ततो भगवदिच्छया व्यवधायके अपगते भागवतं कृतमित्यर्थः ॥ ६२ ॥ ननूक्तम्पूर्वसिद्धोऽर्थो न वेति तत्राह ॥ सर्वगोप्यो हीति ॥ भवति वे-दार्थ एव परं गुप्तः भगवदिच्छया यदा पुनः सर्वोद्धारार्थं प्रयत्नं कृत-वान् तदा परम्पराया अभावाज्ज्ञान्यैर्व्यासैर्वक्तुं शक्यत इति व्यासा-वतारः ॥ ६३ ॥

आवरणभंगः ।

सत्वस्येति ॥ ॥ मूले तु: पूर्वपक्षनिरासे । 'ततः सप्तदशे जातः' इति वाक्येन पुरुषावतारतया सत्वस्य व्यवधानेन स्वस्वरूपाज्ञानात्केवलयोगतो व्यासकार्यं वे-दानां व्यासं समस्तं पुराणसमसनञ्च कृतवान् । तथा तेनैव प्रकारेण स्वरूपाज्ञान-सहभूतेन.योगेन अधिकम्भारतञ्च कृतवान् । मत्स्यपुराणादिषु पुराणसमसनमेव व्यासकार्यत्वेनोक्त्वाग्रे पुराणसंख्यादानफलतल्लक्षणान्युक्त्वा सत्यवतीसुतो भार-ताख्यानश्चक्र इत्यनेन सत्यवतीसुतस्यैव भारतकर्तृत्वमुच्यते तेन व्यासान्तरापेक्ष-

या कार्याधिक्यमुच्यते ॥ तथा सति यत्सिद्ध्यति तदाहुर्विवृतौ ॥ यत्रेत्यादि ॥ व्यासस्येति ॥ ॥ उक्तस्वरूपात्मकस्येत्यर्थः ॥ उक्तमिति ॥ ॥ श्रीभागवते व्यासेनैवोक्तमित्यर्थः ॥ तेन सिद्धमाहुः ॥ तत इत्यादि ॥ ॥ अतो जीवानां सर्वथैवेदमशक्यमिति भावः ॥ एवमनिर्वृतिहेतुकथनमुखेनतस्याः सर्वतत्वकथने अबाधकत्वमुक्तम् ॥ ६२ ॥ उक्तार्थं दृढीकर्त्तुम्पुनः किञ्चिदाशंक्य परिहरंति ॥ नन्वित्यादि ॥ सर्वगोप्यइत्यादि ॥ ॥ अत्र सार्द्धेन श्रीभागवतस्य प्रमेयमुक्तं गीतासामानाधिकरण्यञ्च बोधितम् ॥ सर्वगोप्यत्वञ्च ॥ "सर्ववेदेतिहासानां सारं सारं समुद्धृतम्" इति वाक्यात् "धर्मः प्रोज्झितकैतवोऽत्र" इति वाक्याच्च ज्ञायते। वेदे मुख्यतया कथितत्वञ्च "भगवान् ब्रह्म कार्त्स्न्येन" इति "धर्मः स्वनुष्ठितः पुंसाम्" इत्यादिवाक्यैः "तमु स्तोतारःपूर्व्यम्" इत्यादिश्रुतिभिश्च ज्ञायते ॥ ब्रह्ममात्रप्रकाशत्वञ्च द्वितीयस्कन्धीयपुरुषसूक्ताध्यायात्। कृपया सनकादिगत्वञ्च हंसगीतायां ज्ञेयम् ॥ नन्वेवमन्यत्राप्युच्यत इति नास्य विनिगमनेत्यत आहुः ॥ यदा पुनरित्यादि ॥ ॥ 'यदा यदा हि धर्मस्य' इतिवाक्यात् "यत एतद्विमुच्यते" इति वाक्याच्च सर्वोद्धारार्थमेव भगवदवतारः। तथा यदा पुनरिच्छा तदेत्यर्थः ॥ ६३ ॥

व्रजभाषाटीका।

इन व्यासजीनें और व्यासको कार्य वहभी कियो तथा वासों अधिकभी कियो अर्थात् महाभारत सत्यवतीसुतव्यासजीनें वर्णनकियो है ऐसें मत्स्यपुराणमें लिखो है यह भारत बनानो और व्यासनकी अपेक्षा इननें अधिक कार्य कियो ॥ ६२ ॥ शङ्का—भागवत पहलीसोंही चलोआवें है अथवा नवीनही प्रकटकियोहै? तथा भागवतको सिद्धान्त पहिलीसोंही सिद्ध है अथवा नवीन है? उत्तर—वेदमें मुख्यधर्म अत्यन्तही गुप्त है ब्रह्मही जानें ऐसो है कृपाकरकें हंसरूप धारणकरकें सनकादिकनके अर्थभी भगवाननें वेदोक्त गुह्यधर्मको वर्णनकियो, फिर जब भगवाननें इच्छाकरकें सर्वोद्धारार्थ प्रयत्नकियो तब परम्परा न रहवेके कारणसों और व्यास गुप्तवेदार्थको वर्णन नहिंकरसके तब भगवाननेंही अंशकरकें व्यासावतार धारणकियो ॥ ६३ ॥

स इदानीं तु गीतायां प्रकटो भगवत्कृतः ॥ त-
द्व्यासत्वाद्भागवतं पूर्वं भगवतोदितम् ॥ ६४ ॥
विश्वासार्थम्पुराणेषु पठितं भक्तिहेतुकम् ॥ प्र-
तिपाद्येशलीलायाः पुराणार्थन्ततःपुनः ॥६५॥

तत्त्वदीपप्रकाशः ।

अभिप्रायज्ञापनार्थं गीतायां स एव प्रकटीकृतः ॥ तर्हि तावन्मात्र एव वक्तव्यः स्यादित्यत आह॥ तद्व्यासत्वादिति ॥ यथा भागवतं गीताविस्तारस्तथा नामलीलारूपभगवद्विस्तारो व्यासः परम्परान्तरमप्याह ॥ पूर्वं भगवतोदितमिति ॥ ६४ ॥ तर्हि पञ्चरात्रवत्स्वतन्त्रता भवत्वित्याशंक्याह ॥ विश्वासार्थमिति ॥ आगमापेक्षयापि लोकाना पुराणे विश्वासः ॥ हेत्वन्तरमाह ॥ भक्तिहेतुकमिति ॥ तद्ध्युपासनाविधायकम् ॥ अन्यमपि हेतुमाह ॥ प्रतिपाद्येति ॥ ईशलीला सर्गादिरूपा ॥ अन्यथा श्रोतुस्तद्भावापत्त्यभावे तत्तत्कर्म्मक्षयाभावान्न मोक्षः स्यात् ॥ अतो दश लीलाः पुराणलक्षणरूपा इति पुराणेषु प्रवेशः॥ ६५ ॥

आवरणभंगः ।

अभिप्रायज्ञानार्थमित्यादि ॥ ॥ स्वस्य भगवदभिप्रायज्ञातृत्वमस्तीति स्वाभिप्रायज्ञापनाय प्रकटीकृत इत्यर्थः ॥ तर्हीति ॥ ॥ यदि व्यवधायकेऽपगते गीतार्थ एव श्रीभागवते उक्तस्तर्हीत्यर्थः ॥ तव्द्यासत्वादिति ॥ ॥ तद्गीतापेक्षया आधिक्येन कथनं व्यासत्वात्स्वस्य नामलीलात्मकभगवद्विस्ताररूपत्वात् । एतदे व विवृण्वंति ॥यथेत्यादि॥ तथाच व्यासत्वाद्यथा वेदस्य व्यासः कृतस्तथा गीताया अपीत्यतस्तावन्मात्रन्नोक्तमित्यर्थः॥ परम्परान्तरमप्याहेति ॥ ॥ आश्वमेधिके गातार्थो यथा प्रकारान्तरेणानूदितस्तथैवात्र कुतो नोक्तमित्याकांक्षायामेतदाहेत्यर्थः ॥ तथा च यथा चतुःश्लोक्यां यद्भगवतोक्तन्तदेव ब्रह्मणा नारदाय त्रिभिरध्यायैरुक्तन्तत्रैव त्वमेतद्विपुलीकुर्वित्याज्ञप्तश्च विपुलीकरणञ्चैकस्यैवार्थस्य तत्तदधिकारिणां हृदि प्रवेशाय नानाप्रकारेण कथनम् । यथाच नृसिंहोत्तरतापनीय ॐकारव्याख्यानस्य । अतो नारदवदेव व्यासेनापि विपुलीकरणात्परम्परान्तरेपीद-

है तासों पुराणनमेंही श्रीभागवतकी गणनाहै, दूसरो कारण येभी है नारदपंचरात्र उपासनाविधायक है श्रीभागवत भक्तिविधायक है। पुराणनमें गणनाको तृतीय हेतु यह है कि श्रीभागवतमें सर्गविसर्गादि दशप्रकारकी लीलाको प्रतिपादन है यदि दशप्रकारकी सर्गादिलीलाको वर्णन नहिं होय तो सुनवेवालेको कर्मक्षय नहीं होय कर्मनाशविना मोक्षभी नहींहोय तासों दशविधा लीला पुराणको लक्षण है सो श्रीभागवतमें मिलेहै तासों याको पुराणमें प्रवेशहै ॥ ६५ ॥

**सर्वमुक्तिनिवृत्त्यर्थं वेदत्वन्तस्य नोक्तवान्॥ वेदकर्तृवचस्त्वाद्धि सतां सर्वम्भविष्यति ॥६६॥**
**स्वस्यान्यस्य च निर्वाहं वेदः कर्तुन्न हि क्षमः । अत्यन्तमलिना लोकास्ततो भागवतं कृतम्॥**
**एतदभ्यसनाल्लोको मुच्यतेऽनुपजीवनात् ॥६७॥**

तत्त्वदीपप्रकाशः ।

ननु पूर्वसिद्धं वेदत्वमेव कुतो नोक्तवाँस्तत्राह ॥ **सर्वमुक्तिनिवृत्त्यर्थमिति॥** व्यासस्यैतावान्सङ्कोचोऽग्रिमावतारकार्यसिद्ध्यर्थं विश्वासाभावाय वेदत्वाकथनं पाक्षिकप्रयोजनसिद्ध्यर्थं वा बुद्धावतारे वेदानान्निराकरणात् ॥ अतः पुराणार्थत्वेन वा तिष्ठत्विति युक्तमुत्पश्यामः ॥ विश्वासस्तु भविष्यतीत्याह ॥ **वेदेति ॥** सतां दैत्यावेशरहितानाम् ॥ ६६ ॥ मर्यादाशास्त्रापेक्षया भागवतस्योत्कर्षं वक्तुमाह ॥ **स्वस्येति ॥** वेदार्थानुष्ठाने सिद्धे वेदः सफलो भवति नतु स्वार्थानुष्ठानं सम्पादयितुं शक्तः ॥ अतः स्वनिर्वाहे कुण्ठितः ॥ तत्र हेतुः ॥ **अत्यन्तमलिना इति॥** तर्हि भागवते कथन्न दोषस्तत्राह ॥ **एतदभ्यसनादिति ॥** अभ्यासमात्रेणैव तदर्थानुष्ठानाभावेऽपि लोको मुच्यते ॥ परमत्रै-

को दोषस्तदुपजीवनमिति ॥ अतस्तदभावमाह ॥ अनुपजीवनादि-ति ॥ वृत्त्यर्थमुपायो न कर्तव्यः ॥ ६७ ॥

आवरणभंगः ।

पूर्वसिद्धमिति ॥ ॥ वेदसारोद्धाररूपत्वात्पूर्वसिद्धम् ॥ सङ्कोचस्वरूपं सप्रयो-जनमाहुः ॥ अग्रिमेत्यादि ॥ अभिप्रायान्तरमाहुः ॥ पाक्षिकेत्यादि ॥ ॥ तच्च प्रयोजनम्पुराणोक्तरीत्या सर्वमुक्तिः । तथा सति मूलस्थं सर्वमुक्तिनिवृत्त्यर्थपदं वे-दत्वमित्यस्य विशेषणम् । सर्वमुक्तिनिवृत्तिरर्थः प्रयोजनं यस्य तादृशं वेदत्व-मिति । एतदेव स्पष्टयन्ति ॥ बुद्धेत्यादिना ॥ ॥ दैत्यावेशरहितानामिति ॥ यथा बुद्धावतारेण कृतेऽपि वेदनिंदने सर्वेषान्न बाह्यत्वमपि तु दैत्यादीनामेव तथात्रापीति भावः ॥६६॥ आहेति ॥ ॥ श्रीभागवतकरणमित्याहेत्यर्थः ॥ अभ्यासमात्रेणेत्या-दि ॥ ॥ "किं वा परैरीश्वरः सद्यो हृद्यवरुद्ध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्" इत्यादिवाक्यात् ॥ "अस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे । भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा" इति वाक्यात् तस्माद्भारत सर्वात्मेत्यत्र श्रवणादिसाध-नत्रयविधानमुखेनावृत्तिबोधनाच्च तथेत्यर्थः ॥ एतेन साधनम्फलञ्चोक्तम् ॥ तर्हि सर्वमुक्तिरेव स्यादिति तद्वारणाय कालादिकृतम्प्रतिबन्धकमुद्घाटयन्ति ॥ परमत्रापीत्यादि ॥ ६७ ॥

व्रजभाषाटीका ।

वेदको साररूप श्रीभागवत है तासों वेदरूपही है परंतु व्यास-जी याविषयमें संकोच करगयेहैं, आसुरजीवनको विश्वास नहीं करायवेकेलियें वेदत्व भागवतकूँ नहिं कह्यो क्योंकि आसुर-नकूँ सन्मार्गसों निवृत्तकरनों बुद्धावतारको काम है सो व्यासजीनें पहिलीसोंही कियोहै। दूसरो प्रयोजन यह है जो भागवतकूँ वेदरू-प मानते तो बुद्धभगवाननें वेदनको खंडन कियो तामें श्रीभाग-वतकोभी खंडन होयजातो तथा श्रीभागवतकी वेदमें गणना होती तो वेदसों जैसें सबकी मुक्ति नहिं होवेहै ब्राह्मण क्षत्रिय वै-

तत्त्वदीपप्रकाशः।

नयोर्वैलक्षण्ये युक्तिमाह ॥ कालादीति ॥ कालादयः षट् शुद्धाः
ाधयन्ति ते कलौ कथमपि न शुद्धा भवन्ति ॥ वेदाद्यर्थाश्च का-
ाधनापेक्षाः॥ ६८ ॥ भागवतार्थस्तु न तानपेक्षते नित्यत्वात्सर्वाधि-
त्सुलभत्वाच्चेत्याह ॥ कालादिसाधनापेक्षारहित इति ॥ ६९ ॥

आवरणभंगः।

गोरित्यादि ॥ ॥ वेदार्थापेक्षया श्रीभागवतार्थस्य बलवत्त्वम्बोधयितुमु-
क्तश्रीभागवतोक्तसाधनयोर्वैलक्षण्ये युक्तिमाहेत्यर्थः ॥ ६८ ॥ नित्यत्वा-
द् ॥ ॥ नित्यत्वन्तु "तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्व-
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम्" इत्यादि शुकवाक्येन
; सर्वकाले च कर्तव्यत्वेनोक्तत्वाज्ज्ञेयम् ॥ सर्वाधिकारत्वञ्च 'देवो-
नुष्यो वा' इति सप्तमस्कन्धाज्ज्ञेयम् ॥ सुलभत्वञ्च 'त्वन्तु सर्वम्परित्यज्य'
मान्मद्भक्तियुक्तस्य' इत्यादिवाक्येभ्यो ज्ञेयम्॥ एतेन ब्राह्मपाद्मवैष्णवादि-
जगत्कर्तृत्वादिलक्षणकब्रह्मत्वेन भगवतः प्रतिपादनेऽपि स्वातन्त्र्येण
ाःप्रतिपादने शतकोटिविस्तीर्णपुराणसात्विकभागसमसनरूपत्वमेव तस्य
ानुभवपूर्वकत्वं समाध्यभावादतएव वैष्णवादीनामेतच्छेषत्वम्। अतएवचै-
त्म्यम्पुराणान्तरे दृश्यते गीतामाहात्म्यवत्। नत्वन्येषां नाप्यस्मिन्नन्ये-
अतएव चैतस्य परिपक्ववेदफलरूपत्वं निगमकल्पतरोरितिवाक्यात्। न-
तथावाक्याभावादित्यपि श्रैष्ठ्यं सूचितं ज्ञेयम्। एवं श्रीभागवतस्य स-
उत्कृष्टत्वम्प्रमाणप्रमेयसाधनफलैरुपपादितम्। तेन वेदादिसन्देहवारक-
ेतम् ॥ ६९ ॥

व्रजभाषाटीका।

: भागवतमें परस्पर विलक्षणता दिखावें हैं, काल देश द्रव्य
न्त्र कर्म ये छः पदार्थ शुद्ध होंय तब फल सिद्धकरें हैं
द स्मृति पुराणार्थ इन छःपदार्थनके आधीन हैं। कलियुगमें
दार्थ कोई रीतिसोंभी शुद्ध नहिं होयसकें, कलियुग जैसो
ो हेतु काल है देश है वे म्लेच्छनकरके आक्रांत द्रव्य जे
कके सोमलता आदि पदार्थ हैं वेभी नहिं मिलें हैं। जे

मिले हैं वेभी शुद्ध नहिं मिलें हैं । कर्ता आचारहीन मलिन हैं, मंत्रभी बहुतकरकें स्वरअर्थकरकें हीन हैं, कर्मकरवेकीभी रीति परम्पराप्राप्त नहिं है तासों वेदार्थानुष्ठान अभी दुर्लभ है॥ ६८ ॥ भागवतार्थ तो इनकी अपेक्षा नाहिं करें है क्योंकि "हरिः सर्वत्र सर्वदा श्रोतव्यः " इत्यादिवाक्यनसों भागवतको तो सब कालमें सबदेशमें सुननों कीर्तनकरनो लिखें हैं तासों नित्यहै। तथा देव आसुर मनुष्य कोई होय सबही याके अधिकारी हैं और सुलभ है सो१००क्रोड पुराणमें३३ क्रोड राजसभाग है३३ क्रोड तामसभाग है ३३ क्रोड सात्विकभाग है तिनमें जो३३ तेतीसक्रोडके अंदाज सात्विकभाग है वाको संक्षेपकरके भागवतमेंही निरूपण है स्वतंत्रतासों भगवान्के यशको याहीमें वर्णन है और सात्विक पुराण याके अंग हैं याहीसों भागवतको माहात्म्य और पुराणमें है भागवतमें और पुराणको माहात्म्य नाहिं है॥ वेदको पक्यो भयो रसमय फल श्रीभागवत है ॥ वेदादिकनके सन्देह दूरकरवेवारो है॥६९॥

फलतः सुगमश्चैव सर्वथा फलसाधकः ॥ योगसांख्ये तु ये मुख्ये तयोः सत्वे प्रयोजनम् ॥ ज्ञानदुर्बलवादानान्न मनोरथवार्तया ॥ सिद्धिं यान्ति नरा दुष्टाव्यामोहस्तु ततः फलम् ॥ ॥ ७० ॥ ग्रन्थान् पुराणवाक्यानि वेदरूपेण वै क्वचित ॥ कृत्वा वृथा वेषधराः कृष्णन्नोपासते परे ॥ ७१ ॥ इति पुराणप्रकरणम् ॥

तत्त्वदीपप्रकाशः।

नत्वन्योऽपि मार्गो योगः सांख्यश्च कालाद्यपेक्षारहितः । योगेनैव

सर्वानर्थनिवृत्तिर्ज्ञानेन चेत्याशङ्क्यैतद्द्वयन्दूषयन्ति॥ **योगसांख्ये इति**॥ किं मुख्ये योगसाख्ये तथाभूते आहोस्विद्याद्दशे तादृशे ॥ तत्राद्ये नास्मिन्युगे भवतस्तत्साधनानाङ्कालाद्यपेक्षणात् ॥ साधनरहितयोस्त्वप्रयोजकत्वं सत्वे सत्यरूपत्वे ससाधने उत्कृष्टरूपे योगसांख्ये सफले इत्यर्थः॥ अन्ये पुनर्ज्ञानदुर्बलत्वादसिद्धे॥ अतस्तेषाम्मनोरथकल्पितत्वान्न ताभ्याम्फलङ्किन्तु व्यामोह एव ताभ्याञ्जन्यते ॥ ७० ॥ कथमेवमवगम्यत इत्याकांक्षायामाह ॥ **ग्रन्थानिति** ॥ स्थूलान्मिथ्यार्थप्रतिपादकान् यथा बुद्धिस्तत्रैव लग्ना भवति पुराणवाक्यानि च कल्पयन्ति क्वचिद्वेदरूपेणापि ॥ यथा परमहंसोपनिषत् ॥ एवं कृते 'यज्जातन्तदाह ॥ **वृथा वेषधरा इति** ॥ मुण्डादिपारलौकिकवेषान्धृत्वा मोहः सिद्ध इति स्वयमपि कृष्णं नोपासते तथा सति भजनम्प्रवर्ततेति ॥ एवम्भागवतेनैव सर्वनिस्तार इति पुराणप्रकरणे निरूपितम् ॥ ७१ ॥

आवरणभंगः ।

अतः परं गीतायां श्रीभागवते च योगसांख्ययोरप्युक्तत्वात्तयोरेतत्साम्यमाशंक्य परिहरन्ति ॥ नन्वित्यादि ॥ ॥ मुख्ययोगसांख्ये इति । पौराणिके पतञ्जलिप्रणीते चेत्यर्थः ॥ मूले प्रयोजनमिति ॥ ॥ सिद्ध्यतीति शेषः । एतदेव विवृण्वन्ति ॥ ससाधनेत्यादि ॥ ॥ अन्य इति ॥ ॥ पतञ्जलिकपिलप्रणीतेषु वा मायागमेषूच्यमाने चेत्यर्थः ॥ ७० ॥ कल्पयंतीति ॥ ॥ यथा आत्मपुराणङ्केनचिन्मायावादिना कल्पितन्तथेत्यर्थः ॥ परमहंसोपनिषदिति ॥ ॥ उपलक्षणमेतत् ॥ वैतथ्याद्वैतालातशांत्याख्यम्प्रकरणत्रयं मांडूक्यस्थाः श्लोकाश्च गौडपादीयान्येतानीदानींतनैरुपनिषत्सु पठ्यन्ते । एवमन्यान्यपि सर्वोपनिषदादीनि प्राचीनमायावादिग्रन्थेष्वपि तत्सम्मत्यदर्शनादाकरालाभाच्च ज्ञेयानि । तथासतीति ॥ ॥ उपासने कृते सतीत्यर्थः ॥ यद्यपि तत्र भजनन्तथापि द्वारन्तद्भवतीति तदपि निरुन्धन्तीति भावः॥ प्रस्तुतप्रासङ्गिकसर्वनिरूपणेन सिद्धमाहुः । एवम्भागवतेत्यादि ॥ ॥ निरूपितमिति ॥ ॥ बलवत्वाय निरूपितम् ॥७१॥

इति पुराणप्रकरणम् ॥

व्रजभाषाटीका ।

शङ्का–योगसांख्यभी गीता तथा भागवतमें लिखेहैं तथा कालदेशादिकनकीभी अपेक्षा इनकूं नहिं है तथा ज्ञानभी सर्वकर्मनकूँ भस्म करवेवारो है तासों इन तीन साधनकरकेभी अनर्थ निवृत्ति होजायगी ॥ उत्तर–पौराणिक तथा पातञ्जलिप्रणीत जे योगसांख्य हैं वेही अनर्थकी निवृत्ति करवेवाले हैं अथवा जहां तहां लिखे सबप्रकारकेही सांख्य योग अनर्थकी निवृत्ति करवेवारे हैं यह विचार करनो योग्यहै. तहां पौराणिक पातंजल सांख्य योग तो कालदेशादिसाधनकी अपेक्षावाले हैं तासों यायुगमें नहिं सिद्धहोयसकें। जे देशकालादिसाधनरहित योग सांख्य हैं वे प्रयोजन सिद्धकरवेवारे नहिं हैं किन्तु साधनसहितही योगसांख्य उत्तम हैं तथा वाममार्गीनके शास्त्रनमें कहे योगसांख्य तो ज्ञानदुर्बल हैं तासों सिद्ध नहिं हैं अर्थात् असंगत हैं मनकी कल्पनाके बनेभये हैं तासों उनकरके फल सिद्ध नहिं होवे है किन्तु केवल मोहके करवेवारे हैं ॥ ७० ॥ ये बात कैसें जानी जावें है तहाँ आज्ञा करें हैं ॥ ग्रन्थानिति ॥ वृथा मुंडादि पारलौकिक वेषकूं धारण करकें मिथ्या अर्थके कहवेवारे बडे बडे ग्रन्थनकूँ बनायदेहैं जिसमें मनुष्यकी बुद्धि शीघ्र लगजाय ऐसेंही कितनेक पुराणनके वाक्यभी मनसोंही बनालिये हैं। जैसें आत्मपुराण कोई मायावादीनें बनायलियो है वेदमेंभी कितनेक उपनिषत् बनायलिये हैं जैसें हंसोपनिषद् मांडूक्यके गौडपादके बनायेभये श्लोक उपनिषदनमें पढादिये हैं। जैसें सर्वोपनिषद्प्राचीनमायावादके ग्रन्थमेंभी जाकी संमति नहीं दीखपडे है इत्यादि अनेक शास्त्र बनायकें बनायवेवारे स्वयंभी कृष्णकी उपासना नहिंकरें हैं वे करें होंय तो उनकूं देखकें औरभी भजनमें प्रवृत्त होंय तासों भागवतसोंही सब

ार होयसकेहै येही बात पुराणप्रकरणमें निरूपण करीहै॥७१॥

इति पुराणप्रकरणं संपूर्णम् ॥

ङ्गानि यथा वेदे वेदरक्षाफलानि हि ॥ स्व-
ातोऽर्थतश्चैव ह्यनुष्ठानात्रिधा हि तत् ॥७२॥
क्षा छन्दः स्वरूपे तु निरुक्तं व्याकृतिस्त-
॥ अर्थे ज्योतिस्तथा कल्पो ह्यनुष्ठाने प्र-
जकः ॥ विशेषतो हीदमुक्तं सर्वं सर्वत्र चैव-
॥ ७३ ॥

तत्त्वदीपप्रकाशः ।

त्र श्रुतिस्मृतिपुराणानि निरूप्य षडङ्गानि निरूपयन्ति ॥ षडङ्गा-
॥ "शिक्षा कल्पो व्याकरणं निरुक्तञ्छन्दो ज्योतिषम्" इति ॥
सामान्यफलं वेदरक्षा सा च त्रिविधा ॥ वैदिकशब्दा विसदृशा
मद्रङ्कर्णेभिः" इत्यादौ पण्डितैरन्यः याकरणं सम्भवति तन्निराकृत्य
तो रक्षणीयाः ॥ अर्थतोऽपि रक्षणीयाः ॥ अन्यथा यागमेव न जा-
॥ अतएव साम्प्रतन्दानमेव याग म्मन्यन्ते ॥ अनुष्ठानादपि रक्षा॥
ाऽन्यथानुष्ठानं स्यात्कल्पाद्यभावे ; ॥ ७२ ॥ तत्र द्वयोर्द्वयोरुप-
ह ॥ शिक्षेति ॥ स्वरादिविधौ शब्देऽपि व्याकरणोपयोग इति
ारमाशंक्याह ॥ विशेषत इति ॥ ७३ ॥

आवरणभङ्गः ।

ानीति ॥ ॥ तथाच वेदाङ्गत्वेन रूपेणैषाम्प्रामाण्यमित्यर्थः । फ-
॥ एतेषामित्यादि ॥ ॥ त्रिविधेति ॥ ॥ स्वरूपरक्षार्थं रक्षानुष्ठा-
ेत्यर्थः । तद्विशदीकुर्वन्ति ॥ वैदिकेत्यादि ॥ अतएवेति ॥ ॥ याग-
ाज्ञानादेवेत्यर्थः ॥ सामान्यफलमुक्त्वा विशेषफलं वक्तुं यत्र यस्य योग-
ते ॥ ७२ ॥ तत्रेत्यादि ॥ ॥ शिक्षा छन्द इति । तत्र शिक्षा " अ-
म्प्रवक्ष्यामि " इत्यादि ॥ पञ्चखण्डात्मिका पाणिनिप्रकाशिता सर्ववेद-

साधारणा । तस्याः प्रयोजनं चोदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतविशिष्टस्वरव्य-ञ्जनात्मकवर्णविशेषज्ञानं उच्चारणप्रकारविशेषज्ञानं चेति स्वरूप उपयोगः ॥ तदभावे मन्त्राणामनर्थजनकत्वं स्यात् । "मन्त्रो हीनः स्वरतो वर्णतो वा" इतिवाक्यात् । छन्दस्तु "मयरसतजभनलगसम्मितम्" इत्याद्यष्टाध्यायात्मकम्पिङ्गलेन प्रकाशितम् ॥ तत्र अथालौकिकमित्यादिनाऽध्यायत्रयेण गायत्र्युष्णिगनुष्टुप् जगतीति सप्तछन्दांसि सावान्तरभेदानि निरूपितानि। अथ लौकिकमित्याद्यध्यायपञ्चके तु पुराणेतिहासादिषूपयुक्तानि काव्याद्युपयुक्तानि च प्रसंगतो निरूपितानि॥ व्याकरणे लौकिकपदवच्छदांसि च मन्त्रेषूपयुक्तानि अन्यथा गायत्र्यादौ वरेणियमिति व्यत्ययेन पाठो न स्यात्तदभावे च मन्त्रो वर्णतो हीयेत । अतच्छन्दसोऽपि स्वरूपोपयोगः॥ निरुक्तव्याकरणयोर्ज्योतिःकल्पयोश्च यथायथमर्थेऽनुष्ठाने चोपयोगः स्पष्ट एव ॥ किञ्चिदाशंक्य परिहरन्ति ॥ स्वरादीत्यादि ॥ ॥ विशेषत इति ॥ ॥ तथाच व्याकरणस्य यः स्वराद्युपयोगः सोर्थद्वारकः । यथेन्द्रशत्रुपदे स्वरभेदेन बहुव्रीहिणाऽर्थस्य वैपरीत्यमभूत्तथाभूतदिति । अतः परम्परया त्रिष्वपि षण्णामुपयोगोऽतो न दोष इत्यर्थः ॥७३॥

व्रजभाषाटीका ।

वेदके छः अंगनको निरूपण करें हैं ॥ शिक्षा कल्पसूत्र व्याकरण निरुक्त छन्दोग्रन्थ ज्योतिष ये छः शास्त्र वेदके अङ्ग हैं । वेदकी रक्षा करनों इनको सामान्य फल है ॥ वेदकी रक्षा तीनप्रकारकी है स्वरूपरक्षा अर्थात् वेदके शब्द लोकके शब्दसों विलक्षण हैं स्वरवर्णनकूँ जैसेंके तैसें बनेंराखने जो याप्रकारकी रक्षा नाहिं कीनीजाय तो पंडितलोगभी "भद्रंकर्णेभिः" याठिकाने "भद्रं कर्णैः" ऐसो पाठ करदेंगे तासों अन्यथा पाठ न होय यालियें वेदकी स्वरूपसों रक्षा करी॥ ऐसेही वेदके अर्थकीभी रक्षा करनी अर्थकी रक्षा न होयगी तो यज्ञपदार्थकूँभी लोग नाहिंजानेंगे जैसे अभी यज्ञकूँ नां हैं जानेंहैं वे लोग यजधातुको दान अर्थमात्र ग्रहण करके दानकूँही यज्ञ मानेंहैं ऐसेंही वेदके अनुष्ठानकीभी रक्षा करनीयोग्य है अन्यथा कल्पसूत्रकरकें कर्म-

की रक्षा न करी जायगी तो यज्ञादिकनको अनुष्ठान नहिं होय-सकेंगो तासों दो दो अंगनको एक एकके रक्षामें उपयोग है॥७२॥ शिक्षा छन्दोग्रंथ वेदके स्वरूपकी रक्षा करवेवारे हैं अर्थात् स्वर अक्षरनकूं यथार्थ राखवेवारे हैं। व्याकरण निरुक्त दोनों शास्त्र वेदके अर्थकी रक्षा करवेवारेहैं। ज्योतिष कल्पसूत्र वेदके अनुष्ठान-की रक्षा करवेवारेहैं ॥ ७३ ॥

**ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः ॥ तथैवार्थो वेदराशेः कर्त्तव्यो नान्यथा क्वचित् ॥ ७४ ॥ साक्षाद्धर्मप्रतीतिस्तु कल्पः स्मृतिषु चिन्तितः ॥ दर्शादिकालनिर्धारो ज्योतिःशास्त्रफलं स्मृतम् ॥ ७५ ॥**

तत्त्वदीपप्रकाशः ।

कथं व्याकरणस्यार्थोपयोग इत्याशंक्याह ॥ **ये धातुशब्दा इति** ॥ धातुपारायणे नामपारायणे च यत्रार्थे "यज—देवपूजासङ्गतिकरणदानेषु" गौः ग्मा ज्मा क्ष्मेत्यादिप्रकरणेन पृथिव्या इति प्रकीर्तितास्तथैव वेदार्थो निर्णेतव्यः॥यथा कैश्चिदुक्तं "विष्णोःपदे परमे मध्व उत्सः"उत्सशब्देन कूपवाचकेन उत्सुको व्याख्यातः ॥ तथा व्याख्याने स्वार्थात्प्रच्यवेतातस्तन्निषेधार्थमाह ॥ **कर्तव्यो नान्यथा क्वचिदिति** ॥७४॥ ननु कल्पसूत्रे साङ्कर्यमङ्गत्वं स्मृतित्वञ्चेत्याशंक्याह ॥ **साक्षादिति** ॥ तत्र धर्मः प्रतीयत इति वेदत्वं स्मृतित्वञ्चोक्तं वस्तुतस्त्वङ्गत्वमेव ॥ ज्योतिष उपयोगमाह ॥ **दर्शादीति** ॥ ७५ ॥

आवरणभंगः ।

॥ कथमित्यादि ॥ ॥ व्याकरणस्य पदसाधुताज्ञापनरूपमेव प्रयोजनं स्फुटम्प्रतीयते इति कथमित्यर्थः ॥ ॥ नामपारायणे इति ॥ ॥ निघण्टुरूपे

तत्त्वदीपप्रकाशः।

निरुक्तस्य विवरणरूपस्य कथमङ्गत्वमित्याशंक्याह ॥ पदनिर्वचनादिति॥ निघण्टौ यद्यपि कोशवच्छब्दा उक्तास्तथापि निर्वचनाभावान्नाङ्गत्वम्॥ विवृतित्वेऽपि निर्वचनादेव निरुक्तस्याङ्गत्वं व्याकरणापेक्षया तस्याल्पो विषयः ॥७६॥ यद्यपि बहूनि व्याकरणानि सन्ति तथापि पाणिनीयमेवाङ्गम् ॥ प्रातिशाख्यन्तु प्रतिशाखं भिन्नमिति न साधारणमङ्गं यद्यपि कल्पेप्ययमन्दोषः सम्भवति तथापि कल्पत्वेनाङ्गता ॥ प्रातिशाख्ये तु क्वापि नार्थज्ञानम्भवति ॥ अतः शब्दोपयोगित्वात्पाणिनीयान्तर्भावेनैवाङ्गता ॥ ७७ ॥

आवरणभंगः।

इत्याहेति ॥ इति हेतोरङ्गत्वप्रयोजकान्निरुक्तस्वरूपमाहेत्यर्थः । निरुक्तञ्च यास्ककृतं "समाम्नायः समाम्नातः" इत्यादित्रयोदशाध्यायात्मकम् । तत्रच नामाख्यातनिपातोपसर्गरूपश्चतुर्विधम्पदजातान्निरूप्य मंत्राणामर्थो दर्शितः । अन्यथा "सृण्येव जर्भरी तुर्भरी पर्फरी" इत्यादिदुरूहपदानामर्थो न ज्ञायेतेति तदावश्यकत्वान्निघण्टुस्तु निरुक्तशेषत्वेनोपयुक्त इत्याशयेनाहुः ॥ निघण्टावित्यादि ॥ ७६॥ व्याकरणानामनेकत्वात्किञ्चिदाहुः ॥ ॥ यद्यपिबहूनीति ॥ ब्राह्मरौद्रचान्द्रादीनि कौमारकालापसारस्वतादीनि च ॥ ॥ तथापीति ॥ ब्राह्मादीनां च लोकमात्रोपयोगित्वादित्यर्थः ॥ ७७ ॥

व्रजभाषाटीका।

तहाँ निरुक्तमें मन्त्रकी व्याख्या लिखीहै वाकूँ अङ्गपणो कैसें सम्भवसकें यह शङ्का नाहिंकरनी निघण्टुमें कोशके समान शब्द कहेहैं परन्तु उनकी व्युत्पत्ति नहिं करी तासों निघंटु वेदको अंगनहिंहै निरुक्तकोही अंगहै ॥ निरुक्तमें तो शब्दनको निर्वचन ( व्युत्पत्ति ) कीनी है तासों वेदव्याख्यारूपत्व है तथापि अंगत्व है निरुक्त नहिंहोय तो " सृण्येव जर्भरी तुर्भरी पर्फरी " इत्यादिपदनके अर्थ नहिंजानेंजावें तथापि व्याकरणकी अपेक्षा निरुक्तको संचार वेदमें अल्पहै ॥ ७६ ॥ ऐसेही व्याकरण बहुत हैं-ति-

नमें पाणिनीयव्याकरणही वेदको अंग है प्रातिशाख्य वेदभाष्य तो शाखा २ प्रति न्यारो २ है तासों साधारणरीतिसों सर्ववेदको अङ्ग नहिं है शब्दको उपयोगी है तासों व्याकरणमें याको अन्तर्भाव है॥ लक्षणग्रंथनको प्रातिशाख्यमें अन्तर्भाव है प्रातिशाख्यको व्याकरणमें अन्तर्भाव है ॥ ७७ ॥

**अनिङ्ग्यादिप्रातिशाख्ये विशेद्व्याकरणे तु तत् ॥ छन्दसः पाठहेतुत्वं शब्दज्ञानोपयोगतः ॥ ७८ ॥ आरोग्ये धर्मसिद्धिः स्यात् रक्षा च धनुषो भवेत् ॥ उद्वेगहानिर्गान्धर्वे स्थापत्यं च स्रुगादिषु ॥ ७९ ॥**

तत्त्वदीपप्रकाशः ।

तथा लक्षणानान्तेषान्मङ्गे प्रवेशप्रकारमाह ॥ अनिङ्ग्यादीति ॥ सर्वाणि लक्षणानि प्रातिशाख्ये प्रविशन्ति ॥ प्रातिशाख्यं व्याकरणे ॥ छन्दसोऽनुष्ठानेप्युपयोगो दृश्यत इति कथम्पाठहेतुत्वन्तत्राह ॥ **शब्दज्ञानोपयोगत इति** ॥ अनुष्ठानेऽपि शब्दधर्मत्वेनैव तज्ज्ञानमुपयुज्यते नान्यथेत्यर्थः॥ ७८॥ उपवेदानाम्प्रयोजनमाह ॥ **आरोग्य इति**॥ ऋग्वेदस्यायुर्वेद उपवेदः। तस्यारोग्यम्फलन्तेन धर्मः सिद्ध्यतीत्यारोग्य द्वारा धर्मोपयोगः। एवं रक्षाद्वारा धनुर्वेदस्य। उद्वेगहानिद्वारा गान्धर्वस्य ॥ स्थापत्यस्य तु स्रुगादिषूपयोगः ॥ एवमष्टादशविद्यानान्धर्मोपयोग उक्तः॥ अर्थशास्त्रस्यार्थद्वारैव तदुपयोगः॥ तच्च न्याये प्रविशति॥ तथा वात्स्यायनादीनाङ्कामोपयोगः स च दृष्टान्तो मोक्षसुखे ॥ अतो नाष्टादशविद्यासु निरूपितः ॥ तच्छेषत्वमेव काव्यालङ्कारनाटकादीनाम् ॥ यथाग्निमथनं योगे दृष्टान्तस्तथा मोक्षे काम इति सर्वमनवद्यम् ॥ ७९ ॥

आवरणभंगः ।

लक्षणानामिति ॥ ग्रन्थविशेषाणाम् ॥ ॥अनिङ्ग्यादीति इङ्ग्यं सावग्रहपदम् । न इङ्ग्यमनिङ्ग्यन्निरवग्रहमित्यादीनीत्यर्थः ॥ अवग्रहश्च मात्राकालविशेषः संहिताविच्छेदरूपः ॥ यथा "रत्नधातमम्" इत्यादौ उपयोग इति । कृतस्यापि कर्मणः छन्दो ज्ञानाभावे वैफल्यस्मारणात्साम्नां शरलेशप्रसङ्ग-वारणाच्च तथेत्यर्थः । शरलेशप्रसङ्गश्च नवमस्य द्वितीये विचारितः । तत्र हि साम त्र्यर्चे गेयमिति वाक्याद्यत्तिसृषु ऋक्षु गेयन्तत्किं विषमछन्दस्कासु वा समच्छन्दस्कासु वा यथेच्छङ्गेयमुत समास्वेवेति सन्देहे । यथेच्छङ्गेयान्नियामकस्या-भावादिति पूर्वपक्षे समास्वेवेति सिद्धान्तितम् । यदि अधिकच्छन्दस्कायामभ्युत्प-न्नं सामान्यूनच्छन्दस्कयोरुत्तरयोर्गेयन्तदा सामभागेनकर्पूर्तेरवशिष्टः सामभागः आश्रयाभावाद्विंसितः स्यात् । यदि सामयोनेरधिकच्छन्दस्कयोर्गायेत्तदा साम्नो-ल्पत्वादवशिष्ट ऋक्भागः सामहीनःस्यादसमानास्वेवङ्गेयमिति । अतोऽत्र छन्दस्त-द्वारण उपयोगात्पाठोपयोगोऽनुष्ठाने शब्दधर्मत्वेनैव च स इति ॥ ७८ ॥ ॥ आयु-र्वेद इति ॥ ब्रह्मप्राजापत्याश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेश्यभोजभेडादिप्रणी-तं वैद्यकशास्त्रमित्यर्थः ॥ ॥ धनुर्वेदस्येति ॥ धनुर्वेदश्च महादेवप्रणीतस्ततो विश्वामित्रप्रणीतः पादचतुष्टयात्मकः । तत्र प्रथमो दीक्षापादः । तस्मिन्धनुर्लक्षण-मधिकारिलक्षणञ्च कृतम् । धनुः शब्दश्चापे रूढोपि चतुर्विधायुधेषु वर्तते । चतु-र्विधत्वञ्च । मुक्तममुक्तम्मुक्तामुक्तं यन्त्रमुक्तञ्चेति भेदात् । मुक्तञ्चक्रादि । अमुक्त-खड्गादि । मुक्तामुक्तं शल्यावान्तरभेदादि । यन्त्रमुक्तं शरादि । तत्र मुक्तं अस्त्रमि-त्युच्यते । अमुक्तं शस्त्रमित्युच्यते । अस्त्रञ्च ब्राह्मवैष्णवादिभेदेनानेकविधम् । साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारो हस्त्यश्वरथारूढपदाती-नान्ते सर्वे दीक्षाभिषेकशकुनमङ्गलकरणसहिता निरूपिताः ॥ द्वितीये संग्रह-पादे गुरुसम्प्रदायसिद्धानामस्त्रविशेषाणामभ्यासो निरूपितः ॥ तृतीये पादे सिद्धिनामके मन्त्रदेवतासिद्धिकरणं निरूपितश्चतुर्थे प्रयोगपादे देवतार्चनाभ्या-सादिभिः सिद्धानामस्त्रविशेषाणाम्प्रयोगो निरूपितः ॥ सचोपवेदो रक्षोपयोगीति ॥ तथा गान्धर्वस्येति ॥ स च भरतेन प्रणीतः । स्थापत्यञ्च विश्वकर्मप्रणीतम् । अतःस्थापत्यस्योपवेदत्वं श्रीभागवतानुसारेणोक्तम् ॥ ॥ अष्टादशविद्यानामिति ॥ "पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानान्धर्मस्य च चतुर्दश" इति याज्ञवल्क्योक्तानामुपवेदसाहित्येऽष्टादशत्वम् ॥ अत्र फलकथ-नेनाङ्गोपवेदप्रमेयबलमुक्तप्रायम् । ननु गान्धर्वं चार्थशास्त्रकमिति भविष्यवाक्ये अर्थशास्त्रस्योपवेदत्वमुक्तन्तस्य का गतिरित्यतआहुः ॥ ॥ अर्थशास्त्रस्येत्यादि ॥

तथा च स्थापत्यं साक्षादुपयुक्तमिदन्तु तद्द्वारकमतस्तदेव साध्विति भावः ॥ अर्थशास्त्रञ्च गजतुरगमण्यादिपरीक्षणशास्त्रं पालकाप्ययशालिहोत्रागस्त्यादिज्ञेयम् । तस्य कुत्र निवेश इत्यत आहुः ॥ तच्च न्याये इति न्यायस्वरूपमग्रे वाच्यम् ॥ अन्यान्यपि कामशास्त्रादीनि सन्तीति कथमष्टादशैव विद्या इत्यत आहुः ॥ ॥ तथा वात्स्यायनादीनामिति ॥ ॥ आदिपदेन पाकादिशास्त्राणि कामसूत्राङ्गविद्यारूपाणि ज्ञेयानि ॥ ॥ निरूपित इति ॥ कामशास्त्रादिरिति शेषः ॥ तथाच धर्मानुपयोगादष्टादशविद्यासु तानि न निरूपितानीति दृष्टान्तशेषत्वेन कया चित्प्रनाड्या मुख्यफले आगमवदुपयोग इतिभावः ॥ ७९ ॥

ब्रजभाषाटीका ।

छन्दोग्रंथको अनुष्ठानमेंभी उपयोग है क्योंकि जाको छन्द नहिंजानों वाके अनुष्ठानकोभी फल नहिंहोय तथापि शब्दद्वाराही अनुष्ठानमें उपयोग है तासों शब्दरक्षाही छन्दोग्रंथको प्रयोजनहै ॥ ७८ ॥ उपवेदनको प्रयोजन दिखावें हैं; ( आरोग्य इत्यादि ) ऋग्वेदको उपवेद जो ( आयुर्वेद ) वैद्यशास्त्र है वाको आरोग्य फल है । नैरोग्यसों धर्म सिद्ध होयहै तासों रोगनिवृत्तिद्वारा धर्ममें वैद्यशास्त्रको उपयोग है धर्ममें धनुर्वेदको रक्षाद्वारा उपयोग है ॥ ७९ ॥

काव्यादीनाममसत्यत्वान्नोपयोगःकथञ्चन॥धर्मे कर्त्तुः क्वचित्कीर्तिर्नैपुण्यं पाठतः क्वचित् ॥८०॥
रामायणमनन्तं हि पुराणमिव सम्मतम्॥
व्यासःपूर्वमनेकोक्तो वाल्मीकिःसाम्प्रतङ्किल॥
समाधिभाषया प्राह प्रमाणं सर्वथैव तत् ॥८१॥

तत्त्वदीपप्रकाशः ।

काव्यादीनान्धर्मे नोपयोग इत्याह ॥ काव्यादीनामिति ॥ सत्यत्वमुत्प्रेक्षाजन्यत्वात् ॥ कीर्तिर्धर्मवत्फलसाधिकेति फलांशे काव्यादीनामुपयोगमाह ॥ कर्त्तुः क्वचित्कीर्तिरिति ॥ नैपुण्यमीतिशास्त्रे

युज्यते तच्च पाठात् ॥ रामायणञ्च काव्यमिति सर्गबन्धनात् ॥८०॥ न तस्य धर्मोपयोगो भविष्यतीत्याशंक्याह॥रामायणमिति॥ “चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ॥ एकैकमक्षरं पुंसां महापातकनाशनम् ” इति वाक्याद्धर्मजनकमेव अनन्तमपरिमितम् ॥ प्रतिकल्पम्प्रतियुगं रामावतारा भवन्ति तत्रान्यपदार्थेष्विव रामचरित्रस्य स्वरूपन्न भवति उत्तरेण पूर्वोपचरितार्थरूपमतः पूर्वपूर्वरामकथाया उत्तरया सह कथनादनन्तत्वम् ॥ क्वचित्पुनरुक्तेपि धर्मो भवतीति हिशब्देनाह । आख्यायिकायाः प्रामाण्यार्थम्पुराणमिव सताम्मतम् ॥ अस्य व्यासो विस्तारः पूर्वमनेकैरुक्तः साम्प्रतं वाल्मीकिः समासावुपलभ्य सर्वमुक्तवानतः सुतरामिदानीन्तनम्प्रमाणम् ॥८१॥

आवरणभंगः ।

किञ्चिदाशंक्य परिहरन्ति ॥ ॥काव्येत्यादि ॥ तर्हि [illegible] आहुः ॥ ॥ कीर्त्तीत्यादि ॥ तथाच जघन्यफलेस्वर्गादिके तदुपयोग इतिभावः ॥८०॥ किञ्चिदाशंक्य परिहरन्ति ॥ ॥ रामायणमित्यादि ॥ प्रतियुगमिति ॥ वैवस्वतमन्वन्तरीयाष्टाविंशतिमत्रेतायामित्यर्थः ॥ एवम्प्रमेयम्प्रमाणस्वरूपञ्चोक्तम् ॥ साधनम्फलञ्च चरितंरघुनाथस्येति श्लोक एव स्फुटम् ॥ ॥ अनेकैरिति आपस्तम्बप्रभृतिभिः । आपस्तंबोक्तस्य रामायणस्य दक्षिणे प्रसिद्धत्वात् ॥ ८१ ॥

ब्रजभाषाटीका ।

गान्धर्ववेदको धर्ममें उपयोग है [illegible] अर्थात् खातीके कामको स्रुग स्रुवा स्तम्भ [illegible] धर्ममें उपयोग है तासों परम्पराधर्मको उपयोगी है या प्रकार पुराणे न्याये मीमांसा धर्मशास्त्र अङ्ग ६ वेद ४ उपवेद ४ इन अष्टादशविद्याको उपयोग है जा शास्त्रमें हाथी घोडा मणिआदिके लक्षण हैं वा अर्थशास्त्रको अर्थसिद्धिद्वारा धर्ममें उपयोग है वा अर्थशास्त्रको न्यायशास्त्रमें अन्तर्भाव है वात्स्यायनादि[illegible]को कामभोगमें उपयोग है कामसुख है सो मोक्ष[illegible]खका दृष्टान्त है । जैसें स्वर्ग[illegible]खको दृष्टा-

न्त राज्यसुख है। यद्यपि राज्यसुखसों क्रोडगुण अधिक स्वर्गसुख है तथापि अदृष्ट अर्थात् विनादेखें स्वर्गसुखमें प्रवृत्ति होयवेके- लिये राज्यसुखको दृष्टान्त दियोजायहै तैसें ही विनादेखें अनन्त अचल मोक्षसुखमें प्रवृत्तिकरायवेकेलिये अल्पनाशवाले कामसु- खको दृष्टान्त है जाकरकें तुच्छकामसुखकों छोडके अनन्तमोक्ष- सुखकी प्राप्तिकेलियें प्रवृत्त होय तासों अष्टादशविद्यामें कामशा- स्त्रकी गणना नहिं है काव्यनाटकादिक कामशास्त्रकेही अङ्ग हैं ॥ काव्य नाटक अलङ्कारादिकनको धर्ममें उपयोग नहिं है क्योंकि मनकी उत्प्रेक्षाकरकें बनायेजावे हैं ॥ ८० ॥ परन्तु काव्यादिक- नसों काव्य बनावेवारेकी कीर्ति होवे है और जैसे धर्मसों स्वर्ग- प्राप्तहोवेहै तैसे मनुष्यकों कीर्तिभी स्वर्गादिफलकी देवेवारी है तासों स्वर्गादिफलप्राप्तिमें काव्यादिकोभी उपयोग है मोक्षमें उप- योग नहिंहै ॥ ये अच्छे काव्यादि बनायवेको फल है काव्यादि- कनके पाठ करवेसों तो निपुणता होयहै निपुणताको नीतिशा- स्त्रमें उपयोग है तहाँ काव्यादिकमेंही रामायण है तासों रामाय- णकोभी धर्ममें उपयोग नहिं होयगो ऐसी शङ्का नहिंकरनी क्योंकी रामायण अनन्त हैं आपस्तम्बादिऋषिननेंभी बनाई है दाक्षिणमें प्रसिद्ध है. श्रीमान् राजाधिराज चक्रवर्तिचूडामणि श्री- रघुनाथजीके चरित्रको सौक्रोडश्लोकमें विस्तार है याको एक एक अक्षर महापातकको नाश करैहै तासों धर्मको उत्पन्न रवे- वारो है. प्रतिकल्पमें प्रतियुगमें रामावतार होवेहै और पदार्थके समान श्रीरामचरित्रको स्वरूप नहिं है तासों पहिलीको चरित्र आगेके कल्पके चरित्रमें गतार्थ नहिं होयसकैहै तासों आगेके कल्पकी रामचरित्रकी कथाके साथ पीछेके कल्पकी कथाभी वर्णन कीनीहै तासों अनन्त है वर्णन करेभयेकोभी फिर वर्णन कहीं

कहीं धर्म सिद्धिके लिये कियोहै तासों याकूँ पुराणके समान प्रमाण माननो ॥ रामचरित्रको विस्तार पहिली बहुत ऋषिननें कियोहै परन्तु अभी वाल्मीकि ऋषिनें समाधिमें देखकें रामायण कहीहै तासों ये रामायण प्रमाण है और ऋषिननें तो सुनकरके रामचरित्रको वर्णन कियोहै तासों वाल्मीकि रामायणमें मिलती-भई और रामायणकी कथा प्रमाण है ॥ ८१ ॥

**वासिष्ठादेस्तु संवादात्प्रामाण्यं नान्यथा क्वचित् ॥ न्यायस्तु नीतिशास्त्रं हि तर्को मीमांसया युतः ॥ ८२ ॥ मोहार्थान्यन्यशास्त्राणि बुद्धे कृष्णे तदिच्छया ॥ देवांशैः कल्पितान्येव तदुक्तं सर्वथा मृषा ॥ ८३ ॥ इति प्रमाणप्रकरणम् ॥**

तत्त्वदीपप्रकाशः ।

वासिष्ठरामायणादेर्न तथात्वमित्याह ॥ वासिष्ठादेरिति ॥ संवादः प्रमाणेन ॥ पुराणन्याय इत्यत्र साम्प्रतमक्षपादविरचितन्यायोपयोगि भविष्यतीत्याशंक्य समानशब्दत्वमेव तत्रेत्याह ॥ न्यायस्त्विति ॥ पुराणन्यायेत्यत्र नीतिशास्त्रमेव न्यायशब्देनोच्यते न तु लोके प्रसिद्धम् ॥ 'यस्तर्केणानुसन्धत्त' इत्यत्र तर्कशब्दो वेदानुकूलतर्कवाचकमीमांसापरः ॥ ८२ ॥ अन्यानि काणादादिशास्त्राणि मोहार्थान्येव अतस्तन्नादरणीयमित्यर्थः ॥ ८३ ॥ इतिप्रमाणप्रकरणम् ॥

आवरणभंगः ।

संवादः ॥ प्रमाणेनेति । वाल्मीकिना स्वयं समाधावनुभूयोक्तत्वादन्यैस्तु श्रुत्वोक्तत्वेन मध्ये परंपरापाते दोषस्यापि सम्भवात् ॥ ॥ प्रमाणेन ॥ वाल्मीकीयेन संवाद एव वासिष्ठादेः प्रामाण्यप्रयोजक इत्यर्थः ॥ अर्थशास्त्रस्य न्याये प्रवेश उक्तः । न्यायश्चतुर्दशविद्यासु निरूपित इति तन्निश्चेतुमाहुः ॥ पुराणेत्यादि ॥ नीतिशास्त्रमिति ब्राह्मबार्हस्पत्यादिरूपम्भारते राजधर्मे प्रसिद्धमिति ॥ आग्नेये न्यायसार-

म्प्रवक्ष्यामीति प्रतिज्ञाय नीतिशास्त्रसारस्यैव कथनात्। मात्स्यतृतीयाध्याये "मीमांसा न्यायविद्या च प्रमाणाष्टकसंयुता" इतिवाक्येप्यष्टप्रमाणयोगलिङ्गाच्च नाक्षपादप्रणीतम्पुराणंन्यायेत्यत्र विवक्षितमित्यर्थः ॥ एवमेव पुराणानुक्रमणाध्यायेपि 'पुराणंन्यायविस्तर' इत्यत्रापि ज्ञेयम्। प्रमाणाष्टकन्तु प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसम्भवैतिह्यभेदेन ज्ञेयम् ॥ ॥ मीमांसापर इति ॥ निबन्धेषु सर्वत्रमीमांसयैव धर्मनिर्णयदर्शनात् ॥ तर्कविद्यावाचकस्यान्वीक्षिकीपदस्य "विद्यामान्वीक्षिकीं हित्वा" इत्यादौ तथा दर्शनाच्चेत्यर्थः ॥ केचित्तु। "आअन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान्" इति प्रथमस्कन्धवाक्याद्दत्तात्रेयोक्तयोगपरमान्वीक्षिकीपदं मार्कण्डेयेऽलर्कस्य योगोपदेशदर्शनादित्याहुः ॥ किञ्च। मनौ आन्वीक्षिकीञ्चात्मविद्यञ्च इति वाक्यान्मिताक्षरायां स्वरन्ध्रगोप्रान्वीक्षिक्यामित्यत्रात्मविद्यापरत्वेन व्याख्यानाच्चोत्तरमीमांसापि तद्वाच्या ॥ कश्चित्तु। प्रतिपदमनुपदंछन्दो भाषाधर्मो मीमांसान्यायस्तर्क इत्युपाङ्गानीतिचरणव्यूहे वेदोपाङ्गनिरूपणे यौ न्यायतर्कावुक्तौ तावक्षपादकणादप्रणीतशास्त्रपरौ। तयोरप्यास्तिकशास्त्रत्वात्। नैषा तर्केणेत्यादौ निन्दा तु अधर्मस्यैव निकृष्टत्वादिति वदति। तदापि श्रुतिविरुद्धांशत्यागस्य तत्रावश्यकत्वायस्तर्केणानुसन्धत्त इत्यत्र तर्कपदम्मीमांसापरमेव सेत्स्यति। किञ्च निन्दाप्रयोजको निष्कर्षोऽपि क इति विचार्यम्। स यदि पुराणोक्तमोहकत्वरूपस्तदा तु धर्मस्थानत्वाभावान्न विद्यासु निवेष्टुमर्हति। यदि लोकतत्त्वविचारणरूपस्तदापि तथा धर्मस्य चोदनालक्षणस्यालौकिकत्वादिति। वस्तुतस्तूपाङ्गोक्तौ संख्याया अभावान्मीमांसा[illegible]धिकरणात्मकस्तर्क इत्येवार्थः। एवञ्चोपाङ्गानामपि षट्त्वादङ्गैः समानैव संख्या भवतीत्येतदभिसन्धायोक्तं मीमांसापर इति ॥ ८२ ॥ नन्वक्षपादीयं न्यायत्वेन कुतो न गृह्यत इत्यत आहुः ॥ ॥ अन्यानीत्यादि ॥ तदुक्तम्पाद्मोत्तरखण्डीयगुणत्रयविवरणाध्याये पार्वतीं प्रति शङ्करेण। तथाहि। "शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्। येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि। प्रथमं हि मयैवोक्तं शैवपाशुपतादिकम्। मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानि ततःपरम्। कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकम्महत्। गौतमेन तथा न्यायं सांख्यन्तु कपिलेन वै। धिषणेन तु सम्प्रोक्तञ्चार्वाकमतिगर्हितम्। दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा। बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम्। मायावादमसच्छास्त्रं प्रच्छन्नम्बौद्धमुच्यते। मयैव कथितन्देवि कलौ ब्राह्मणरूपिणा॥" इत्याद्युक्त्वा "मयैव वक्ष्यते देवि जगतान्नाशकारणात्। द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः॥ निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्॥" इति ॥

॥ पराशरोपपुराणे च ॥ ॥ अक्षपादप्रणीते च काणादे सांख्ययोगयोः ॥ त्याज्यः श्रुतिविरुद्धः सः श्रुत्यैकशरणैर्नृभिः ॥ जैमिनीये च वैयासे न विरोधोऽस्ति कश्चनेति ॥ जैमिनीयपदम्पूर्वार्द्धेऽन्वेति ॥ ॥ पाद्मस्वारस्यात् ॥ ॥ हयशीर्षपञ्चरात्रे च । "कपिलश्चाक्षपादश्च नास्तिको नग्न एव च॥ अथयरतामसा ह्येते शास्त्रमेषांविमोहनम् " इति ॥ एतेन एतद्विरुद्धं यत्सर्वं न तन्मानन्द्वचनेति पूर्वप्रकरणोक्तं निर्णीतं ज्ञेयम् ॥ ८३ ॥ इति प्रमाणप्रकरणम् ॥

व्रजभाषाटीका ।

अठारह विद्यामें अक्षपादको बनायो न्यायशास्त्र नहिँ है किन्तु बृहस्पति आदिको बनायो नीतिशास्त्रही न्याय शास्त्रके नामसों ग्रहण करनों वाहीकी अष्टादश विद्यामें गणना है " यस्तर्केणानुसन्धत्ते " इत्यादि स्थलमें तर्कशास्त्र करकें विचार करनो लिख्यो है तहाँ तर्कशास्त्रकरके मीमांसाशास्त्र लेनों ॥ ८२ ॥ और काणाद आदिकनके बनायेभये सब शास्त्र जीवकी बुद्धिकूँ मोह करायवेकेलिये हैं क्योंकि कृष्णकी इच्छा करके देवांश प्रकट होयके उनने शास्त्र बनाये हैं वे सब शास्त्र मिथ्या हैं पद्मपुराणमें गुणविवरणाध्यायमें शिवनें आज्ञा करी है । " शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् ॥ येषां श्रवणमात्रेण पतनं ज्ञानिनामपि ॥ काणादेन तु यत्प्रोक्तं शास्त्रं वैशेषिकं बृहत् ॥ गौत्तमेन तथा न्यायं सांख्यन्तु कपिलेन वै ॥ धिषणेन तु सम्प्रोक्तञ्चार्वाकमतिगर्हितम् ॥ " इत्यादि प्रमाण आवरणभङ्गमें लिखे हैं ॥ ८३ ॥ इति प्रमाणप्रकरणम् ॥

प्रमेयं हरिरेवैकः सगुणो निर्गुणश्च सः ॥ गुणाः कार्यन्तथा धर्मः क्रियोतपत्त्यादयश्च सः॥८४॥ बुद्धिसौकर्यसिद्ध्यर्थं त्रिरूपेणोपवर्ण्यते॥कारणेन च कार्येण स्वरूपेण विशेषतः ॥ ८५ ॥

तत्त्वदीपप्रकाशः ।

एवम्प्रमाणन्निरूप्य तत्सन्देहान्निराकृत्य प्रमेयन्निरूपयति ॥ प्रमेयमिति ॥ यथा शब्द एव प्रमाणन्तत्रापि वेदादिभावापन्नं तथा हरिरेव प्रमेयं सर्वभावापन्नमिति॥ सर्वमेव गणयति॥सगुणइत्यादिना॥ क्रिया उत्पत्त्यादयश्च ॥ स हरिरेव ॥ ८४ ॥ एवमुक्ते सम्यक्ज्ञानं न भवतीति विशेषं वक्तुमाह ॥ बुद्धीति ॥ यथा बुद्धिः सर्वं प्रमेयजातं क्रोडीकरोति तदर्थं त्रिरूपेणोपवर्ण्यते ॥ तदैव तरतमभावो भवति॥८५॥

आवरणभंगः ।

एवम्प्रमाणप्रकरणे प्रासङ्गिकसहितम्प्रमाणानुरोधि प्रमेयं निर्णीतं तेन पूर्वप्रकरणे यज्ञरूपो हरिरिति विचारितः । अतःपरं ब्रह्मतनुःपर इत्यादि पादोनश्लोकद्वयोक्तं विचारयितुम्प्रमेयप्रकरणमारभन्ते ॥ तत्र पुराणस्योपबृंहणत्वात्तदुक्तप्रमेयपूर्वकमेव विचारयन्ति ॥ एवमित्यादि ॥ उक्तप्रकारेण प्रमेयबलनिरूपणार्थं द्विविधप्रमेयमध्ये प्रमाणानुरोधि प्रमेयन्निरूपयितुं मंगलकारिकाव्यतिरिक्ताभिर्नवतिभिः कारिकाभिर्वेदादिरूपम्प्रमाणन्तत्तत्स्वरूपं तत्प्रमेयं तदुक्तसाधनतत्फलैर्निर्णीय तेन तत्स्वरूपादिविषयान्सन्देहान्निराकृत्य स्वतन्त्रप्रमेयस्यापि बलनिरूपणार्थन्तत्प्राधान्येन प्रमेयन्निरूपयतीत्यर्थः ॥ ननु कथं हरिरेव प्रमेयञ्जगतोऽपि विद्यमानत्वादित्यत आहुः ॥ ॥ यथेत्यादि ॥ ॥ वेदादिभावापन्नमिति सामान्येन पुंसकम् ॥ ॥ उत्पत्त्यादय इति । उत्पत्तिस्थितिवृद्धिविपरिणामापक्षयनाशाख्याः षड्भावविकाराः । अत्र मूले सगुणनिर्गुणपदाभ्यामपरम्परञ्च ब्रह्म गुणपदेन सत्वरजस्तमांसि मायाप्रकृत्यादयः कार्यपदेन महदादिपरमा एवन्तन्द्रव्यन्धर्मपदेन जातिगुणविशेषसमवायाद्याः क्रियापदेन लौकिकवैदिककर्मणी उत्पत्त्यादय इत्यादिपदेनाभावाश्च संगृहीतास्तेन शास्त्रान्तरोक्तानपि पदार्थान् सर्वान्भगवत्येवान्तर्भाव्य शुद्धाद्वैतम्बोधितम् । तथा च यद्यपि जगद्वर्तते तथापि तन्न जगत्त्वेन रूपेण प्रमेयङ्किन्तु हरित्वेन रूपेण । जगत्त्वेन तु लौकिकज्ञानविषयत्वान्मेयमेवेत्यर्थः ॥ ८४ ॥ मूले विशेषत इति व्यावर्तकधर्मादित्यर्थः । अनेनैव प्रकारेण क्रोडीकरणस्यावश्यकत्वायाहुः ॥ ॥ तदैवेत्यादि॥ यदैवन्त्रिरूपेण ज्ञायते तदैव पुराणोपबृंहितः प्रजायेयेतीच्छया कृतस्तरतमभावः भवति स्फुटो बुद्धौ भवतीत्यर्थः ॥ एतेन ब्रह्मवादे सर्वस्य भगवद्रूपत्वेऽपि भजनं फलमूलरूप एव कर्तव्यमिति सेत्स्यतीति सूचितम् ॥ ८५ ॥

व्रजभाषाटीका।

जैसे शब्द प्रमाण हैं तामें भी वेदादिभावकूँ आप्तभये शब्दही प्रमाण हैं ऐसेही सर्व जगद्भावकूँ प्राप्त होयरहे ऐसे हरि भगवान् ही एक प्रमेय है सगुण अपररूप, निर्गुण पर-रूप, तथा सत्वगुण रजोगुण तमोगुणरूप, तथा महत्तत्वसों लेकें परमाणुपर्यन्त कार्यरूप, तथा जातिगुणविशेषसम-वायादि धर्म रूप लौकिक वैदिक क्रियारूप तथा उत्पन्न होनो बढनो परिणामकों प्राप्तहोनों क्षीणहोनों नाशकूँ प्राप्त होनों इत्यादि ६ भावरूप, एक भगवान्ही है यासों और शास्त्रमें कहे जे पदार्थ हैं उन सबनकोभी भगवान्मेंही अन्तर्भाव है तासों शुद्धाद्वैत मत सिद्धभयो ॥ ८४ ॥ भगवान्ही सर्वरूप है ऐसे कहवेसों अच्छे प्रकार ज्ञान नहिं होय है तासों बुद्धिमें जमाय-वेकेलिये तीनरूपकरकें भगवान्को वर्णन करें है ॥ एक तो मूल स्वरूप, द्वितीय कारणरूप, तृतीय कार्यरूप इन तीनरूपन करकें भगवान्कूँ जानवेसोंही पुराणमें जाको विस्तार कियो ऐसो जो वेदोक्त बहुतरूप करकें प्रगट होयवेकी इच्छाको कियोभयो उच्च-नीचभाव है वह हृदयमें जमजावें है यासों ब्रह्मवादमें सब भग-वद्रूप है तथापि भजन मूलस्वरूपकोही करनों यह बात सिद्ध-भई ॥ ८५ ॥

अष्टाविंशतिभेदास्तु कारणे तत्वभेदतः ॥
भगवत्त्वं यतस्तेषान्तस्मात्तत्वानि तानि तु ॥
॥ ८६ ॥ अण्डसृष्टेः पूर्वभावात् कारणत्वन्न चान्यथा ॥ कारणत्वन्न चैवास्ति चिदानन्दां-शयोः स्वतः ॥ ८७ ॥

तत्त्वदीपप्रकाशः ।

प्रथमेऽष्टाविंशतिभेदाः ॥ तेषां च कारणत्वात्तत्वंपदवाच्यत्वञ्च समर्थयति ॥ भगवत्त्वमिति ॥८६॥ सच्चिदानन्दभेदेषु सद्भेदा एवैते ॥ चिदानन्दयोः ॥ कारणत्वाभावात् ॥ एकस्य फलत्व मपरस्य स्वरूपत्व-मित्याह ॥ कारणत्वं न चैवास्तीति ॥ ८७ ॥

आवरणभंगः ।

प्रथम इत्यादि ॥ प्रथमे कारणे अष्टाविंशतिभेदाः । नवैकादशपञ्चत्रीण्यात्थत्व-मिति शुश्रुम इत्येकादशवाक्येनाष्टाविंशतितत्वपक्षस्य भगवत्संमतत्वात् ॥ षाड्वि-शत्यादिपक्षानामत्रैवान्तर्भावादतस्तेषान्तथात्वं समर्थयंति । सांख्योक्तादिन्नरीत्या एकेन श्लोकेनोपपादयंतीत्यर्थः ॥ भगवत्त्वमित्यादि ॥ भगवतो भावो भगवत्त्वम्भ-गवतः सर्वान्प्रति या सामान्यकारणता सेति यावत् । तृतीयस्कन्धे तथाङ्गीकारात्॥ यतस्तेषान्तथात्वन्तस्मात्तानि तत्वानि न तु सांख्यान्तरवत्पृथक्पदार्थत्वेन तत्वानि। एकादशस्य चतुर्विंशेऽध्याये कपिलादिविनिश्चितं सांख्यं वदता भगवता "आसी-ज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम् " इत्युपक्रम्य "तन्मायाफलरूपेण केवल-न्निर्विकल्पितम् ॥ वाङ्मनो गोचरं सत्यं द्विधा समभवद्बृहत् " इति ब्रह्मण एव द्विधा भवनमुक्त्वा "तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ॥ ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते"इत्यादि "प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्रितयन्त्वहम्"इति च वाक्यात् । तथा सर्गः कार-णसम्भूतिरिति निबन्धलिखितसर्गलक्षणवाक्यादेतेषु कारणत्वव्यवहार इत्यंङ-सृष्टेः पूर्वभावात् पूर्वोत्पन्नत्वात्कारणत्वम् ॥ नचाऽन्यथा न ब्रह्मवन्निरंकुश-त्वापि मृदादिवद्धटादिकारणत्वेन "मया सञ्चोदिता भावाः सर्वे संहत्यकारिणः । अण्डमुत्पादयामासुर्ममायतनमुत्तमम्"इति भगवद्वाक्यात्॥ तथाच भगवता तथा-ङ्गीकारात्कारणेऽष्टाविंशतिभेदा युक्ता एवेत्यर्थः ॥ सच्चिदानन्देत्यादि ॥ प्रपञ्च-मध्यपातिषु सच्चिदानन्देषु सजातीयत्वस्वगतत्वाभ्याञ्चिदानन्दांशत्वेन प्रसिद्ध-योर्जीवान्तर्यामिणोः समवायित्वस्य श्रुतिपुराणयोरकथनात्सदेव सौम्येदमग्र आसी-दित्युपक्रम्य तत्तेजोसृजतेत्यादिना क्रमसृष्टिकथनेऽपि क्रमसृष्टेस्तथैव बोद्ध-व्यमित्यर्थः ॥ ८६ ॥ ॥ एकस्येत्यादि ॥ ॥ ननु केवलानां जडानान्तत्वाना-ञ्चेतनं विनान्तर्यामिप्रेरणञ्च विना कार्यजननासामर्थ्यकथनात्तयोरपि निमित्तत्व-मस्तीति कथमकारणत्वमित्याकांक्षायान्तयोमध्ये एकस्य चिदंशस्य फलत्वम-

परस्याऽऽनन्दांशस्य स्वरूपत्वमतो न स्वरूपेण निमित्तत्वमिहेति हेतोः कारणतानिषेधमाहेत्यर्थः ॥ ॥ कारणत्वं न चैवास्तीति ॥ ॥ प्रपञ्चांतःपातिनोश्चिदानन्दांशयोः कारणत्वं समवायित्वञ्चाकारान्निमित्तत्वञ्च स्वतस्तत्वासंवलितेन रूपेण नास्ति ॥ "तत्सृष्ट्वा तदेवानुप्राविशत् तदनु प्रविश्य सच्चत्यचाभवत्" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" "गुहाम्प्रविष्टौ परमे परार्द्धे" इति श्रुतौ कोशानुप्रवेशोत्तरमेव नामव्याकरणादिरूपकार्यस्योक्तत्वादित्यर्थः । अत्र चिदंशस्य फलत्वं मातृवर्णिकसूत्रभाष्ये विज्ञानमयस्य विविधयागादिसाधनफलत्वेन चि तत्वात्स्वरूपावस्थानस्य मुक्तित्वाच्च ॥ आनन्दांशस्य स्वरूपत्वन्त्वन्तर्यामिणि ब्रह्मधर्माणामतिरोहितत्वाज्ज्ञातव्यम् "ज्ञानं त्वन्यतमो भावः" इति वाक्यात्पुरुषस्य चिदंशत्वं शंक्यं "मया सञ्चोदिता भावाः सर्वे संहत्यकारिणः" इत्यग्रिमवाक्ये सर्वपदेन पुरुषमन्तर्भाव्य संहत्यकारित्वोक्तेरत्रापि सन्देहस्यैव तस्य विवक्षितत्वात् ॥ अतएव तृतीये "कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्॥" इति मैत्रेयेण वीर्याधाने करणत्वमेवोक्तं नतु कर्तृत्वं केवलात्मभूतस्य स्वतो निर्वीर्यत्वादिति ॥ ८७ ॥

ब्रजभाषाटीका ।

कारणरूप भगवान्‌को स्वरूपवर्णन करें हैं कारण अष्टाविंशति भेदवालो है प्रकृति १ पुरुष २ महत्तत्व ३ अहंकार ४ रूप ५ रस ६ गन्ध ७ स्पर्श ८ शब्द ९ नेत्र १० जिह्वा ११ नासिका १२ त्वचा १३ कर्ण १४ मन १५ वाणी १६ हस्त १७ चरण १८ उपस्थ १९ गुदा २० पृथ्वी २१ जल २२ तेज २३ वायु २४ आकाश २५ सत्वगुण २६ रजोगुण २७ तमोगुण २८ ये अठ्ठाईस कारणके भेद हैं इनसोंही तत्व कहें हैं "तस्य भगवतो भावः सामान्यकारणता तत्वम्" ॥ भगवान्‌को कारणरूपकरके प्रकटहोनों तत्व कहावेहै ॥ ८६ ॥ ये तत्व ब्रह्मांडके पहिली प्रकट भये तासों कारण कहावें हैं भगवान् सच्चिदानंद हैं तत्व २८ भगवान्‌के कारणरूपके भेद हैं चित् आनंद ये दोनों कोईकेभी कारण नहिं हैं अर्थात् तत्व- सों

न्यारे होयकें कोई पदार्थकेभी निमित्तकारण अथवा समवायिकारण नहिं हैं ॥ ८७ ॥

**आनन्त्यमेव भेदानान्तयोः कार्ये तथैव च॥ अतस्तेषान्तु ये भेदा नोक्तास्ते हि विशेषतः ॥ ८८ ॥ स्वरूपे तु त्रयो भेदाः क्रियाज्ञानविभेदतः॥विशिष्टेन स्वरूपेण क्रियाज्ञानवतो हरेः८९**

तत्त्वदीपप्रकाशः ।

तयोर्भेदा अनन्तास्तेन विशेषतो न वक्तव्या इति भावः ॥ कार्येऽपि भेदानामानंत्यं घटादौ तथा दर्शनात् ॥ ननु स्वस्यासामर्थ्यादेतदुच्यते नेत्याह॥अतस्तेषामिति॥अतएव भागवतादौ तेषां संख्या नोक्ता॥८८॥ तत्त्वसहभावाच्चिदानन्दयोः स्वरूपभूतयोरपि प्रथमपक्ष एव निवेशनमुक्त्वा तृतीयभेदानाह ॥ स्वरूपेत्विति ॥ क्रियारूपे धर्म्मे प्रविष्टो धर्म्मी यज्ञ एकः तथा ज्ञानरूपे धर्मे प्रविष्टो धर्म्मी ब्रह्मद्वितीयः ॥ ज्ञानक्रियोभययुतःकृष्णस्तृतीय इति त्रयो भेदाः॥यतःक्रियाज्ञानवान् हरिः॥८९॥

आवरणभंगः ।

॥ तयोरित्यादि ॥ ॥ द्वासुपर्णेत्यादिश्रुत्या प्रतिशरीरञ्जीवान्तर्यामिप्रवेशश्रावणेन नानात्वात्तथेत्यर्थः ॥ ॥ कार्यपीत्यादि ॥ ॥ एतेनाऽनियतपदार्थवादोत्राप्यनुमत इति बोधितं श्रुतिपुराणादिषु तथाङ्गीकारादिति । मूले ॥ नोक्तास्ते हि विशेषत इत्यनेन सामान्यत उक्ता इति ज्ञापितम् । ते एवाग्रे गणभेदेन वक्तव्या इति बोध्यम् । तत्त्वगणनावैयर्थ्यशङ्काप्येतेनैव परिहृता बोध्या ॥ ८८ ॥ ॥ तत्त्वसहभावादिति ॥ ॥ तत्त्वशरीरे प्रवेशेन तथात्वात् । एतेन कार्यकोटचनिवेशे बीजमुक्तम् । मूले ॥ क्रियाज्ञानविभेदत इति ल्यब्लोपे पञ्चमी । तथाच क्रियां ज्ञानं च विभिद्य ताभ्यामेकैकं विशिष्टेन चैकमेवं त्रय इत्यर्थः । ननु क्रियाज्ञानयोर्धर्मत्वात्कथं स्वरूपभेदत्वमित्यत आहुः ॥ ॥ क्रियारूपइत्यादि एवं षड्भिः प्रमेयस्वरूपेण प्रमेयनिर्णय उक्तस्तत्स्वरूपेण कार्यरूपेण स्वरूपेण च भगवान् प्रमातुं शक्य इति ॥ ८९ ॥

व्रजभाषाटीका।

चित्के अनन्त भेद हैं जितनें अनंतजीव हैं सब चित्के भेद हैं चित् फलरूप हैं ऐसेंही आनंदकेभी अनेक भेद हैं जितने अंतर्यामी हैं वे सब आनंदके भेद हैं आनंद है सो स्वरूपभूत है अंतर्यामीमें ब्रह्म धर्म प्रकट है तासों अन्तर्यामीस्वरूपात्मकही समुझे जावे हैं वृक्षादिघटपटादिरूप कार्यभी अनंत हैं तासों कार्य-के भेदभी नहिं कहे हैं ॥८८॥ चिद आनंदकोभी तत्वनके साथ सहभाव है यासों इनको शरीरमें प्रवेश है तासों तत्वसहित चित् आनंदकोकारणकोटिमेंही प्रवेश कहकें स्वरूपके भेदनको वर्णन करे हैं स्वरूपके तीन भेदहैं वैदिक क्रियारूप धर्ममें प्रविष्टभयो धर्मी स्वरूप यज्ञशब्दसों प्रसिद्ध है तथा ज्ञानरूपधर्ममें प्रविष्टभयो धर्मी स्वरूप ब्रह्मनाम सों प्रसिद्धहै और ज्ञान क्रिया इन दोनों सहित श्रीकृष्ण तृतीय स्वरूपहै, अर्थात् यज्ञनारायण क्रियावान् परन्तु क्रियामें प्रविष्ट होयके गुप्तरीतिसों विराजे हैं तासों क्रियाशब्दसों ही व्यवहारमें आवेहै ब्रह्म केवल ज्ञानवालो है परन्तु ज्ञानमें गुप्तरीत्या प्रविष्ट है तासों ज्ञानशब्दसोंही व्यवहारमें आवे है श्री-कृष्ण तो पूर्णक्रिया तथा पूर्णज्ञानवाले हैं ॥ ८९ ॥

**विशिष्टे वाचकङ्गीता श्रीभागवतमेव च ॥**
**केवले काण्डद्वितयं वेदो धर्मप्रवेशतः ॥ ९० ॥**
**तस्यैवोद्भूतरूपत्वात्क्रियाज्ञाने अपि स्वतः ॥**
**अविकार्ये विकार्ये तु ह्यध्रुवे कार्यवन्मते ॥९१॥**

तत्त्वदीपप्रकाशः।

अस्य प्रमेयत्वसिद्ध्यर्थं प्रमेयबलविचारेण प्रमाणमाह॥वि[illegible]वा-चकमिति॥ ननु काण्डद्वयेऽपि क्रियाज्ञानञ्च प्रतिपाद्यते न[illegible]न्

ज्ञानवान्वा । तत्कथमुच्यते एकैकस्मिन्नंश एकैकङ्कण्डमिति तत्राह ॥ धर्मप्रवेशात इति ॥ क्रियावान् क्रियायाम्प्रविष्टः अतः क्रियैव प्रतीयते वस्तुतस्तु क्रियावान् ॥ "यज्ञो वै विष्णुः" इति श्रुतेः । तत्र हेतुः॥९०॥ तस्यैवोद्भूतरूपत्वादिति ॥ धर्म एवोद्भूतो नतु धर्मी ॥ ननु जन्यत्वान्न तद्भगवत्स्वरूपमित्याशंक्याह ॥ क्रियाज्ञाने अपि स्वत इति ॥ लौकिकक्रियया वृत्त्या च अभिव्यज्येते एव नतु जन्येते इत्यर्थः ॥ तत्र हेतुः ॥ अविकार्ये इति ॥ तर्हि लोकेऽपि क्रियाज्ञानयोर्नित्यता स्यादत आह ॥ विकार्येस्विति ॥ किञ्च कार्यमप्यस्मन्मते अभिव्यक्तमेव ॥ अतो नेदं दूषणमित्यर्थः ॥ ९१ ॥

आवरणभंगः ।

अस्येत्यादि ॥ ॥ स्वरूपस्य लौकिकप्रमाविषयत्वाभावेऽपि प्रमेयत्वसिद्ध्यर्थम्प्रमेयस्य स्वरूपस्य बलविचारेण प्रमाणमनुरुद्ध्यैव प्रागट्यफलदायकस्वरूपबलविचारेण प्रमाणमनुरुद्ध्यैव प्रागट्यफलदायकस्वरूपबलस्य विचारेण तदाहेत्यर्थः ॥ ॥ विशिष्ट इत्यादि ॥ ॥ अत्र गीतादेर्वाचकत्वं वाक्ये वैयाकरणवत् शक्त्यङ्गीकाराद्बोद्धव्यम् । तदग्रे स्फुटयिष्यति । गीताश्रीभागवतयोर्विशिष्टवाचकत्वं गुरुत्वेन ज्ञेयत्वेनोपास्यत्वेन भजनीयत्वेन कर्तृत्वेनोपादानत्वेन पुरुषोत्तमत्वेन फलत्वेन विभूतिमत्त्वादिना च क्रियाज्ञानविशिष्टस्य भगवत एव मुख्यतया प्रतिपादनात्सर्वधर्मान्परित्यज्येत्यादौ स्वस्य साधनशेषतानिराकरणाच्च ज्ञेयम् ॥ ॥ ॥ प्रतिपाद्यतइति ॥ ॥ मुख्यतया प्रतिपाद्यते ॥ ॥ यज्ञ इति ॥ ॥ तथाच यजेतेत्यादौ क्रियायाः स्फुटत्वेऽपि तत्र धर्मिणः क्रियावतो वाच्यत्वन्तत्क्रियास्वरूपनिर्णायकाद्वाक्यशेषादेवावगम्यत इत्यर्थः ॥ ९० ॥ नन्वेवं सति क्रियावानेवार्थोऽस्तु धर्मिणोंतःप्रविष्टत्वे किम्मानमत आहुः ॥ ॥ तत्रेत्यादि ॥ ॥ तत्रेति धर्मिणोऽतःप्रवेशे ॥ ॥ उद्भूत इति ॥ ॥ यजेत्यार्थत्वेन प्रतीयमानः । तथाच यथा चक्षुरादिभिरालोकादिप्रतीतावप्यालोकादेर्धर्म्यं विना भूतत्वेन तत्र धर्मिसत्ता तथा यजेत्यादौ शक्त्या क्रियाप्रतीतावपि वाक्यशेषेण विष्णुत्वबोधनात्तत्रानूद्भूतरूपधर्मिसत्तेति लक्षणां विनैवोभयसामञ्जस्यमिति भावः ॥ उत्तरकाण्डे तु विषयत्वेन ज्ञानशेषत्वेनैव ब्रह्मोच्यते इति ज्ञाने ज्ञानवतः प्रविष्टं त्वस्फुटमिति तदत्र नोक्तम् ॥ ॥ वृत्त्येति ॥ ॥

वृत्तिरूपेण ज्ञानेन । तथाच यथा वृत्त्या आवरणभङ्गे विषयचैतन्याभिव्य-
क्तिस्तथा क्रियया आवरणभङ्गे क्रियारूपस्याप्यभिव्यक्तिरिति भावः ॥ ॥ अत
आहेति ॥ ॥ उक्ताशङ्कानिवृत्त्यर्थं व्यवहारे तयोरनित्यत्वमाहेत्यर्थः ॥ मूले
विकार्ये तु ह्यद्रुध्रुवे इति । कारणाद्बहिर्भावः कारणेंतर्भावश्च तयोरिति ते विक्रिया-
म्प्राप्नुमस्तेनोत्पत्तिनाशवतीत्यर्थः । अत्र ज्ञानक्रिययोस्त्रिक्षणावस्थायित्वपक्षे
उत्पत्तिस्थितिनाशाख्यविकारत्रयवत्वात् ॥ चिरस्थायित्वपक्षे वृद्ध्यऽपक्षयव-
त्त्वेन प ड्विकारवत्त्वाद्विकार्यत्वम्बोध्यम् । एवं प्रमाणेन प्रमेयनिर्णय उक्तः॥९१॥

ब्रजभाषाटीका ।

उन क्रियाज्ञानविशिष्ट श्रीकृष्णचन्द्रको वर्णन करवेवाले गीताभागवत हैं और केवल क्रियावान् यज्ञात्मक विष्णुको वर्णन करवेवारो वेदको पूर्वकाण्ड है तहाँ पूर्वकाण्डमें तो क्रियाको वर्णन है क्रियावान्को वर्णन नहिं है ऐसी शङ्का नहिं करनी क्योंकी आप क्रियामें प्रविष्टहोयरहे हैं तासों क्रियाहि प्रतीत होवे है वस्तुतः आप क्रियावान् है याही सों ( यज्ञो वै विष्णुः ) या श्रुतिमें यज्ञभगवान्कों विष्णुरूपता लिखीहै ऐसेंही उत्तरकाण्डवेदान्तमेंभी ज्ञानवाले ब्रह्मकोही प्रतिपादनहै परन्तु ज्ञानरूपधर्ममें प्रविष्टभयो स्वरूप तो प्रकट नहिंहै ज्ञानही प्रकट रहै तासों वाकूँही ब्रह्मरूप मानकें वर्णनकियो है वस्तुतः उत्तर-काण्डमें ज्ञानवान् ब्रह्मस्वरूपकोही वर्णन है ॥ तहाँ लौकिकक्रि-यासों यज्ञ उत्पन्न होय है तथा वृत्तिरूप ज्ञानसों ब्रह्मज्ञान होय है उनकों भगवद्रूपता कैसे सम्भवसके ऐसो सन्देह नहिं करनो जैसें वस्त्रकूं दूरकरवेसों ढकीभई वस्तु प्रकट होजावे है ऐसे लौकिकक्रियाकरकें आवरणमात्र दूर होवेहै तब सर्वदा विद्यमान यज्ञ स्वरूप प्रकट होजावें है ऐसेंही वृत्तिरूप ज्ञानकरके आवरण दूरहोवें है तब सर्वदा विद्यमान ब्रह्मस्वरूप प्रकट होवें है अर्थात साधनकरके छिपे भये यज्ञ रूप तथा ब्रह्मरूप को प्रकटहोनों मात्र

है उत्पन्नहोनों नहिं है याहीसों वेदके क्रिया ज्ञान ( अविकार्य ) अर्थात् नित्य है लौकिकक्रिया ज्ञान ( विकार्य ) अर्थात् अध्रुव है यदि वेदके क्रियाज्ञानके दृष्टान्तसों इनकों भी नित्य मानें तथापि दूषण नहिं है क्योंकि हमारे सिद्धान्तमें कार्यभी कारण रूपकरकें सर्वदा रहे हैं छिपेभये कार्यके प्रकट होयवेसोंही लोकमें उत्पत्ति कहे है तहाँ लौकिकक्रियाज्ञान तथा वैदिकक्रियाज्ञान दोनोंही नित्य है तब वेदकरकें कहा प्रयोजन है ? ऐसी शङ्का नहिं करनी लौकिक क्रियाज्ञानसों तो लौकिककार्यकी सिद्धि होयहै वेदोक्तक्रियाज्ञानकरकें यज्ञ तथा ब्रह्मको प्रकट होनो फल है तासों वेदकी आवश्यकता है, पूर्वकाण्डमें क्रियाके अनुष्ठानसों क्रियाविशिष्ट यज्ञस्वरूपको प्रादुर्भाव होवै है उत्तरकाण्ड वेदान्तमें परिचर्याकरके प्रसन्नभये गुरुकी अनुग्रहसों ज्ञानविशिष्टब्रह्मस्वरूप को प्रादुर्भाव होयहै ॥ ९१ ॥

**वेदवाच्ये तु ये रूपे तदभिव्यक्तितः फलम् ॥**
**अनुष्ठानाद्गुरोर्वापि लौकिके लौकिकं फलम्९२**
**प्रेमसेवात एव स्याद्विशिष्टव्यक्तिरुत्तमा ॥**
**कार्यभेदविभेदान्न हि कल्पयित्वा विभागशः९३**

तत्त्वदीपप्रकाशः ।

तर्हि लोकतुल्यत्वात् क्रियाज्ञानप्रतिपादनार्थं किं महता वेदेनेत्याशंक्याह ॥ **वेदवाच्ये तु ये रूप इति** ॥ तयोरभिव्यक्तिमात्रेणैवोक्तम्फलम्भवति ॥ अतः फलार्थङ्कीर्तनमित्यर्थः ॥ अभिव्यक्तिहेतुमाह ॥ **अनुष्ठानाद्गुरोर्वापीति** ॥ गुरोरुत्तरकाण्डे लौकिकेऽपि क्रियाज्ञानयोः सफलत्वात्को विशेष इत्याशंक्याह ॥ **लौकिकं फलमिति** ॥ अन्यतः फलसिद्धिरित्यर्थः ॥ विशिष्टाभिव्यक्तौ हेतुमाह ॥ ९२ ॥ **प्रेमसेवात इति**॥भक्तिशब्दस्य प्रत्ययार्थःप्रेमधात्वर्थः॥सेवाभक्त्यैव तुष्टिमभ्येतीति-

वाक्यात् ॥ पश्यन्ति ते म इति च॥ विशिष्टस्य कृष्णस्य कृतार्थत्वज्ञापनायाभिव्यक्तिरुत्तमा नतु दैत्यवधार्थमिव ॥ ननु क्वचित्षोडशपदार्थाः क्वचित्सप्त तथा त्वयापि कार्येषु कथन्न भेदाःकल्प्यन्त इत्याशंक्याह ॥ कार्यभेदेति॥ "मुख्यमेकम्पृथक्कृत्यसाधनानान्निरूपणम्॥ युक्तन्नतुल्यसंख्या हि फलकारणयोः क्वचित्॥ अतोत्र हरिम्पृथक्कृत्य तत्वान्येव कारणत्वेन कथितानि नत्वेकीकृत्यशास्त्रान्तरवन्निरूपितानि ॥ ९३ ॥

आवरणभंगः ।

तर्हीति ॥ ॥ यदि स्वरूपतः सर्वस्य मित्यत्वन्तर्हीत्यर्थः ॥ ॥ अभिव्यक्तिहेतुमाहेति ॥ ॥ साधनतो निर्णेतुमाहेत्यर्थः॥ ॥ गुरोरिति ॥ उपसत्त्यादिना प्रसन्नात्तस्मादित्यर्थः ॥ ॥ अन्यत इति ॥ ॥ तथाऽत्र पराधीनत्वात्तज्जघन्यमिति विशेष इत्यर्थः । एवं वैदिके प्रमेये फलतो विशेष उक्तः । एतेनैव वैदिकशेषभूतस्मार्त्तपौराणभारतरामायणप्रमेयमपि व्याख्यातं ज्ञेयन्तत्रापि धर्मप्रकरणे क्रियाया ब्रह्मप्रकरणे च ज्ञानस्यैव प्रमेयत्वात् । तयोः श्रौतशेषतयैव मुख्ये फले उपयोगः ॥ गौणन्तु श्रौत इव कर्मसाचिवदेवतोषात् ॥ गौणतरन्त्वपूर्वद्वारेत्याद्यूह्यम् । सांख्ययोगयोस्तु प्रमेयङ्कारणकोटौ निविशति ॥ तथा फलमपि । तदग्र उद्देशतो वक्तव्यम् । अङ्गोपवेदादेस्तु प्रागेवोक्तेन चरितार्थमिति पृथगत्र न विचारितम् ॥ अतः परङ्गीताश्रीभागवतयोः प्रमेयमेव शिष्यते तत्साधनतो निर्णयन्ति ॥ विशिष्टेत्यादि ॥ ननु भक्त्या त्वनन्ययेतिवाक्याद्भक्तिरेवाभिव्यक्तिहेतुत्वेन वाच्या नतु सेवापीत्यत आहुः ॥ भक्तिशब्दस्येत्यादि ॥ अयमर्थः । प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येनेति नियमादत्र धातुसामान्यार्थे शक्तोप्यक्तिन् प्रत्ययो भजिसमभिव्याहारात्प्राधान्येन भजनक्रियां वक्ति सा च सेवात्मिका । सेवापदञ्च सातत्याभीक्ष्ण्यान्यतरपूर्वककायिकव्यापारविशेषे रूढम् । स्त्रीसेवा औषधसेवेत्यादिप्रयोगदर्शनात् । तादृशव्यापारविशेषपरिचर्यारूप एव स्वतन्त्रसेवाबोधकैर्मत्सेवया प्रतीतश्चेत्यादिवाक्यैरवगम्यते तेषु सेवायाः पूर्णत्वादिकथनात्प्रेमपूर्वकत्वमपि लभ्यते । अन्यथा तस्याः कायक्लेशजनकत्वेन स्वतः पुरुषार्थत्वोक्तिभङ्गप्रसङ्गात् । एवं सति प्रेम्ण एव प्रयोजकत्वेन तस्य प्राधान्यङ्गम्यते भक्तिलक्षणवाक्यैर्भक्त्यैवेति वाक्याच्च । अतः स एव प्रत्ययार्थः । कायिक्यादिरूपात्त्वप्रधानत्वात्प्रकृत्यर्थः ॥ सापि मत्यादिसेवाभिरतामदीहा इति सेवनमुपक्रम्योक्तेति पश्यंति त इति वाक्येनावगम्यते अतो भक्त्या मामभीत्यादावुभयं संगृह्यत इत्यतः प्रेमसेवा तत्र तथोच्यत इत्य

एतेनैव पुराणान्तरप्रमेयव्यवस्थापि बोधिता ज्ञेया । एवं स्वरूपविचारेण शास्त्रानुरोधिप्रमेयं सार्द्धैश्चतुर्भिः स्वरूपप्रमाणसाधनफलैर्निर्णीतम् । अतःपरं स्वतन्त्रप्रमेयमध्ये कार्यरूपं विचारयन्ति ॥ नन्वित्यादि ॥ कार्यभेदेति ॥ ब्रह्मातिरिक्तस्य सर्वस्य कार्यत्वात्तद्भेदान्द्रव्यादीन् तद्विभेदान् पृथिवीशब्दादीन् हि निश्चयेन एतावंत एव नियताः पदार्था नाधिका इत्याकारकेण विभागशः पृथिवी नित्या कार्या इन्द्रियानिन्द्रियरूपेत्याद्यवान्तरविभागेन कल्पयित्वा तज्ज्ञानेन तत्साधर्म्यवैधर्म्यज्ञानेन मुक्तिम्प्रदर्श्य शास्त्रप्रवृत्तिर्वृथा । न फलसाधिका यस्माद्धेतोः कार्यमतिर्वृथावाचारम्भणश्रुत्याकार्यबुद्धिरेव न फलजनिकेत्युक्तन्तस्मादित्यर्थः ॥ तस्मात्तत्कार्यतया हेया ॥ तथैव क्रीडेयं नतु फलायेतिभावः । ननु यद्येवन्तदा तत्वगणनाप्यपार्था तेषामपि कार्यत्वादित्यत आहुः ॥ मुख्यमेकमित्यादि ॥ तथाच कार्यत्वेऽपि बोधसाधनत्वं पुराणेषूक्तत्वाद्भगवदुक्तम्पक्षमाश्रित्य कारणत्वेनोपगण्यन्ते तेन न पूर्वोक्तदोष इत्यर्थः ॥ ९२ ॥ ९३ ॥

ब्रजभाषाटीका।

पूर्ण क्रिया ज्ञानविशिष्ट श्रीकृष्णचंद्रको प्रादुर्भाव तो प्रेम सहित देहेन्द्रियादिकनकरकें सेवाकरवेसोंही होय है प्रेम सेवासों जो कृष्णको प्रादुर्भाव होय है सो भक्तकूँ कृतार्थ करवेके लिये ही होय है वहाँ प्रादुर्भाव दैत्यवधार्थ नहिं है प्रेमसेवाको ही नाम भक्ति है तथा देह इन्द्रियनकरकें जो भगवान्की परिचर्या करनों वाहीसों सेवा कहें है या विषयको आवरणभंगमें विस्तार लिख्यो है सो अवश्य जाणवे योग्य है । शंका---कहूँ षोडश पदार्थ, कहिं सप्तदश पदार्थ मानें हैं या प्रकार भगवान्सों अतिरिक्त सब पदार्थकों कार्य मानकें कार्यके अनेक भेद बताये हैं आपनें वा रीतिसों क्यों नहिं वर्णन कियो ? उत्तर---कार्यको ब्रह्मसों अतिरिक्त मानके वामें सात पदार्थ की कल्पना करके उन सात पदार्थनमें सो एक एकके अनेक पृथिव्यादिक तथा शब्दादिकके भेद कहकें उनमें नित्यानित्यविचार करकें इतनेंही पदार्थ हैं इनके ज्ञानसों मोक्ष होय है या प्रकारकी जो शास्त्रकी रचना है सो वृथा है क्योंकि वाचारंभणश्रुतिमें कार्यबुद्धि फलजनक नहिं है

यह बात सूचित करी है कार्यकी सत्यताभी कारणरूपता करके ही कही है ॥ ९२ ॥ ९३ ॥

वृथा शास्त्रप्रवृत्तिर्हि यस्मात्कार्यमतिर्वृथा ॥ सत्वं रजस्तमश्चैव पुरुषः प्रकृतिर्महान ॥ ९४॥ अहङ्कारः पञ्चमात्राः शब्दः स्पर्शाकृती रसः॥ गन्धो भूतानि पञ्चैव खं वायुर्ज्योतिरपक्षि-तिः ॥ ९५ ॥ क्रियामयानीन्द्रियाणि वाग्दो-र्मेढ्रांघ्रिपायवः ॥ श्रोत्रं त्वक् घ्राणदृक् जिह्वा-मनः षट्चेति भेदतः ॥ ९६ ॥

तत्त्वदीपप्रकाशः ।

तत्वानि गणयति ॥ सत्वमिति । मनः षडित्यन्तेन मनसः क्रियामयत्वे ज्ञानमयत्त्वञ्चाह ॥ भेदत इति । मनसा सह क्रियायां पडि-ति ॥ ९४ ॥ ९५ ॥ ९६ ॥

आवरणभंगः ।

गणयतीति॥पूर्वसंख्यायाउक्तत्वात्तत्पूरणाय गणयतीत्यर्थः॥ अत्र तत्वमित्या-दि ॥ सार्द्धद्वयेनाष्टाविंशतीनामुद्देशमात्रं कृतं लक्षणन्तु सत्वादिगुणानाम् ॥ तत्र सत्वान्निर्मलत्वादित्यादिभ्यो गीतावाक्येभ्यो ज्ञेयम् । पुरुषादीनाम्पञ्चविं-शतीनान्तु तृतीयस्कन्धस्थकापिलेयवाक्येभ्यः । तत्सर्वं सुबोधिन्यां विवृतम् । तत्र चैकैकस्य लक्षणत्रितयमुक्तन्तेभ्यो व्यवहारोपयोगाय मया प्रस्थानरत्नाकरे उद्धृत्यानूदितानि परीक्षितानि चेति तत्प्रपञ्चस्ततोऽवधेयः॥ उद्ग्रन्थविस्तराभिया-त्र न लिख्यते ॥ ९४ ॥ ९५ ॥ ९६ ॥

व्रजभाषाटीका ।

तासों या ग्रन्थमें भगवत्स्वरूपको पृथक् वर्णन करकें तत्वन-कूँही जगतके कारण बताये हैं और शास्त्रकी तरह तत्वनमेंही मूलस्वरूप सामिल नहिं राख्यो है । अब भगवानके सिद्धान्तके अनुसार तत्वनकी गणनाकरें है । सत्वगुण १ रजोगुण २ तमो-

गुण ३ पुरुष ४ प्रकृति ५ महत्तत्व ६ अहंकार ७ शब्द ८ स्पर्श ९ आकृति १० गन्ध ११ रस १२ आकाश १३ वायु १४ तेज १५ जल १६ पृथ्वी १७ वाणी १८ हस्त १९ मेढ्र २० पाद २१ पायु २२ कर्ण २३ त्वचा २४ घ्राण २५ दृष्टि २६ जिह्वा २७ मन २८ ये अठ्ठाईस तत्व हैं ॥ ९४ ॥ ९५ ॥ ९६ ॥

आध्यात्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविकः ॥ अतो हि देवतावर्ग इन्द्रियेभ्यो न भिद्यते ॥ ९७ ॥ माया तु गुणरूपा हि कालस्तु भगवान् परः ॥ सूत्रं महाँस्तथा प्राणो बुद्धिश्चाहमभेदतः ॥ ९८ ॥

तत्त्वदीपप्रकाशः ।

देवतावर्गेणाधिकसंख्यामाशंक्य परिहरन्ति ॥ आध्यात्मिकस्त्विति ॥ ९७ ॥ माया भिन्नेत्याशंक्याह ॥ मायात्विति ॥ कालस्तु भगवत्यन्तर्भूतः ॥ सूत्रन्तु महत्तत्वमेव ॥ तथा प्राणो बुद्धिश्च अहङ्कार एव तस्मादष्टाविंशतिसंख्याकान्येव ॥ ९८ ॥

आवरणभंगः ।

देवतावर्गेणेति ॥ ॥ तैजसादिंद्रियाणित्विति तैजसशब्दवाच्याद्राजसाहङ्कारादिंद्रियोत्पत्तिः "वैकारिकान्मनो जज्ञे देवा वैकारिका दश । दिग्वातार्कप्रचेतोश्विवह्नींद्रोपेन्द्रमित्रकाः ॥" इति वैकारिकशब्दवाच्यात्सात्विकाहङ्काराद्देवतोत्पत्तिभेदादुक्तरूपेण तेनेत्यर्थः ॥ आध्यात्मिका इति ॥ ॥ द्वितीयस्कन्धस्य दशमे "आध्यात्मिकोयं पुरुषः सोसावेवाधिदैविकः" इत्यत्र जीवान्तर्यामिणोः कार्यभेदेपि पाचकपाठकवदेव प्रतिपादितः। प्रकृतेऽपि तृतीयस्कन्धस्य षष्ठे "त्रयोविंशतितत्वानाङ्गणं युगपदाविशत्" इति प्राधानिकस्य गणस्य संख्यामुक्त्वाऽग्रे "तस्याग्निरास्यं निर्भिन्नं लोकपालोविशत्पदम् । वाचा स्वांशेन वक्तव्यं ययासौ प्रतिपद्यत" इत्यादिष्विन्द्रियाणान्देवांशत्वङ्कण्ठत एवोक्तम् ॥ श्रुतौ चाग्निर्वाग्भूत्वा मुखम्प्राविशदित्युक्तन्तेनेन्द्रियाणान्देवांशत्वादेवाभिन्नत्वम् ॥ आध्यात्मिकादिपदार्थस्तु । आत्मनीत्यध्यात्मं तत्र भव आध्यात्मिकः । एवमाधिदैविकोऽपि ।

एवं सति दैव्येषु भोगादिषु देवतावर्गस्य स्वातन्त्र्येपि देहमधिष्ठाय कार्यकारण इन्द्रियाणामेव प्रधान्यस्य पूर्ववाक्य उक्तत्वात्तदाधिदैविकानामपि तेष्वेव निवेश इत्यत आध्यात्मिकेभ्य इन्द्रियेभ्यः स न भिद्यत इत्यर्थः ॥९७॥ ॥मायाभिन्नेत्याशंक्येति ॥ ॥ "रजःसत्वं तम इति निर्गुणस्य गुणास्त्रयः । सर्गस्थितिनिरोधेषु "गृहीता मायया विभोः" इतिवाक्ये मायागुणयोर्ग्राह्यग्राहकभावोक्तेर्भिन्नेत्यशक्येत्यर्थः ॥ गुणरूपत्वन्तु दैवी ह्येषा गुणमयीतिवाक्यात् । ननु तथा सति कथमनयोर्वाक्ययोरविरोध इतिचेत् ॥ इत्थम् । सामर्थ्यरूपा हि सा । यथा पुरुषस्य कर्मकरणादौ शक्तिः । अतएव कार्यैकोन्नेया "किमावरीवः" इतिश्रुतेश्च । एवं सति सिसृक्षया गुणानुत्पाद्य तेषु तान्निक्षिपतीति तदात्मकैव सोच्यते । कीर्त्तिन्यायाच्च नभगवच्छक्तित्वहानिरतो नानुपपत्तिः कापि । कालो वैशेषिकादिमते द्रव्यान्तरम् । अनीश्वरकापिले तु"दिक्कालावाकाशादिभ्य"इति सूत्रादाकाशेन्तर्भावितः॥एकदेशिमते त्वतिरिक्तम्प्राकृतिकन्तत्वम् । अपरैकदेशिमते त्वहङ्कारमूढस्य कर्तुर्भयजनकः पुरुषस्य धर्मः सामर्थ्यविशेषो वा काल इति । तदेकमपि स्वाभिप्रेतन्नभवति । किन्तु श्रुतौ कार्यकोटावगणनादुद्गमस्यापि श्रवणात् "सतोऽभिव्यञ्जकः कालो ब्रह्मतात्रितयन्त्वहम्"इति"प्रकतेर्गुणसाम्यस्य निर्विशेषस्य मानवि । चेष्टा यतः स भगवान् काल इत्युपलक्ष्यते" इति वाक्याच्च स भगवदात्मक एवेत्याशयेनाहुः ॥ कालस्त्वित्यादि ॥ ॥ ननु तेभ्यः समभवत्सूत्रमिति वाक्यात्सूत्रन्नाम तत्वं भिन्नमेवेत्यत आहुः ॥ सूत्रन्तु महत्तत्वमेवेति ॥ " तेभ्यः समभवत्सूत्रं महान् सूत्रेण संयुतः" । इति वाक्यादेव तथेत्यर्थः । एतद्वाक्यार्थस्तु । सूत्रं सूचनात् । क्रियाशक्तिमान् प्रथमो विकारः । ततो महान् ज्ञानशक्तिमान् सच सूत्रेण संयुतः सम्यङ्मिश्रितस्ततः पृथङ्न । किंत्वेकमेव तत्वम् । ज्ञानक्रियाशक्तिभ्यां द्वेधोच्यत इति । द्वितीयस्कन्धेतु । ततः प्राणोमहानसुरिति प्राणात्मकत्वमप्यस्योक्तम् । वेदे य आस (?)न्यत्वेन प्रसिद्धो भगवद्रूपस्तस्य सूत्रेऽवतारात् । एतद्रूपता च नामसृष्टावुपयोक्ष्यते । प्राणबुद्धिभ्यान्तत्वाधिक्यमाशंक्य परिहरति। तथा प्राणो बुद्धिश्चेति। बुद्धिप्राणस्तु तैजस इति वाक्यात् ॥ तैजसो राजसाहङ्काराभिन्न इत्यर्थः । अस्मिन्पक्षे तैजसाहङ्कार एवासत्यावतारो ज्ञेयः ॥ अतो नानुपपत्तिः । भगवदीयसांख्ये तयोरुत्पत्तिर्नोक्तेत्यत्रापि तत्वान्तरता नोक्ता । अतो न तत्वाधिक्यमित्यर्थः । एतेन तृतीयस्कन्धे तैजसात्तु विकुर्वाणाद्बुद्धितत्वमभूत्सतीति यदुक्तन्तत्कल्पान्तरानुसारिमतान्तरमिति ज्ञापितम् । प्राणस्य वायुरूपत्वं वादायेत्यप्यवधेयम् । अन्यथा तामसीं सृष्टिं वदन् शास्त्रं रस्तैजसानामिन्द्रियाणामात्मत्वङ्कथं वदेत् । ननु क्वचिदाकाशादिपंचकसत्वांशेभ्यो बुद्ध्युत्पत्तिकथनात्सात्विकत्वम्प्रतीयते।श्वासो-

च्छ्वासाभ्यां वायुत्वेन प्राणस्य तामसत्वमतः कथमुभयो राजसत्वमितिचेन्न । जनन-क्रियायामुभयोर्व्यापृतत्वाज्जननस्य च रजोधर्मत्वात्तदुपपत्तेरिति । प्राणलक्षणन्तु सर्वेंद्रियबलदातृत्वम् । अतएव ओजःसहोबलानि प्राणधर्माः । ओज इन्द्रियशक्तिः सहो मनःशक्तिर्बलश्च देहशक्तिरिति । अयञ्चाणुः सामर्थ्येन शरीरे सकले प्राणापानव्यानोदानसमानभेदात्पञ्चधा तिष्ठति । क्वचित्तु नागकूर्मकृकलदेवदत्तधनञ्जयभेदेन दशधाप्युक्तः । एतेषां स्थानकार्यादिकं विस्तरभयान्नोच्यते । सार्वजनीनत्वात्प्रमाणमपि । बुद्धिस्तु बुद्धिश्च बोद्धव्यञ्चेति श्रुतौ करणानुक्रमणे सिद्धा हृदयस्था विशिष्टज्ञानलक्षणकार्यानुमेया च ॥ तत्साधितमाचार्यैः । यो बुद्धिमान् तस्य पदार्थज्ञानम्भवतीति । सुबुद्धिरयं पदार्थान् जानातीति च ज्ञानकारणत्वेन बुद्धिर्व्यपदिश्यते । कार्यकारणयोरभेदोपचाराच्च बुद्धिज्ञानयोः पर्यायत्वव्यवहारः ॥ अन्यथा बालस्य बुद्ध्यभावेन न पदार्थज्ञानं सम्यग्भवति तत्स्यादिति बुद्धेर्लक्षणानि तु त्रीणि तत्र द्रव्यस्फुरणविज्ञानत्वं स्वरूपलक्षणम् । इन्द्रियानुग्राहकत्वं संशयविपर्यासनिश्चयस्मृतिस्वप्रवृत्तिकत्वञ्चेति द्वयङ्कार्यलक्षणम् ॥ तदुक्तम् "द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः । संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्" इति ॥ प्रथमलक्षणे द्रव्यपदं विषयमात्रोपलक्षकम् । तेन विषयनिर्विकल्पकोत्तरं शब्दादिना यद्विशिष्टज्ञानन्तादृगकारा बुद्धिरित्याध्यात्मिकन्तल्लक्षणं निर्विकल्पकाकारा तु न बुद्धिः । तारतम्याज्ञापनेनेन्द्रियाननुग्राहकत्वाच्च । योगजधर्मजन्यविज्ञानस्यापि विशिष्टज्ञानरूपत्वात्तद्वारणाय समुदितमुपात्तम् । तेनेदम्फलति योगजधर्माजन्या विशिष्टज्ञानसमानाकारो ज्ञानेन्द्रियानुग्राहकः पदार्थो बुद्धिरिति । तृतीयलक्षणोक्तावृत्तयस्तु कार्यज्ञाननिरूपणे संशयादीनां स्वरूपकथने तत्तत्समानाकारत्वेनैव ज्ञाता भविष्यन्तीति प्रस्थानरत्नाकर एव ता विवृता इत्यतो नात्र लक्ष्यन्ते ॥ प्रकृतमनुसरामः ॥ एवन्तत्वाधिक्यम्परिहृत्य निगमयन्ति ॥ तस्मादित्यादि ॥ ९८ ॥

व्रजभाषाटीका ।

पुरुषादि पचीस तत्वके लक्षण तृतीयस्कन्धमें लिखे हैं, तीनों गुणनके लक्षण ( तत्र सत्वं निर्मलत्वात् ) इत्यादि गीतावाक्यमें लिखे हैं, मन क्रियामयहै तथा ज्ञानमयभी है; दिशा, वायु, सूर्य, प्रचेता, अश्विनीकुमार, अग्नि, इन्द्र, उपेन्द्र, मित्र ये दश इन्द्रियनके देवताहैं ( वह्निर्वाग्भूत्वा मुखम्प्राविशत् ) इत्यादि श्रुतिमें

देवतोंको ही इन्द्रियरूप होजानों लिखे हैं तासों आध्यात्मिकके साथ आधिदैविकको अभेद मानके इन्द्रियनमें ही इन्द्रियनके देवतानको अन्तर्भाव होवे है ॥ ९७ ॥ ( दैवी ह्येषा गुणमयी मम माया दुरत्यया ) इत्यादि वाक्यसों मायाको तीनों गुणनमें अन्तर्भाव है ( सत्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः । स्थितिसर्गनिरोधेषु गृहीता मायया विभोः ॥ ) इत्यादिवाक्यानुसार जब भगवान् सृष्टिकी इच्छा करें है तब अपनी सामर्थरूप मायाकों अपने गुणनमें डारदें है तासों वो माया गुणमयी कहावें है ( स भगवान् काल इत्युपलक्ष्यते ) इत्यादिवाक्यनसों काल भगवद्रूप है तासों कालकी तत्वनमें गणना नहिं है सूत्रात्मक प्राणको महत्तत्त्वमें अन्तर्भाव है प्राण तथा बुद्धि इनको अहङ्कारमें अन्तर्भाव है ॥ ९८ ॥

**प्रकृतिः पुरुषश्चोभौ परमात्माभवत्पुरा ॥ यद्रूपं समाधिष्ठाय तदक्षरमुदीर्यते ॥ ९९ ॥ आनन्दांशतिरोभावः सत्वमात्रेण तत्र हि ॥ मुख्यजीवस्ततः प्रोक्तः सृष्टीच्छावशगो हरिः ॥ १००॥**

तत्त्वदीपप्रकाशः ।

अक्षरकालकर्मस्वभावान्निरूपयन् प्रथममक्षरमाह ॥ **प्रकृतिः पुरुषश्चेति** ॥ भगवान्यदा येन रूपेण कार्यङ्कर्तुमिच्छति तद्रूपमेव व्यापारयति ॥ तत्र ज्ञानेन मोक्षो देय इति यदा विचारयति तदाक्षरमेव ब्रह्मस्वरूपम्पुरुषोत्तमस्याधारभागः चरणस्थानीयः । तमादौ चतुर्मूर्तिङ्करोति । अक्षररूपं ब्रह्मरूपम् । कालरूपं स्वभावरूपञ्च तत्र यस्य रूपस्य द्वैरूप्यम्भवति प्रकृतिपुरुषभेदेन तदक्षरम् ॥ ९९ ॥ ननु पुरुषोत्तमस्वरूपात्तत्र को विशेष इति चेत्तत्राह ॥ **आनन्दांशतिरोभावइति**॥अग्रेऽहमेवम्भविष्यामीतीच्छामात्रेणान्तःसमुत्थितसत्वेनानन्दां-

शस्तिरोहित इव भवति । तेन सृष्टीच्छया व्यापृतो भगवान्मुख्यजीव-शब्दावाच्योऽपि भवति ! अत एव औडुलोमिमते जीवानां चिद्रूपाणा-श्चिद्रूपे स्वयोग्ये ब्रह्मणि प्रवेशः ॥ १०० ॥

आवरणभंगः ।

ब्रह्मतनुः । पर इत्यत्रोक्तं यत्तद्विचारयन्ति ॥ अक्षरेत्यादि ॥ तदाहुरक्षरं ब्रह्म सर्व कारणकारणमिति तृतीयस्कन्धवाक्यादक्षरस्य "कालङ्कर्म स्वभावश्च मायेशो माय-याऽसृजत ।आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे । कालाद्गुणव्यतिकरः परिणा-मस्वभावतः । कर्मणो जन्ममहतः पुरुषाधिष्ठितादभूत् " इतिद्वितीयस्कन्धवाक्या-त्कालकर्मस्वभावानामपि ब्रह्माण्डसृष्टिपूर्वभावित्वात्तेभविष्यंतीति कथमष्टाविंश-तिरेव तत्वानीत्याशंकायामेतेषान्तत्वतानिराकरणार्थमेतच्चतुष्टयस्वरूपं निरूपयि-ष्यन् प्रथममक्षरं लक्षयतीत्यर्थः ॥ अत्राक्षरकर्मस्वभावानीत्यत्र मध्ये कालशब्द-स्त्रुटित इति प्रतिभाति । तथाग्रे ब्रह्मरूपमित्यत्र कर्मरूपमिति पाठश्च ॥ व्याख्या-नग्रन्थस्वारस्यादिति बोध्यम् । नन्वेवमधिष्ठानस्य किम्प्रयोजनमत आहुः ॥ भगवानित्यादि ॥ ॥ तथाचाक्षरज्ञाने श्रुतौ मोक्षस्योक्तत्वात्तस्याव्यक्तत्वेन दुर्ज्ञेयत्वात्तस्य ज्ञानार्थमेव तदधितिष्ठतीत्यर्थः ॥ एवं प्रयोजनमुक्त्वा लक्षणं व्या-कुर्वन्ति । तत्र यस्य रूपस्येत्यादि ॥ ॥ इदमेव च श्रीभागवते सर्वकारणकारण-पदेनोक्तम् । सर्वकारणयोः प्रकृतिपुरुषयोः कारणमितिव्याख्यानात् । द्विधास-मभव द्बृहदिति वाक्याच्च । अत्र मूले समधिष्ठायेति कथनात्सृष्टिकारणे आधारा-कांक्षापि पूरिता ॥ तेन शास्त्रे ऊर्णनाभदृष्टान्ते यानुपपत्तिः सापि परिहृता बो-ध्या ॥ ९९ ॥ भवतीति ॥ ॥ तथा च पुरुषोत्तमस्तु लीलया इच्छां करोति न तु तया व्याप्रियत इत्यतिरोहितानन्दः ॥ अक्षरं तु तया व्यापृतं सन्मलभूतेन सत्वेन तिरोहितानन्दमुख्यजीवपदवाच्यतान्धत्त इत्येष विशेष इत्यर्थः॥ आनन्दांशतिरो-भावे गमकमाहुः ॥ अत एवौडुलोमीत्यादि ॥ १०० ॥

व्रजभाषाटीका ।

अक्षर काल कर्म स्वभाव इन चारकीभी तत्वनमें गणना हो-नीचाहिये क्योंकि तत्वनके समान येभी ब्रह्माण्डके पूर्व प्रकट भये हैं तथा इनके कार्य भी परिणामादिक प्रत्यक्ष हैं इसी शंका-को दूरकरनेके लिये इनके स्वरूपकूँ वर्णन करतेभये प्रथम अक्षर-को स्वरूप वर्णन करें है ( प्रकृतिरिति ) भगवान् जा स्वरूपकरकें

कार्य करनों चाहेहैं वा रूपकूँ ही ( व्यापृत ) अर्थात् विस्तारयुक्त करें है जब भगवान् ज्ञानकरके मोक्ष देनों चाहे हैं तब पुरुषोत्तम भगवान् अपने चरणस्थानीय आधारभागके चार स्वरूप करें है अक्षरस्वरूप १ कालरूप २ कर्मरूप ३ स्वभावरूप ४ इन चार मूर्तिनमें अक्षर दो रूपवालो है प्रकृति १ पुरुष २ ये दोनों अक्षरके रूप हैं ॥ ९९ ॥ पुरुषोत्तमके स्वरूपसों इनमें इतनी विलक्षणता है आगे मैं जगद्रूप होऊँगो ऐसी इच्छामात्रकरकें बढ्यो भयो जो सत्व ताकरकें आनन्दांश ( तिरोहित इव ) छिपे भये के समान गुप्त होजावे है तासों सृष्टि उत्पन्न करवेकी इच्छाकरके व्यापारवाले भगवान् मुख्य जीवशब्दवाच्य होवे है याहीसों औडुलोमिमतमें चिद्रूपजीवनको चिद्रूप ब्रह्ममें ही प्रवेशलिख्यो है अर्थात् सृष्टीच्छाकरकें व्यापारवाले ब्रह्मको आनन्द तिरोहित होए रह्यो है तासों चिद्रूप ब्रह्ममें ही लय लिख्यो है ॥ १०० ॥

**इच्छामात्रास्तिरोभावस्तस्यायमुपचर्यते॥ब्रह्म-**
**कूटस्थाव्यक्तादिशब्दैर्वाच्यो निरन्तरम् १०१**
**सर्वावरणयुक्तानि तस्मिन्नण्डानि कोटिशः॥**
**मूलाविच्छेदरूपेण तदाधारतया स्थितिः १०२**

तत्त्वदीपप्रकाशः ।

नन्वानन्दांशतिरोभावे जीवत्वमेव स्यात् । यथा महदादीनामित्याशंक्याह ॥इच्छामात्रादिति॥ इच्छायाम्प्रविष्टायाङ्कार्यव्यापृत्या तिरोभाव इवोच्यते ॥ वस्तुतस्त्वानन्दमय एव ॥ अत एव पुरुषोऽवतारो भविष्यति ॥ इच्छारूपायाः प्रकृतेर्भिन्नत्वेवाचकैरपि तस्य न जीवत्वमित्यभिप्रायेणाह ॥ ब्रह्मेति ॥ आदिशब्देनासत्सत्तमःशब्दादयो गृह्यन्ते ॥ तथापि न पुरुषोत्तमात् भिन्नतया व्यवस्थितिः । किन्तु निर-

न्तरमेव तस्यैव कारणत्वं ज्ञापयितुं तत्रैव कार्यस्थितिमाह ॥ १०१ ॥
**सर्वावरणयुक्तानीति** ॥ तदाहुरक्षरं ब्रह्मेतिवाक्यात् ॥ एतस्याक्षरस्थ
पुरुषोत्तमे अभेदेन यथा निवेशस्तथा प्रकारा उच्यन्ते ॥ तदाह ॥

महत्तत्त्वाहङ्कारके समान अक्षरभी जडही होजाय [illegible]की इच्छा सघन होयकें पृथक् स्थित होयहै वाकोही नाम प्रकृतिहै अक्षरब्रह्म जीव नहिं कहावेहै ब्रह्म कूटस्थ अव्यक्त आदिशब्दनसों कह्योजावें हैं सृष्टिकी आदिमें ( सदेवेदमग्रआसीत् असदेवेदमग्र-आसीत् तमएवेदमग्र आसीत् ) इत्यादिकनमें असत् सत् तम आदि शब्दनसों भी अक्षरहीकों ग्रहण करनो ॥ १०१ ॥ अक्षर है सो पुरुषोत्तमसों न्यारो होयकरके स्थितरहें है वो अक्षरब्रह्महीजगत्को कारणहै वामें ही कार्य रहेहै अर्थात् पृथ्वी जलादिकनके आवरणसहित कोडन ब्रह्माण्ड वा अक्षर ब्रह्ममें स्थित रहे हैं वे अक्षरब्रह्म मूल पुरुषोत्तममें अभेदसम्बन्धसों रहें हैं ॥ १०२ ॥

**प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भवः ॥
अन्तर्याम्यवतारादिरूपे पादत्वमस्य हि ॥
॥ १०३ ॥ हंसाकृतित्वकथने पुच्छत्वम्प-रमात्मनः ॥ तदुपासनया ज्ञानात्परमात्मत्व-मस्य हि ॥ १०४ ॥ ज्ञानमार्गे त्वेतदेव सेव्यं कृष्णस्ततोऽधिकः ॥ रूपान्तरन्तु तस्यैव सर्व-सामर्थ्यसंयुतम् ॥ १०५ ॥**

तत्त्वदीपप्रकाशः।

एषा स्थितिः सर्वदा कदाचित्पुनः पुरुषोत्तमश्चेदाविर्भवति तदाक्षर-मपि बहुधा भवतीत्याह ॥ प्रभुत्वेनेति ॥ प्रभुर्वैकुण्ठवासी लोको वैकुण्ठः जीवजडाकारेण प्रादुर्भवतीत्यर्थः ॥ अतएव वैकुण्ठवासिनो मुक्ताः ॥ ततोऽपि पुरुषोत्तमो महान् ॥ अतएवाभेदश्चास्मदादीनामिति वाक्यं संगच्छते। अंतरुपासनायामन्तर्यामिरूपेण प्रकटो भवति तदा सद्यो-

मुक्तौ ज्ञानिनस्त्वच्चरणारविन्दमेव प्रविशन्ति तदक्षरस्य पादत्वम् ॥ तथावतारेपि ॥ चैद्ये च सात्वतपतेश्चरणम्प्रविष्ट इति ॥ आदिशब्देनाधिदैवाधिरूपेष्वपि॥ १०३॥आनन्दमयनिरूपणे हंसाकृतित्वकथनम् ॥ तत्र ब्रह्मपुच्छम्प्रतिष्ठेति ब्रह्माक्षरमानन्दमयस्य पुच्छमिति ॥ निंसन्देहाय परमात्मपदम्॥ एवमनेकभावापन्नमपि ज्ञानमार्गेऽक्षरत्वेनैव सेव्यमित्याह ॥ **तदुपासनयेति** ॥ प्रथमतस्तस्यैव निदिध्यासनेन यत् ज्ञानमुत्पद्यते तेनास्याधिकारिणः परमात्मत्वमेव नत्वक्षरमात्रतेति ॥ भगवद्वचनादवगम्यते ॥ ते प्राप्नुवन्ति मामेवेति हिशब्दार्थः ॥ भक्तिमार्गे त्वारम्भत एव परमानन्दः । ज्ञानमार्गे त्वन्तत इति विशेषः । तथापि ज्ञानमार्गे अक्षरमेव सेव्यम्॥ एवमभेदेपि वैलक्षण्यन्निरूप्य यदर्थमेतन्निरूपितन्तदाह ॥ **कृष्णस्ततोऽधिक इति** ॥ अक्षरादपि चोत्तम इत्यादिवाक्यं समर्थितम्भवति तस्यैव रूपान्तरङ्काल इत्याह ॥ **रूपान्तरमिति** ॥ तस्य रूपान्तरत्वे हेतुमाह ॥ **सर्वसामर्थ्यसंयुतमिति** ॥ सर्वाकारेण भवनातिरिक्तं यावत्किञ्चित्सामर्थ्यं मायाविशेषः॥तत्संयुतन्तेनास्य सर्वाधिकारित्वन्निरूपितम् ॥ १०४ ॥ १०५ ॥

आवरणभंगः ।

एषास्थितिरिति ॥ ॥ मूलम्पुरुषोत्तमस्तमाधारं कृत्वा या स्थितिः सेत्यर्थः । नच पुरुषोत्तमस्याप्याधारान्तरमपेक्षणीयम् । मूले मूलाभावादमूलम्मूलमिति न्यायात् ॥ एवंसति तद्धामपरमम्ममेत्यादिभिर्धर्मभेदे स्मृते तद्भिन्नत्वशङ्कोदेति सा चाक्षरमंबरान्तधृतेरित्यत्राक्षरशब्दवाच्यत्वस्य ब्रह्मणि व्यवस्थापनात्परिहृता । स्वस्यैवाधारत्वमाधेयत्वञ्चेति तु विरुद्धधर्माश्रयत्वादेव सिद्धमिति न शंकावकाशः । जीवजडाकारेणाविर्भतीति । इदञ्च द्वितीयस्कन्धनवमाध्याये प्रसिद्धम् ॥ ततोपीति ॥ ॥ प्रभुत्वादपीत्यर्थः ॥ एवं स्वरूपकोटिस्थत्वेपि न्यूनत्वं समर्थितं शेषं स्फुटम् ॥ अत एवेति ॥ ॥ अक्षरात्मत्वादेवेत्यर्थः ॥ एतेन एकात्मवादस्यापि मूलमुक्तम् ॥ अत एवेति ॥ ॥ मुक्तत आधिक्यादेव अभेद इति वाक्यन्तु स्कान्दभारततात्पर्ये मध्वाचार्यैरुपन्यस्तम् । " अभेदश्चास्मदादीनां मुक्तानां हरिणा तथा । इत्यादि सर्वं मोहाय कथ्यते पुत्र नान्यथा ॥ " इति ॥ एवम्प्रमेयान्निर्णय उ-

क्तः ॥१०३॥ साधनफलाभ्यान्निर्णेतुमाहुः ॥ एवमनेकेत्यादि ॥ ॥ शेषं स्पष्टम्। अथकालस्य तद्रूपत्वेपि स्वतन्त्रत्वाय लक्षणादिकं वक्तुमाहुः ॥ तस्य स्वरूपान्तरमित्यादि ॥ " प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ सतोभिव्यञ्जकः कालो ब्रह्मतत्रितयं त्वहम् ॥ " इतिवाक्ये कालस्य ब्रह्मपदेनाक्षरब्रह्मरूपतोक्ता ॥ द्विधासमभवद्बृहदित्युपक्रमात् नतु तदुत्पत्तिः ॥ तेन रूपान्तरम् ॥ हेतुमिति ॥ ॥ गमकमित्यर्थः॥प्रकृतेरुपादानत्वमुक्त्वा सदभिव्यञ्जकत्वमात्रमुक्तमित्यनेन निमित्तरूपतया कारणत्वमित्यभिप्रेत्याहुः ॥ सर्वाकारेत्यादि ॥ ॥ एवम्प्रमाणतो निर्णय उक्तः ॥ १०४ ॥ १०५ ॥

ब्रजभाषाटीका ।

वामें प्रकार दिखावें है पुरुषोत्तमको सर्वदा आधारकरकें अक्षर स्थित रहेहै जब पुरुषोत्तम प्रकट होवेहै तब अक्षरब्रह्म भी बहुत प्रकारको होवेहै अर्थात् प्रभु वैकुंठमें निवास करेहै तब अक्षरब्रह्म वैकुंठलोकरूप तथा वैकुंठके जडजीवरूप होयकें प्रकटहोयहै याहीसों वैकुंठवासी जीव मुक्त कहेजावे हैं पुरुषोत्तम तो अक्षरसों भी बडेहैं याहीसों ( अभेदश्चास्मदादीनाम् )इत्यादिवाक्य संगत होयहै उपासनाकरवेसों जब अन्तर्यामीरूप करकें प्रकट होयहै तब ज्ञानी आपके चरणारविन्दमें प्रवेश होवेहै अक्षरब्रह्म आपके चरणरूपहै ऐसें ही अवतार धारण करें है तब भी अक्षर ब्रह्म आपके चरणरूपही रहें है आधिदैविकरूपनमें भी अक्षरब्रह्म पादरूप रहेहै ॥ १०३ ॥ वेदभी आनंदमय परब्रह्मको जहाँ हंसरूपकरके वर्णनकरें है तहाँ ( ब्रह्मपुच्छं प्रतिष्ठा ) या श्रुतिमें आनन्दमय परब्रह्मरूप हंसकी पूँछ अक्षर ब्रह्मरूप बतायोहै ऐसें अक्षरब्रह्म अनेकरूपहै तथापि ज्ञानमार्गमें तो अचिन्त्य अर्थात् जाको विचारकरवेमें नहिं आयसकें जाको वर्णन नहिं करसके ऐसें रूपसों ही अक्षरब्रह्मकी उपासना करेंहै उनकूँ क्लेश अत्यन्त होवेहै जब उपासनासों ज्ञानहोयहै तब परमात्माकूँ प्राप्तहोवेहै भक्तिमार्गमें तो

रूपनसों काल व्यवहारमें भी आवेंहै परन्तु कोई पुरुषके प्रत्यक्ष नहीं होयहै ( योन्तर्धावति जन्तुषु ) इत्याद्यनुसार जो सबके भीतर रहेहैं ( बहिर्मुख ) बाहिर जिनकी इन्द्रियनकी वृत्तिहै उनकूँ बाहिर कालका अनुभव होय परन्तु प्रत्यक्ष नहीं होय सच्चिदानन्दरूप भगवान् हि कालरूप होवेंहै तासों ज्ञानिनकूँ तो कालके भीतर सत् चित् आनन्द तीनों प्रकट दीखेहैं यह काल क्यों बनायो ? उत्तर—काल पुरुषोत्तमकी क्रियाशक्तिरूप है ताही सों भागवतमें कालकूँ पुरुषोत्तमकी चेष्टारूप लिख्योहै समस्तजगत्के उत्पन्नहोयवेमें ये काल निमित्तकारणहै याके देखवे सों कछु सिद्ध नहिं है किन्तु अर्जुनके तुल्य कालरूप देखवेसों भय मात्रही होय तासों क्रियाशक्तिमात्र यामें प्रधान राखीहै ताहीसों सबको निमित्तकारणहै और ( नित्यगः ) चलवेको याको स्वभावहै सदा चलतो ही रहेहै और सबको नियामक है सर्व जगत्कूँ अपने भीतर धरके आप सदा चलतो रहेहैं ताहीसों नित्यप्रलयकी भी सिद्धि है सबको लयकरे है ॥ १०६ ॥ १०७ ॥

विकृतावेव तच्छक्तिं सर्वोत्पत्त्यन्तभावनः ॥
ऐश्वर्यं भगवद्दत्तन्तत्रैव प्रतितिष्ठति ॥ १०८ ॥
अतएवेश्वरः प्रोक्तः सर्वान्तर उदीरितः ॥
आसुरादिमतेतस्मान्नान्यःसेव्यःकथञ्चन १०९

तत्त्वदीपप्रकाशः ।

इदं कृष्णस्य सामर्थ्यम्पुरुषोत्तमोऽक्षरातिरिक्त एवेत्याह ॥ विकृतावेवेति ॥ विकृतौ किङ्करोतीत्याकांक्षायामाह ॥ सर्वोत्पत्त्यन्तभावन इति ॥ केचिदस्यैवेश्वरत्वमाहुः ॥ केचिदन्तर्यामिणः ॥ तत्रास्येश्वरत्वे

हेतुमाह ॥ ऐश्वर्यम्भगवद्दत्तमिति ॥ मुख्योयमधिकारी तेन सर्वापेक्षया भगवत्सेवकेष्वयमन्तरङ्गः ॥ १०८ ॥ अस्य महत्त्वाय सेवकानामुपासनाप्रकारञ्चाह ॥ आसुरादिमते ॥ तस्मादिति ॥ १०९ ॥

आवरणभंगः ।

ईश्वरेण परिच्छिन्नङ्कालेनाव्यक्तमूर्तिनेत्यत्र विश्वपरिच्छेदकत्वमीश्वरत्वञ्चोक्तन्तद्विवेचयितुमाहुः । कृष्णस्येत्यारभ्यान्तरङ्ग इत्यन्तम् ॥ ॥ इदमिति ॥ प्रलायकत्वरूपं सामर्थ्यमिति॥"प्रभावम्पुरुषम्प्राहुः कालमेके यतोभयम्" इति ॥ वाक्ये प्रभावत्वेन कथनात्तथेत्यर्थः ॥ अन्तर्यामिण ईश्वरत्वम् "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इत्यत्रोक्तम् । अन्तरङ्ग इत्यनेन मूलस्थं सर्वान्तरपदं विवृतम् । सर्वापेक्षयाऽऽन्तर इति समासात् ॥ १०८ ॥ फलतः साधनतो निर्णेतुमाहुः ॥ अस्य महत्वायेत्यादि ॥ १०९ ॥

व्रजभाषाटीका ।

यह कालमें कृष्णकी सामर्थ है ॥ विकार जितनो है सब काल शक्तिको कियो है सब पदार्थके उत्पत्तिनाशमें निमित्त काल है कितनेक तो कालकूँ ही ईश्वर मानें हैं कितनेक अन्तर्यामीकूँ ईश्वर माने हैं तहाँ काल ईश्वर कैसेंहोय सकें यह शंका नहिं करनी भगवान्ने कालकूँ ईश्वरता दीनीं है सो सर्वदा कालमें ही रहे है ॥ ॥ १०८ ॥ जैसें राजा मुख्य अमात्यकूँ छत्रचमरगजादिकूँ देवे है ऐसें ही भगवान्को मुख्य अधिकारी काल है, जितने अधिकारी देवता हैं उन सबकी अपेक्षा यह अन्तरंगहै, असुरलोग कालकूँ ही ईश्वर माने हैं ईश्वरके तुल्य काल उनकूँ कृष्णेच्छाके अनुसार फलभी देता है ॥ १०९॥

मुख्याधिकारी कृष्णस्य प्रभुवत्फलसाधकः ॥ सूर्यगत्या तु तद्भेदाः सूर्यस्तस्याधिभौतिकम् ॥११०॥ आध्यात्मिके तु तद्भेदाः कचिदि-

च्छापि भेदिका ॥ विधिषेधप्रकारेण यः क्रिया-
शक्तिरुद्गतः ॥ १११ ॥

तत्त्वदीपप्रकाशः ।

तस्यान्यथाकरणं व्यावर्त्तयति ॥ प्रभुवत्फलसाधक इति ॥ तस्य परिज्ञानार्थन्तद्भेदानाह ॥ सूर्यगत्येति ॥ तस्याप्याध्यात्मिकादिरूपमस्तीत्याह ॥ सूर्य इति ॥ आधिभौतिकरूपन्तस्य सूर्यः । आध्यात्मिकं युगादि ॥ ११० ॥ रात्रौ युगाद्यभावात् भेदसिद्ध्यर्थमाह ॥ क्वचिदिच्छापीति ॥ एवङ्कालन्निरूप्य कर्म निरूपयति ॥ विधिषेधप्रकारेणेति॥ रूपान्तरन्तु तस्यैवेत्यनुवर्त्तते यथा कालो रूपमक्षरस्य तथा कर्म्मापि परमेतावान्विशेषः । कालः स्वतएव प्रकटः । अयन्तु पुरुषैर्विधिनिषेधप्रकारेण प्रकटीक्रियते ॥ अतः कालापेक्षया लोकानां हिताहितप्रदाने विशिष्यते ॥ अयञ्च क्रियारूपो धर्मिणो धर्मे प्रवेशात् ॥ १११ ॥

आवरणभगः ।

॥ अन्यथाकरणमिति ॥ उपासकपक्षपातेन भगवद्विसंमतकरणमित्यर्थः ॥ आध्यात्मिकाधिभौतिकयोः कालयोर्लोकशास्त्रप्रमाणकत्वायाहुः ॥ ॥ तस्य परिज्ञानार्थमित्यादि ॥ ॥ युगादीति ॥ ॥ आदिपदम्परमाण्वादिद्विपरार्द्धान्तकालोपलक्षकम् । परमाण्वादिलक्षणन्तु "चरमः सद्विशेषाणाम्" इत्यादिना तृतीयस्कन्धे निरूपितन्तत्सुबोधिनीतोऽवगन्तव्यम् । मयापि प्रस्थानरत्नाकरे तद्विमृष्टमिति नेह प्रपंच्यते ॥ एवमत्र प्रमाणादिचतुष्टयेन कालस्वरूपन्निर्णीतम् ॥ ॥ ११० ॥ ॥ कर्म निरूपयतीति ॥ ॥ अंशतः प्रमाणानुरोधित्वमंशतस्तदभावश्च बोधयितुन्तन्निरूपयतीत्यर्थः ॥ ॥ अयन्त्विति ॥ ॥ क्रियाशक्तिर्यस्य तादृशो भगवान् ॥ ॥ अत इति ॥ ॥ प्रतिपुरुषं तेन तेन प्रकटीभावात् ॥ ॥ विशिष्यत इति ॥ असाधारणो भवतीत्यर्थः । एवं प्रमाणान्निर्णय उक्तः । पूर्वं प्रमाणप्रकरणत्वात्प्रमाणानुरोधिकर्मण एव स्वरूपं विवृतन्न सर्वस्येति प्रकृते प्रकरणे प्रमाणाननुरोध्यपि निवेश्य तत्स्वरूपमाहुः ॥ अयञ्चेत्यादि ॥ एवम्प्रमेयान्निर्णय उक्तः ॥ १११ ॥

व्रजभाषाटीका ।

कालके ज्ञान होयवेकेलिये कालके भेदनकूँ कहे है (सूर्यगत्येति)

सूर्यकी गतिसों याके भेद मालूम पडें हैं कालको आधिभौतिकरूप सूर्य है ॥ ११० ॥ कालको आध्यात्मिक रूप सत्ययुग त्रेता द्वापर आदि युग परमाणुसों लेकर घडीपहर महिना वर्ष ब्रह्माकी आयुष्यतक है, कहीं कहीं भगवान्‌की इच्छाभी कालको भेद करदें है जैसें रात्रिको बिभाग इच्छाकृत है ॥ कर्मको निरूपण करें है ( विधिषेधेति ) कर्मभी अक्षरकोही एक रूपान्तर है जैसें काल है तैसेंही है परन्तु इतनों फर्क है काल स्वतः प्रकट होवे है कर्मकूं विधिनिषेधकें प्रकारकरकें पुरुष प्रकट करें है कालकी अपेक्षा लोकनकें हित अहित करवेमें कर्मकी विशेषता है करवेवारे पुरुषकूं खोटो कर्म दुःख देत है अच्छो कर्म सुखदेत है कर्मभी क्रियारूप है ॥ १११ ॥

**तत्कर्म्म प्रगटन्तावत् यावत्फलसमापनम् ॥**
**तदेकम्भगवद्रूपं साधारण्येन सर्वगम् ॥११२॥**
**अग्रपश्चाद्भावभेदाद्द्विधा प्रकटमुच्यते ॥ सृष्टौ**
**साधारणन्तद्धि स्वांशेन प्रकटं यथा ॥ ११३॥**

तत्त्वदीपप्रकाशः ।

कालवत्स न नित्यप्रकटः । किन्तु फलदानपर्यन्तमेवेत्याह ॥ यावत्फलसमापनमिति ॥ तस्य प्रतिपुरुषम्भेदो भविष्यतीत्याशंक्याह ॥ तदेकम्भगवद्रूपमिति ॥ व्यापकन्तद्रूपम् ॥ तथापि येन यावद्रूपविधिप्रकारेण निषेधप्रकारेण वा प्रकटीक्रियते तस्य तावत्फलं दत्वा तदंशेन तिरोभवतीति साधारण्येनापि सर्वसम्भवान्नप्रतिसर्म्मव्यवस्थेत्यर्थः ॥ ॥ ११२ ॥ तर्हि एकः कथं युगपत्सुखदुःखे प्रयच्छतीत्याशंक्याह ॥ अग्रपश्चाद्भावभेदादिति ॥ तस्यैकत्वे प्रमाणमाह ॥ सृष्टौ साधारणमिति ॥ कालङ्कर्म्म स्वभावञ्चेति वाक्यात्सृष्टिकाले यादृशं रूपन्तेनपरिच्छेद्यं सएवांशः प्रकटः ॥ ११३ ॥

आवरणभंगः ।

॥ कालवदित्यादि ॥ ॥ फलभोगान्तरङ्कर्मनाशस्मरणात्तथेत्यर्थः ॥ एतेन फलान्निर्णय उक्तः॥ कर्मणः सकाशान्नेश्वरमेव फलमिति । नच नित्यकर्मफले व्यभिचारः शंक्यः । नच ग्रस्तमनन्तरमित्यस्य दशामरन्यायेन योऽन्यत्वात् । अन्यथा तादृशकर्माभ्यासोत्तरं विशेषशुद्ध्यभावेऽग्रे ज्ञानोदयविरहप्रसङ्गादिति ॥ ॥ तस्येति ॥ ॥ उक्तरीत्या असाधारणस्य न प्रतिकर्मव्यवस्थेति ॥ न प्रतिपुरुषमदृष्टरूपकर्मभेद इत्यर्थः ॥ तथा चादृष्टापूर्वादिशब्देनैतदंश एवोच्यते प्रारब्धसाश्रितक्रियमाणत्वमेतस्यैवास्थाभेदेन भवतीति कर्मनानात्वकल्पनमतिगौरवग्रस्तमेवेति भावः॥११२॥ ॥युगपदिति ॥ प्रतिपुरुषभेदोऽप्येककाले ॥ अग्रपश्चाद्भावभेदादिति ॥ ॥ येन पुंसा यस्मिन्काले विधिप्रकारेण प्रकटितस्तस्मिन्नेव काले तदितरेण पुंसा निषेधप्रकारेण प्रकटीक्रियत इति प्रकारस्याग्रपश्चाद्भावभेदादेकस्मिन्नेव काले द्विप्रकटं सत् तस्य तस्य युगपदेव तत्तत्प्रयच्छतीत्यर्थः ॥ ॥ तस्येति ॥ साधनस्वरूपफलैरेवमुपपाद्यमानस्य नचैकत्वं ग्रहैकत्ववदविवक्षितमिति वाच्यम् । कालेपि तथात्वापत्तेः ॥ एतेषामुपादेयत्वेनोद्देश्यत्वाद्ग्रहन्यायस्यात्राप्रवृत्तेश्च ॥ अन्यथाप्रायपाठबाधापत्तेश्चेति । ननु सृष्टिप्रारम्भे विधिषेधप्रकारस्याभावात्तदानीन्तत्प्राकट्याभावे महदादिजन्मानुपपत्तिरित्यत आहुः ॥ ॥ सृष्टीत्यादि ॥ तथाच कालो यथा भगवदिच्छया गुणसाम्यमपाकृत्य रज उद्रेचयति तथा कर्मापि भगवदिच्छया महदादिरूपं परिच्छेदुं तावतैवांशेन प्रकटीभवतीत्यर्थः ॥ इयमेवोपपत्तिरुत्तरार्द्धेऽप्यवगन्तव्येत्याहुः ॥ ११२ ॥

व्रजभाषाटीका ।

यामें धर्म भगवान्को प्रवेश होय तब कर्मफल दें है कालके समान कर्म सदा प्रकट नहिं रहे हैं, करवेवालेकूँ फल नाहिं मिले जहाँतक कर्म प्रकट रहे हैं फिर लुप्त होजाय है । कर्म व्यापक है और एक है विधिके द्वारा वा निषेधकरके जा पुरुषसों कर्मको जितनो अंश प्रकट कियोजाय है वितनो अंश प्रकट होयके वाकूँ वितनो ही फल देके लुप्त होजाय है तासों साधारणरीतिकरके एकही कर्मसों सब कार्य होवें है जीवजीवकी साथ न्यारेन्यारे कर्म नहिं माननें ॥११२॥ कर्म एकहै तो एकसाथ कोई प्राणिनकूँ दुःख और कोईनकूँ सुख कैसे देसकें है ऐसी शंका नहिं करनी जा कालमें

कोई पुरुषनें सुकर्म प्रकट कियो वाही कालमें दूसरे पुरुषनें विषिद्ध कर्म कियो तासों प्रकारमें अग्रपश्चाद्भावको भेदहै फिर दोनों एकही कालमें प्रकट भयो कर्म पुरुषभेदसों सुखदुःख दे हैं तहाँ सृष्टिप्रारम्भमें तो विधिनिषेधको प्रकार हतोही नहीं तासों कर्मभी वासमय प्रकट नहिं भयो होयगो फिर विनाकर्म महत्तत्त्वादिकनकी उत्पत्ति कैसें भई यह शंका नहिं नरनी क्योंकि वा समय साधारण कर्म विद्यमान हतो अर्थात् जैसें काल है सो भगवान्की इच्छासों तीनों गुणनकी समताकों मेटकरके सृष्टिप्रारंभसमयमें रजोगुणकूँ बढाय देतहै ऐसें साधारण कर्मभी भगवान्की इच्छा करकें महत्तत्त्वादिकनको परिच्छेदकरवेकूँ वितने अंशकरकें प्रकट होय है ॥११३॥

**कालवत्सकलं रूपमङ्गन्तद्वशगन्तथा॥ इच्छामात्रप्रकटनं सर्वथा तत्तिरोहितम्॥११४॥ सर्ववस्त्वाश्रितम्पश्चात्स्वभावोऽयं हरेस्तनुः॥ वस्तूद्गमतिरोभावैस्तथा सत्वादिभिः पुनः११५**

तत्त्वदीपप्रकाशः।

अस्यापि चिदानन्दादितिरोभावादिः कालवदेवेत्याह ॥ कालवदिति ॥ विशेषमाह ॥ तद्वशगमिति ॥ यत्रयः कालवशे भवति तमेव व्याप्नोति नत्वन्यमित्यर्थः ॥ एवङ्कर्म्मं निरूप्य स्वभावन्निरूपयति ॥ इच्छामात्रेति ॥ भगवदिच्छारूपेण प्रकटो भवति न सच्चिदानन्दरूपेण ॥ ११४ ॥ तस्य स्वरूपं व्यवहारोपयोग्याह ॥ सर्ववस्त्वाश्रितमिति ॥ तद्रूपं जगदाधारं स्वांशभेदेन तत्रतत्र तिष्ठति॥ तत्रापि न लीनः। नापि वस्तुनः पश्चाद्भागे तिष्ठति। किन्तु पश्चाद्भागे सर्वं स्थापयित्वा स्वयमेव प्रकटो भवति। यथा स्वभावदुष्टानां ज्ञानादिकं तिरस्कृत्य स्वरूपेण प्रकटस्तदाह ॥ पश्चादिति ॥ एतस्य कार्यवत्स्वरूपम्मा-

भवात्वित्याह ॥ हरेस्तनुरिति ॥ अस्याविर्भावतिरोभावयोरुपपत्तिमाह ॥ वस्तूद्गमेति ॥ अस्योद्गमतिरोभावयोर्वस्तुनियामकम् ॥ तथा सत्वादिगुणाः ॥ ज्ञानं कर्म च ॥ अतो बहुधोद्गमः ॥ तस्य द्रव्याविर्भावेणाप्याविर्भावः । विरोधिगुणप्रादुर्भावे पूर्वस्वभावो निवर्तते अन्यश्चोदेति ॥ तथा मन्त्रशास्त्रादिभिरपि ॥ अतो बहुधोद्गमतिरोभावौ ॥ ११५ ॥

आवरणभंगः ।

॥ अस्यापीत्यादि ॥ एवञ्च सर्वकार्माणि मनसेत्यादौ बहुवचनं लौकिकक्रियापरम् । दानहिंसादिषु धर्माधर्मादिप्रयोगोऽभिव्यञ्जकोपाधिनाभाक्त इति ज्ञेयम् । नच कर्मण एकत्वेपि यदंशो येनोद्गमितस्तस्य तत्सम्बन्धित्वेनैव फलदायकत्वादमूर्तस्य च दानायोग्यत्वात् " पुण्यदःपुण्यमाप्नोति पापदः पापभाग्भवेत् " इत्यादिवाक्यानुपपत्तिः । दानस्य स्वसत्तापरित्यागपूर्वकं परसत्तापादनात्मकत्वेन पूर्वक्रियया अभिव्यक्तस्य पुण्यादेस्तदंशस्योत्तरकालीनया दानक्रियया परसम्बन्धापादने वचनबलेन पुत्रेष्ट्यादिवद्व्यधिकरणफलोत्पादकत्वस्य सुखेनोपपत्तेः॥ अमूर्तत्वस्यात्मगुणभूतादृष्टात्मककर्मनानात्ववादिमतेपि तुल्यत्वाच्च । अत एव विश्वामित्रादेस्त्रिशंकादीनां स्वर्गादिरप्युपपद्यते । एवं सति विहितनिषिद्धप्रकारकक्रियाभिव्यंग्या क्रिया कर्मेति तल्लक्षणं सिद्ध्यति । अत्र क्रियाफलस्य स्वर्गादेर्वारणाय क्रियेति । लौकिकादिक्रियावारणाय विहितेत्यादि ॥ कर्मैकत्वनिरूपण एव स्वभावैक्ये प्रमाणस्योक्तत्वात्प्रमेयेण तन्निरूपयति ॥ ॥ भगवदिच्छेत्यादि ॥ एतेन मूले व्यधिकरणपदो बहुव्रीहिर्बोधितः ॥ इच्छामात्रेण रूपेण प्रकटनम्प्राकट्यं यस्येति ॥ सर्वथा तेषां सच्चिदानन्दानान्तिरोधानं यस्मिन्निति । दुग्धमृत्सूत्रादिकन्दधिघटपटादिरूपेणैव परिणमति नेतरेण रूपेण । तत्र तादृशी भगवदिच्छैव हेतुः । मयूराश्चित्रिता येनेति वाक्यात् ॥ तथा च सैव परिणामहेतुभूता इच्छा स्वभाव इति वक्तुं शक्यं यद्यपि तथापि " कालङ्कर्म स्वभावञ्च मायेशो मायया स्वया । आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे " इति वाक्ये उपादानगोचरतया कालादिवद्भिन्नतया च निर्देशान्नेच्छास्वभावः । किन्तु इच्छाकारेण प्रकटो भवति बुद्धिरिव विज्ञानरूपेण । तथा सच्चिदानन्दरूपेणापि न प्रत्यक्षीभवति तेन तथेत्यर्थः ॥ ११४ ॥ ॥ तस्येत्यादि ॥ यथा कालोतीतानागतचिराक्षिप्रादिव्यवहारसाधकतया निराधारव्यवहारोपयोगी । यथाच कर्म प्रतिनियतभोगसाधकतया चेतनाधारमेव व्यवहारोपयोगि । तथा स्वभावं कथमुपयुज्यत इत्याकांक्षायामाहे-

त्यर्थः ॥ ॥ जगदाधारमिति ॥ चेतनाचेतनवस्त्वाधारमित्यर्थः ॥ स्वरूपेण प्रकट इति तादृशानां स्वरूपे दृष्टमात्र एव दुष्टोयमित्यादिप्रतीतेरुदयात्तथेत्यर्थः॥ पश्चादिति ॥ क्रियाविशेषणमेतत् ॥ तथा च सर्ववस्तुपश्चाद्यथास्यात्तथा सर्ववस्तुष्वाश्रितामित्यर्थः ॥ एवम्प्रमेयादेस्तन्निर्णय उक्तः॥ ॥ एतस्येति सकल जगदाश्रितत्वेन प्रतिपाद्यमानस्य ॥ अतो बहुधोद्गम इत्यादि ॥ एतेन साधनादुक्तः ॥ ११५ ॥

ब्रजभाषाटीका ।

कालके समान कर्ममें भी चित् आनन्द आदिको तिरोभाव है कालके समानही एक होकर व्यापक है और जो कालके वश होरह्यो होय वाकूँही कर्म व्याप्त करसके है औरकूँ नहिं व्याप्त करसकेहै ॥ स्वभावको वर्णन करें है ( इच्छामात्रेणेति ) स्वभावहै सो सच्चिदानन्दरूप करकें नाहि प्रकट होयहै किन्तु भगवान्की इच्छारूपकरकें स्वभाव प्रकट होयहै, स्वभावमें सत् चित् आनन्दको सर्वथा तिरोभावहै॥११४॥अर्थात् पदार्थनकूँ (परिणाम ) बदलवेवारी जो भगवदिच्छा वाहीसों स्वभाव कहेहै वो स्वभाव सब दार्थनमें रहे है दूधको दधि बनजावेहै दूधको तैल नाहिं बनजावे तथा मृत्तिकासों पट नहि बने घटही बनेहै डोरानसो घडा नहिं बने कपडाही बने है यामें भगवानकी इच्छाही कारणहै मयूरमें चित्र विचित्र रंग होजावे है हंस सपेत होजावेहै इत्यादि परिणामको कारण स्वभावहीहै स्वभाव इच्छारूपकरकें प्रकट होयजावेहै जैसे बुद्धि विज्ञानरूप करके प्रकट होयजावे है, जैसे काल निराधार होकरकें भूतभविष्यत वर्तमानादि व्यवहारको उपयोगीहै, कर्म चेतनको आधार होयके व्यवहारको उपयोगीहै ऐसे स्वभावहै सो चेतन अचेतन सब पदार्थनको आधारहै अंशनकरके एक एक वस्तुकोभी आधारहै और स्वभाव है सो वस्तुके पीछे अथवा वस्तुमें लीन नहि रहेहै किन्तु वस्तुकूँ अपनें भीतर स्थित करकें स्वभाव आगें प्रकट होजाय है ॥ जैसें दुष्ट पुरुषको स्वभाव वाके ज्ञानकूँ दबायकरकें स्वरूपकरकें प्रकट

होजावे है तथा पदार्थके साथही प्रकटहोवें है, पदार्थके साथही याको तिरोभाव होवें है तथा सत्वगुण रजोगुण तमोगुण ज्ञान कर्म मन्त्र आदिकभी पूर्व स्वभावको तिरोभावकरके दूसरे प्रकारके स्वभावकों प्रकट करदें है ॥ ११५ ॥

परिणामस्तु तत्कार्यं सर्वानुभवसाक्षिकम्॥सामान्यतो विशेषेण नप्रकाशःकदाचन ॥११६॥
एवङ्कालस्तथा कर्म्म स्वभावो हरिरेव सः॥ अतस्तदुद्गमः शास्त्रे न कदाचिदुदाहृतः॥ ११७॥

तत्त्वदीपप्रकाशः ।

तस्य सद्भावेऽर्थापत्तिम्प्रमाणयति ॥ परिणामस्त्विति ॥ स्वभावस्य परिणाम एव कार्यम् ॥ अतः स्वभावः सर्वदा अनुमानगम्यः । नकदाचिदपि प्रत्यक्ष इत्याह ॥ सामान्यत इति ॥११६॥ उपसंहरति॥ एवमिति॥तत्वाधिक्यपरिहारायाह॥हरिरेव स इति ॥ स कालादिर्हरिरेव॥ तत्रोपपत्तिमाह ॥ अतस्तदुद्गम इति ॥ शास्त्रेभागवते॥११७॥

आवरणभंगः ।

अर्थापत्तिं प्रमाणयतीति ॥ फलान्निर्णयं वक्तुन्तां प्रमाणयतीत्यर्थः ॥ एवञ्च परिणामहेतुः पदार्थः स्वभाव इति । तल्लक्षणङ्कार्यमुखेन फलति ॥ ११६ ॥ ॥ ॥ उपसंहरतीति ॥ एवमक्षरादयश्चत्वारोर्था उक्तास्तेषान्तत्वत्वं वारयितुमुपसंहरतीत्यर्थः ॥ ॥ ततोऽत्रेति ॥ हरित्वे उद्गम इति ॥ व्युच्चरणादिरूपा उत्पत्तिः ॥ कालादिरिति ॥ ११७ ॥

व्रजभाषाटीका ।

परिणामरूप कार्यकेद्वारा ही स्वभाव जान्यो जायहै स्वभावको प्रत्यक्ष ज्ञान कोईकूँ कभी नहिं होयहै ॥११६॥ याप्रकार काल कर्म स्वभाव भगवान् हरि आपहीहैं याहीसों भागवतादिकमें पृथ्वीजलादिकनके समान इनको बननों नाहिं लिख्योहै तहां काल कर्म

स्वभाव इनकी उत्पत्ति नहिं होयवेसों कार्यमें गणन नहिं करोहो तो कारणमें गणना होनी चाहिये यह शंका नहिं करनी॥११७॥

**सर्वसाधरणत्वेन न तत्तत्वं तदेव तत्॥अभावः कारणश्चात्र ध्वंसश्चापि तदुच्यते॥११८॥ कार्यादिशब्दवत्तस्मिन्सापेक्षा वृत्तिरेतयोः॥ अपृथग्विद्यमानत्वान्नधर्मैरधिको गणः ॥ ११९ ॥ इति कारणप्रकरणम् ॥**

तत्त्वदीपप्रकाशः।

तथापि कारणत्वात्तत्वता भविष्यतीत्याशंक्याह ॥ सर्वसाधारणत्वेनेति ॥ यथा भगवान्सर्वसाधारणत्वान्न तत्वकोटौ प्रविशति ॥ तथा कालादिरपि ॥ भगवत्त्वेनैवोपपत्तौ न पृथक्त्वम्। प्रागभावस्य कारणत्वात्तत्वता भविष्यतीत्याशंक्याह ॥ अभावःकारणश्चेति ॥ प्रागभावः कारणावस्थातो नातिरिच्यते ॥ तस्य भिन्नत्वकल्पनाया-म्प्रमाणाभावात्। अग्रिमजननज्ञानेनैव तस्यानुभवः ॥ अन्यथात्यन्ताभाव एव स्यात् ॥ तस्मात्पूर्वमभावस्तस्य न कारणम् ॥ नहि तेन कोपि व्यापारः क्रियते ॥ कार्येण परन्निवर्त्यते ॥ प्रसङ्गाद्ध्वंसादीनामपि कारणत्वन्निराकर्त्तुमाह ॥ ध्वंसश्चापीति ॥ ध्वंसोऽपि दण्डादिस्वरूपमेव ॥ तिरोभावशक्त्यतिरिक्तस्य ध्वंसस्य निरूपयितुमशक्यत्वात् ॥ तेन रूपान्तरं पश्यन् पूर्वरूपस्य तिरोभावमेव मन्यते ध्वस्त इति ॥ ॥ ११८ ॥ ननु कारणातिरिक्तरूपाभावे प्रागभावे प्रागभावादिशब्दप्रयोगः कथमिति चेत्तत्राह ॥ कार्यादिशब्दवदिति ॥ नहि घटरूपादतिरिक्ता कार्यता तथा दण्डरूपादपि नातिरिक्ता कारणता ॥ तथापि तयोर्यथा कार्यकारणप्रयोगः तथा प्रागभावादिप्रयोगोऽपि ॥ ननु संख्यादयो गुणाः सामान्यादयश्च सन्ति। ततः कथमष्टाविंशतितत्त्वानि तत्राह ॥ अपृथग्विद्यमानत्वादिति ॥११९॥ इति कारणप्रकरणम् ॥

आवरणभंगः ।

अक्षरस्य भगवदभिन्नत्वेन सन्देहाभावात् कालादीनामेवात्र ग्रहणम् । एवम्भावान्तरस्य तत्वताया निवारणेऽप्यभावस्य भविष्यतीत्याशङ्कां वारयितुमाहुः ॥ ॥ प्रागभावस्येत्यादि ॥ ॥ कारणत्वादिति ॥ ॥ असाधारणत्वान्मूलस्थमभावपदं व्याकुर्वन्ति ॥ ॥ प्रागभाव इति ॥ ननु घटत्वेन कपालत्वेन सामान्यकार्यकारणभावे सत्यप्येतेभ्यः कपालेभ्य एतद्घटोत्पत्तौ कपालत्वेन नियमासम्भवादेतत्कपालत्वेन नियमाङ्गीकारे च विनिगमनाविरहाद्बहुकपालजे घटे गौरवग्रासाच्च तद्देशनियामकतया प्रागभावसिद्धिः साम्प्रदायिकाक्षपादीयैः क्रियते ॥ तथाच येषु कपालेषु यद्घटप्रागभावः स एव घटस्तत्रोत्पद्यते इति तस्य कारणेन्तर्भावो न वक्तुं शक्यत इत्यत आहुः ॥ ॥ प्रागभाव इत्यादि ॥ यत्र कपालानि सिद्धानि घटाश्च श्वोभाविनस्तत्र सत्यामपि कारणतायां सति च प्रागभावे कारणान्तरेषु च सत्सु स कालो नास्तीत्यवश्यं वाच्यम् ॥ सच कालः साधारणो भवंस्तत्तत्फलजननाय फलानुकूलत्वरूपमेकं सकलतत्समवायित्वकारणगतमवस्थाविशेषं सम्पादयतीत्यवश्यमभ्युपेयम् । अन्यथा श्वोभावी पदार्थोऽयस्यात् । श्वोभावीति व्यवहारश्च बाध्येत ॥ एवंसति सकलकारणवृत्त्येकयावस्थया निर्वाहे सकलपालवृत्त्येकातिरिक्तप्रागभावकल्पना प्रमाणरहितैवेति । अवस्था च स्वरूपातिरेकेण नानुभूयत इति तादृशावस्थाविशिष्टङ्कारणमेव स इत्यर्थः ॥ नच प्रागभावानङ्गीकारे उत्पत्त्यनन्तरम्पुनरुत्पत्तिप्रसङ्ग इति वाच्यम् ॥ तदवस्थातिरोभावेनैव निर्वाहात् । नचेह कपाले घटोनास्तीति प्रतीतिस्तत्र मानम् । तस्या घटत्वावच्छिन्नप्रतियोगिताकाभावविषयतया सामान्यत्वेन प्रागभावाख्यविशेषानवगाहित्वात् । नच प्रागभावः सामान्य एवेति वाच्यम् । तस्य विनाशित्वेन यत्किञ्चित्प्रतियोग्युत्पत्तावपि तन्नाशसम्भवे इदानीमत्र कपाले घटोत्पत्त्या तन्नाशात् । जातेऽवयविनि कार्ये तदवयवत्वेन प्रतीयमानेषु कपालेष्वपि घटोनास्तीति प्रतीतिः स्यात् । प्रागभावप्रतियोगिरेकदैकत्रास्थितौ च तस्य नित्यत्वापातः स्यादिति न किंचिदेतत् । नच यत्र पक्वे घटे स्पर्शरूपरसगन्धानाम्पाकजानामुत्पत्तिस्तत्र प्रागभावं विना कथन्निर्वाह इति वाच्यम् । एकयाप्यवस्थया फलचतुष्टयोत्पत्तौ बाधकाभावात परिणामस्य स्वभावकार्यत्वात्तस्य च कार्यैकोन्नेयत्वात् । ननु सत्कार्यवादे कारण एव सम्प्रविष्टस्य पूर्ववर्त्तित्वांशस्य कथंग्रहः । तस्य प्रागभावावच्छिन्नसमयवर्त्तित्वरूपत्वात् । तस्य च प्रागभावग्रहाधीनत्वादितिचेन्न कार्यविषयकाग्रिमजननज्ञानेनैव तद्ग्रहसम्भवात् । अन्यथा प्रागभावस्यापि कारणत्वेन तन्निष्ठपूर्ववर्त्तित्वस्यापि प्रागभावघटिततया तद्ग्रहण आत्माश्रयेण प्रागभावीयकारणताया एवातिदुर्ग्रह-

त्वापातात् । प्रागभावस्य कारणावस्थाव्यंग्यत्वेन तदनङ्गीकारे तदग्रहेण प्रागभावस्याप्यग्रहापाताच्च । नहि घटजननानुकूलाङ्कारणावस्थामपश्यतः कस्यापि इह घटो भविष्यति इदानीमत्र घटप्रागभाव इति बुद्धिरुदेति । अभ्यासपाठवादुदेतीति चेन्न । तथासति कारणादर्शनेपि तदुदयापत्तेः । अभ्यासपाटवादेव प्रागभावौसीनात्पूर्ववर्तित्वीयग्रहेणास्याप्यापत्तेश्च । कार्यपरत्वावच्छिन्नसमयावर्तित्वस्यैव पूर्ववर्त्तित्वात् । अग्रिमजननज्ञानगम्यस्य कालधर्मस्यैव च प्रथमपदार्थत्वात् । किञ्च कारणताघटकपूर्ववर्त्तित्वशरीरप्रविष्टस्यास्य कारणत्वे उच्यमाने तत्राप्यस्य प्रवेशाच्चक्रिकापत्तिः ॥ एतत्सर्वमभिसंधायाहुः ॥ अग्रिमेत्यादि ॥ ॥ अन्यथेति ॥ ॥ प्रागंशस्यानवगाह इत्यर्थः ॥ फलितमाहुः ॥ तस्मादित्यादि ॥ ॥ प्रागंशोदासीनाभावमात्रज्ञानस्यात्यन्ताभावविषयत्वात्कारणावस्थामपश्यतस्तूष्णीम्प्रतीयमानो यो भावः सकारणरूपो नेत्यर्थः॥ ननु प्रागभावोऽत्यन्ताभावाद्भिन्नः कारणावस्थाव्यंग्यत्वात् । ध्वंसाच्च भिन्नः कारणावस्थाव्यंग्यत्वात् । ध्वंसाच्च भिन्नः प्रतियोग्युत्पत्तिनाश्यत्वात् । भेदादपि भिन्नः संसर्गाभावरूपत्वादित्येवमभावान्तराद्भेदे साधिते अभावत्वेन प्रत्ययाद्भावेभ्योतिरिक्तः प्रागभाव एव सेत्स्यति । एवञ्च सिद्धे प्रागभावे कारणसमन्वयात्कुतो न तस्य कारणत्वमितिचेन्न । केवलप्रत्ययात्तदसिद्धेरितरभेदपूर्वकासिद्धौ च कारणावस्था समनियतस्य तदतिरेकासिद्धेः । सिद्धौ वा सामयिकत्वेन सिद्ध्याऽनादित्वाभावेन भवद्विचारितरूपस्य तस्यासिद्धेः । ताथाभूतस्य कारणताग्रहणे चक्रिकापत्तेश्च । ननु गन्धाद्यनधिकरणकालवृत्त्यभावत्वस्यादृष्टत्वावच्छिन्नानधिकरणकालवृत्त्यभावत्वस्य च प्रागभावध्वंसरूपत्वान्नेदन्दूषणमिति चेन्न तयोस्तथात्वे मानाभावात् । प्रलयदशायान्द्रष्टुः कस्याप्यभावात् । ईश्वरः पश्यतीति चेत् । तर्हि तमेव पृच्छ तद्वाचैव मंस्यामो न भवद्वाचेति दिक् । एवञ्चाव्याप्यवृत्तिसंयोगादेस्तत्तदवच्छेदेनोत्पत्तिरपि दृष्टादृष्टकारणकलापादेव । आत्मादावपि ज्ञानाद्युत्पतेः प्राक् प्रागभावो नास्त्येव । अन्यथा प्रतीयेतैव । प्रतीयमानस्त्वत्यन्ताभाव एव । प्रागंशानवगाहादित्युक्तत्वात् । ध्वंसप्रागभावाधिकारणेनात्यन्ताभाव इति तु प्रवादमात्रमिति । औदासीन्येन प्रतीयमानस्याकारणत्वे गमकमाहुः ॥ ॥ नहीत्यादि ॥ ॥ तथाचासाधारणकारणत्वेनाभ्युपगम्यमानस्य तस्य व्यापाराभावात्कारणता नाङ्गीकर्तुं शक्या व्यापारातिरिक्तस्य व्यापारवत एवासाधारणकारणत्वदर्शनात् । कार्यव्यापाराभावे च तत्सत्ताया एव दुरधिगमत्वाद्दूरापास्ताकारणतेत्यर्थः ॥ कार्येण भावकानाशत्वादपि न कारणतेत्याहुः ॥ ॥ कार्येणेत्यादि ॥ ॥ कार्येण भावकारणध्वंस एव लोके क्वचिद्दृष्टोऽश्वतर्यादिगर्भनिष्क्रमणादौ नत्वभावरूपस्यापि

कारणस्य अन्यथा प्रतिबन्धकध्वंसात्यन्ताभावाभ्यामपि दाहो जायते इति दाहे नापि क्वचित्तयोर्नाशोद्दश्येत । अभ्युपगमसिद्धस्य युक्तिमूलत्व एव निर्वाहात् । नच प्रत्यक्षमेव तत्र मानं नयुक्तिरिति वाच्यम् । तस्य विप्रतिपन्नत्वेन तद्विषयकप्रत्यक्षस्यैवाभ्युपगंतुमशक्यत्वादिति न किञ्चिदेतादित्यर्थः ॥ ननु मास्तु प्रागभावोऽतिरिक्तस्तथापि पूर्वकल्पप्रलयकाले उत्तरसृष्ट्यभावात्तद्ध्वंसे च तदुत्पत्तेरुत्तरसृष्टिं प्रति पूर्वप्रलयध्वंसस्यैव वा प्रतिबन्धकध्वंसत्वेन रूपेण कारणतास्तीति तस्य तत्त्वान्तरत्वं दुर्वारमिति चेत्तत्राहुः ॥ ॥ प्रसङ्गादित्यादि ॥ ॥ आहेति ॥ ध्वंसस्वरूपमाहेत्यर्थः ॥ दंडादिस्वरूपाभिन्नोध्वंस इत्यत्र हेतुमाहुः ॥ ॥ तिर इत्यादि ॥ ॥ तिरः अप्रकटं भावयतीति तिरोभावस्तिरोभवनं वा तिरोभावः । उभयथापि निमित्तोपादानान्यतरस्वरूपातिरिक्तो ध्वंसो न निरूपयितुं शक्यः । तदतिरिक्तस्यादर्शनात् । तथाच कार्यप्रतिकूला कारणावस्थैव ध्वंस इत्यर्थः ॥ नन्वाकारान्तरमतिरिक्तं दृश्यत इति चेत्तत्राहुः ॥ ॥ नन्वित्यादि ॥ ॥ तथा चाकारान्तरमपि तद्धर्म एव नतु धर्मातिरिक्तः ॥ अन्यध्वस्त इति प्रत्यये ध्वंसस्य घटविशेषणता नप्रतीयेत ॥ तादृशप्रत्ययबलाच्च पक्के रक्तिमेव ध्वस्ते ध्वंसाख्यमाकारान्तरमेव निश्चीयत इत्यर्थः ॥ नचाभावमुखप्रत्ययोत्र बाधक इति वाच्यम् । त्वन्मते तमःप्रत्ययवदस्याप्यत्राबाधकत्वात् ॥ नच घटोन्मज्जनापत्तिः । अवस्थायाः सत्वात् । तथैव कारणकलापविघटनाच्च ॥ ११८ ॥ प्रागभावादिपदप्रयोगं साधयितुमुपपत्तिकथनायाहुः ॥ ॥ नन्वित्यादि । तयोर्यथेति ॥ घटस्यानन्यथासिद्धनियतपश्चाद्भावित्वं दण्डस्य तादृशपूर्वभावित्वञ्चावेक्ष्य यथा घटदण्डयोः कार्यकारणप्रयोगस्तथा घटादेरग्रिमजननताभ्यान्तत्वाधिक्यान्निवारितम् । सन्तीति तत्तत्कृत्वोत्पत्तिकथनेन कारणाद्विभागस्य पृथक्स्थित्या च पृथक्त्वसंख्यापरिमाणपरत्वापरत्वानां श्रुत्या च सृष्ट्यादिविषयकबुद्धीच्छाप्रयत्नसंस्काराणां सृष्ट्यासामर्थ्यजदुःखस्य प्रार्थनादिना सुखस्य चानुमातुं शक्यतया ताभ्याञ्चादृष्टस्यापि स्वनुमेयतया तदा संहतोऽनेन संयोगस्य कण्ठोक्ततायाः गुरुत्वद्रवत्वस्नेहानाञ्चेदानीन्तनपृथिव्यप्तेजोदृष्टान्तसनाथेन पृथिवीत्वादिरूपेण हेतुनानुमातुं शक्यतया द्वेषस्यापि बु[illegible]ण सिद्धप्रायतया विशिष्टज्ञानान्यथानुपपत्त्या च सामान्यस्यापि सिद्धतया वक्तुं शक्याः सन्तीत्यर्थः ॥ अपृथग्विद्यमानत्वादिति ॥ ॥ पृथक् इतरव्यावृत्ताविदैविकरूपेण विद्यमानत्वम्पृथग्विद्यमानत्वं तस्मात् तृतीयस्कन्धादौ सृष्टिप्रक्रियायां यथैते देहवत्तया स्तुतिकर्तृतया चोक्तास्तथान्ये सामान्यादयः संख्यादयश्च नोक्ता इति धर्मैर्धर्मभूतैः संख्यासामान्यादिभिः कृत्वा गणः अष्टाविंशकः । अधिकसंख्याको नेत्यर्थः ॥ अत्रेदं

हृदयम् ॥ संख्यापरिमाणपृथक्त्वविभागपरत्वापरत्वबुद्धीच्छाप्रयत्नसंस्काराद्दृष्ट-सुखदुःखद्वेषगुरुत्वद्रवत्वस्नेहानां यथासम्भवं तत्वान्यादायैवान्वयव्यतिरेकग्रहणात्सामान्यस्य च तत्वसहभावेनैव पूर्ववर्त्तित्वग्रहणादन्यथासिद्धत्वेन संयोगस्य च स्पर्शेन्तर्भूतत्वेन कारणरूपतया पृथग्भूतत्वेन निबोध्यम् ॥ वस्तुतस्तु सामान्यादेरभाव एव सृष्ट्यारम्भसमयेऽब्रह्मणोऽद्वितीयत्वात् । बहुस्यामितीच्छोत्तरमपि "जातिव्यक्तिविभागोयं यथा वस्तुनि कल्पित" इति षष्ठस्कन्धवाक्यात्सामान्यस्य कल्पनैकशरणत्वमेव तस्मान्नैयायकाद्युपगतपदार्थानां श्रुतिपुराणाविरोधे लौकिकयुक्तियुक्तत्वेच कार्यकोटावेव निवेश इति भावः॥११९॥ इति कारणप्रकरणम्

ब्रजभाषाटीका।

जैसें भगवान् सर्वसाधारणहैं तासूँ तत्वकोटीमें भगवान्की गणना नहीं है ऐसेंही काल कर्म स्वभावभी सर्वसाधारण है तासूँ कारणभूत तत्वनमें इनकी गणना नहीं है किन्तु इन तीनोंकूँ भगवदात्मकता है नैयायकनके मतमें प्रागभावकूँ कारण मानें हैं वाकी भी तत्वनमें गणना होनीं चाहिये यह शंका नहिंकरनी क्योंकी कार्यके उत्पन्नभये पहली जो वा कार्यको कारणमें अभाव है वासों प्रागभाव कहेहै वह प्रागभाव कारणसों न्यारो नहिं है तासों वाकों इन कारणतत्वनसों अलग मानकरके तत्वकी अधिक संख्या बढायवेमें प्रमाण नहिं है क्योंकि आगे होयवेवारी कार्यकी उत्पत्ति देखकें वाको अनुभव होय है यहही अत्यन्ताभावमें और प्रागभावमें भेदहै तासों कार्यके पूर्व जो वा कार्यको अभाव है वो कारण नहिं है वह अभाव कार्यके उत्पन्नहोयवेमें कछुभी व्यापार नहिं करे है कार्य उत्पन्न होतेही वा प्रागभावकूं निवृत्त-करदें है ऐसेंही प्रध्वंसाभाव भी दंडादिरूपही है तिरोभावशक्तिसों अलग ध्वंसाभावको स्वरूप नहिं बतायसकें है तासों पदार्थके दूसरे रूपकूँ देखतो भयो पुरुष पहले रूपके तिरोभावकों देखकें ये कार्य ध्वस्तभयो ऐसें माने है ॥ ११८ ॥ शङ्का--कारणसों अलग

प्रागभाव नहिं होय तो अभी घटको प्रागभाव है इत्यादिवाक्य-नमें प्रागभाव शब्दको क्यों उच्चारण होनोंचाहिये ? उत्तर–जैसें घटादिकनसों अतिरिक्त कार्य नहिं है दंडादिकनसों अलग कोई कारण नहिं है तथापि लोकमें दंडादिकनसों घटादि बने है या रीतिसों बोले हैं तथा कारणसों कार्य बने हैं ऐसेंभी बोले है ऐसें ही अवस्थान्तरप्राप्त कारणमें प्रागभाव शब्दकाभी प्रयोग होय है ॥ शङ्का–संख्या, परिमाण, परत्व अपरत्व जाति आदि धर्मनकूं तत्वनमें गिणनों योग्यहै आप तत्वनकूं २८ अष्टाविंशति हि क्यों बतावोहो ? उत्तर–संख्याआदि जे गुणहैं वे इन तत्वनसों न्यारे होयकरकें नहिं रहें है तासों इन तत्वनमेंही उन गुणनको अन्तर्भावहै ॥ ११९ ॥ इति कारणनिरूपणम् ॥

**आनन्त्येपि हि कार्याणां गणभेदो द्विधा मतः॥समष्टिव्यष्टिभेदेन केवले जडजीवना१२०**
**सर्वेषां त्रिगुणत्त्वाद्धि त्रयो भेदाः पृथङ्मताः॥**
**आधिदैविकमाध्यात्ममाधिभूतमितिश्रुताः ॥**
**॥१२१॥सच्चिदानन्दरूपेण देहजीवेशरूपिणः॥**
**समष्टिव्यष्टिः पुरुषो जीवभेदास्त्रयो मताः१२२**

तत्त्वदीपप्रकाशः ।

एवं कारणं निरूप्य कार्यज्ञानार्थं तस्यावान्तरभेदानाह ॥ आनन्त्येपीति ॥ यद्यपि घटपटादिप्रकारेण ज्ञातुमशक्यं तथापि सर्वं कार्यं राशिद्वयात्मकम् । समष्टिरूपं व्यष्टिरूपञ्च । तच्च जीवजडात्मकम् । नानन्दांशस्तत्र प्रविशति । अतः केवलप्रकारेण विभागे क्रियमाणे जीवो जडश्च भवति नतु ततोतिरिक्तं किञ्चित् ॥१२०॥ कार्ये त्रैविध्यं निरूपयितुमाह ॥सर्वेषामिति॥ गुणानामपि त्रैविध्ये हेतुरप्रवक्तव्यः॥

भेदानाह ॥ आधिदैविकमिति ॥ अधिष्ठाता स्वतन्त्रो देव उच्यते । अभिमन्ता आत्मा । अनयोर्मध्ये अभिसंभवति सोऽधिभूतः ॥ १२१ ॥ त्रयाणामभेदायाह ॥ सच्चिदानन्दरूपेणेति ॥ सदधिभूतम् । चिदध्यात्मकम् । आनन्दोऽधिदैवमिति॥उदाहरणमाह ॥ देहजीवेशरूपेण इति॥ देहोऽधिभूतम् । जीवोऽध्यात्मा । ईशोन्तर्याम्यधिदैवः ॥ एवं रूपभेदमुपपाद्य समुदायेन प्रवृत्तौ कुत्र कस्य प्राधान्यमित्याकांक्षायामाह ॥ व्यष्टिरिति ॥ यद्यप्येते त्रयोऽपि पुरुषावतारास्तथापि देहाभिमानिन इति । जीवभेदा उच्यन्ते तत्रैव विद्यमानोऽप्यनभिमानित्वाद्ब्रह्म ॥ १२२ ॥

आवरणभंगः ।

एवं कारणरूपस्य प्रमेयस्य स्वरूपप्रमाणसाधनफलैस्तदष्टाविंशतितत्वात्मकमेवेतिनिर्णय उक्तः ॥ अतःपरं कार्यस्यानन्त्येऽप्येवं निर्णयं वक्तुं प्रथमतः स्वरूपतोऽवगमार्थं प्रयतमाना आहुः ॥ ॥ एवमित्यादि ॥ ॥ समष्टीत्यादि ॥ सम्यक् अष्टिः एकत्वेन गणना यस्येति समष्टिर्महत्कार्यं ब्रह्माण्डात्मकं तस्य च राशिः ॥ " दृश्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः" इति वाक्याज्ज्ञेयः ॥ विगता अष्टिर्यस्येति व्यष्टिरवान्तरकार्यमस्मदादिशरीरात्मकम् । तद्राशिः प्रत्यक्षसिद्ध एव। एवमवान्तरकार्येऽपि देहस्थितकीटाद्यपेक्षयाऽस्मदादिदेहानां समष्टित्वं ज्ञेयम् ॥ पूर्वं कारणस्वरूपविचारणे तेषां सदंशत्वमुक्तमिति कार्यमपि सदंशात्मकमेव ॥ ननु चिदानन्दांशयोरपि तत्र प्रवेश इति शंकानिवृत्त्यर्थं कार्यस्य स्वरूपमाहुः ॥ ॥ तच्चेत्यादि ॥ तदिति समष्टिव्यष्टिरूपं कार्यञ्च समाहारि । तथा च यद्यप्युत्पद्यमानानि कारणानि सदंशरूपाण्येव तथापि कारणत्वदशायां तानि सजीवानि ॥ " अनेन जीवेन " इति श्रुत्या नामरूपव्याकरणे जीवानुप्रवेशात् ॥ ततश्च कार्यमपि तत्सहितमिति समाहृतं कार्यं जीवजडात्मकम् ॥ ननु केवलसदात्मकमित्यर्थः ॥ नन्वन्तर्यामिणोऽपि देहे विद्यमानत्वात्तस्य कुतो न कार्यकोटौ प्रवेश इत्यत आहुः ॥ ॥ नेत्यादि ॥ अकार्यस्यापि जीवस्यानन्दार्थं देहाभिमानित्वेन कार्यकोटिप्रवेशोऽन्तर्यामिणस्त्वनभिमानित्वमतो नानन्दांशस्तत्र प्रविशति । तेन सिद्धमाहुः ॥ ॥ अत इति ॥ ॥ केवलप्रकारेणेति ॥ जीवं पृथक्कृत्य तथा च चेतनाधिष्ठिताः समष्टिव्यष्टिदेहा जीवगणे प्रविशन्ति । जीवाः श्रेष्ठा ह्यजीवानामिति निर्देशात् ॥ तदनधिष्ठिता घटादयोऽवान्तरभूतानि च जडगणे तेनैवमपि राशिरूपेण ज्ञानं सकलकार्यज्ञानं सुखेन भवति । तदतिरिक्तस्य का-

र्यस्याभावादतः सर्वं कार्यं समष्टिव्यष्टिरूपेण जडजीवरूपेण च प्रमेयमित्यर्थः ॥ ॥ १२० ॥ कार्येत्यादि ॥ एवम्प्रमेयज्ञानार्थं कार्यद्वैराश्यं निरूप्य तद्बलज्ञानार्थं कार्यत्रैविध्यं निरूपयितुं स्वरूपत्रैविध्यमन्तरेण कारणत्रैविध्याभावात्तदभावे च कार्यस्यापि त्रैविध्याभावात्तन्निरूपयितुमाह । कारणे स्वरूपे च त्रैविध्यमाहेत्यर्थः ॥ सर्वेषामिति ॥ ॥ हीति निश्चये सर्वेषां कार्याणां त्रिगुणत्वाज्ज्ञापकाद्धेतोः श्रुताः अथाधिदैवमथाध्यात्मथाधिभूतमित्यादिश्रुत्युक्ता आधिदैविकादयस्त्रयो भेदाः पृथक् प्रत्येकं कारणे स्वरूपे च मता इति योजना। श्रुता इत्यनेन त्रैविध्योक्तौ प्रमाणं दर्शितं ननु गुणत्रैविध्येन सर्वत्र त्रैविध्यानुमानं तद्गुणत्रैविध्यमेव कुत इत्यत आहुः ॥ ॥ गुणानामित्यादि ॥ ॥ अग्र इति ॥ ॥ सच्चिदानन्दरूपेणेत्यनेनेत्यर्थः ॥ इदञ्च " सत्वं रजस्तम इति । निर्गुणस्य गुणास्त्रय-इत्यस्य सुबोधिन्यां स्फुटम् । सदंशान्निर्गतं सत्त्वमुच्यते, चिदंशाद्रजः, आनन्दांशाच्च तम इति विवरणात् ॥ ॥ भेदानिति ॥ ॥ त्रैविध्यप्रयोजकभेदान् भेदानां स्वरूपं व्याकर्तुं तदभिधायकपदप्रकृतिपदानि व्याकुर्वन्ति ॥ अधिष्ठातेत्यादि ॥ देवपदस्यार्थद्वयं विवक्षितम् ॥ स्वतन्त्राभिमन्त्रोरधिष्ठात्रभिमन्त्रोर्वा मध्ये अभिसंभवति स्वतन्त्राभिमन्तृत्वादिव्यवच्छेदको यो भवति सोधिभूत इत्यर्थः ॥ तदुक्तं द्वितीयस्कन्धे " आध्यात्मिकस्तु यः प्रोक्तः सोसावेवाधिदैविकः । यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः ॥ " इति उभयोर्विच्छेद इत्यर्थः ॥ तदनुप्रविश्य सच्चत्यच्चाभवदिति पुरप्रवेशोत्तरमेकस्यैव जीवान्तर्यामिभावपक्षे सदंशेन शरीरेणैव तथात्वव्यवच्छेदः क्रियत इति तदुभयविच्छेदकोंशो देहादिरूपोधिभूत इति ॥ एतेषाञ्चाधिदैविकादिशब्दानां व्युत्पत्तिपक्षमादाय क्वचिदर्थभेदेऽपि तत्र तत्र पर्यायताया एव प्रसिद्धेः । प्रकृते ऐकार्थ्यमेवेत्यभिप्रेत्य मूले आधिदैविकमाध्यात्ममधिभूतमित्युक्तम् ॥ १२१ ॥ ॥ त्रयाणामित्यादि ॥ ॥ जडजीवयोरिव त्रयाणां स्वान्त्र्याभिमानोभयविच्छेदैः कार्यैः सिद्धे भेदे स्वरूपमपि भिद्येतेत्याकांक्षायामभेदायाहेत्यर्थः ॥ ॥ सच्चिदानन्देत्यादि ॥ ॥ तथा चैकस्यैव पुंसः पाचकपाठकपालकत्ववदेकस्यैव सच्चिदानन्दरूपस्य ब्रह्मणो धर्मरूपसदादिपुरस्कारेण कार्यभेदे आधिभौतिकादिशब्दवाच्यत्वान्न स्वरूपतो भेद इत्यर्थः॥ ॥उदाहरणमाहेति ॥ एतान्परिचायनायोदाहरणमाहेत्यर्थः ॥ ॥ देहेत्यादि ॥ ॥ इदञ्च द्वितीयस्कन्धे " एको नानात्वमन्विच्छन् " इत्यत्र सिद्धम् ॥ तथाच ब्रह्मत्वेनैक्येपि भिन्नकार्यार्थं यथा भेदस्तथा सर्वत्रैवाभेदोऽभेदश्चावगन्तव्य इत्यर्थः ॥ ननु सांख्ये त्रैविध्यनिरूपणं कार्यकारणयोस्त्रिगुणात्मकत्वेनात्मविलक्षणत्वज्ञानद्वारा विविदावश्यकम् ॥ ब्रह्मवादे तु सर्वस्य ब्रह्मात्मत्वात्तस्यानावश्य-

कत्वेन व्यर्थं त्रैविध्यनिरूपणमित्याकांक्षायां तत्प्रयोजनं निरूपयति॥ एवमित्यादि ॥ एवं सच्चिदानन्दानामाधिदैविकादिव्यवहारप्रयोजकत्वज्ञापनेनैकस्मिन्नपि ब्रह्मस्वरूपेंशभेदेन तरतमभावमुपपाद्य समुदायेन राशिरूपेण,कार्यज्ञानार्थं प्रवृत्तौ कस्मिन्स्वरूपे कस्यांशस्य प्राधान्यमित्याकांक्षायां यस्मिन्स्वरूपे यत्प्राधान्यं तदाहेत्यर्थः ॥ तथा च त्रैविध्यज्ञानस्य स्वरूपतारतम्यनिश्चयद्वारा मूलरूपोत्कर्षज्ञापनं फलमित्यर्थः ॥ ॥ तदुदाहरन्ति ॥ व्यष्टिरिति मूले ॥ ॥ तथा च जीवशरीरेषु व्यष्टेरस्मदादिशरीरस्य सत्प्राधान्यं समष्टेः ब्रह्माण्डशरीरस्य चित्प्राधान्यं पुरुषशरीरस्यानन्दप्राधान्यमिति जीवव्यवस्थेत्यर्थः ॥ अत्राधिभौतिकादिक्रमो ज्ञेयः ॥ ननु प्रथमस्कन्धे पुरुषस्याद्यावतारत्वकथनात्कथं जीवभेदत्वमत आहुः ॥ ॥ यद्यपीति ॥ ॥ एतइति ॥ ॥ व्यष्टिसमष्ट्यावरणपुरुषात्मकाः पुरुषावतारा इति " यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादय" इति "आद्योवतारो यत्रासौ भूतग्रामो विभाव्यत " इति " आनन्दमयोवसान " इति वाक्यात्तत्वात्मकस्य क्षरपुरुषस्यावताराः । अभिमानिन इति षष्ठी अभिमानिसंबन्धिन इत्यर्थः ॥ ननु यथाभिमानित्वं जीवगमकम् । तथानन्दप्राधान्यं ब्रह्मगमकमतः पुरुषस्य जीवभेदत्वं न युक्तमित्याकांक्षायां ब्रह्मत्वसाधकस्य हेतोरुपहितत्वं बोधयन्त आहुः ॥ ॥ तत्रैवेति ॥ देहे विद्यमानोऽप्यन्तर्यामी अनभिमानित्वाद्ब्रह्म तथाचानभिमानित्वरूपोपाधेर्विद्यमानत्वान्नानन्दांशप्राधान्यमात्रेण स्वरूपात्मकब्रह्मत्वं पुरुषेऽनुमातुं शक्यमिति पुरुषो जीवभेद एवेति निश्चयः ॥ १२२ ॥

व्रजभाषाटीका ।

ऐसें कारणको वर्णनकरकें कार्यके स्वरूपको ज्ञान होयवेकेलिये अवान्तर भेदनको वर्णन करें हैं यद्यपि कार्य अनन्तप्रकारको है तासों यह घटहै यह पटहै यह कुन्डलहै या रीतिसों नहिं जान्यो जायहै तथापि सब कार्यकी दो राशिहै समष्टिरूप ब्रह्माण्डनकी राशि १ अक्षरब्रह्ममें है व्यष्टिरूप देहादिकनकी राशी २ ब्रह्माण्डमें है जितनो कार्य है सब जडजीवरूपहै यद्यपि जीव कार्य नहिं है तथापि आनन्दकेलिये देहमें अभिमान राखे है तासों कार्यकोटिमें गिनों जायहै अन्तर्यामी देहमें रहे है परन्तु देहमें अभिमान नहिं राखे है तासों कार्यकोटिमें नहिं गिन्योंजाय है ॥ १२० ॥ गुण तीन प्रकारको है तासों कार्यभी आधिदैविक,

आध्यात्मिक, आधिभौतिक इन भेदनकरिके तीनप्रकारकोहै, स्व-
तन्त्र जो अधिष्ठाता है वह देव कहावे है आत्मा अभिमन्ता इन
दोनोंके बीचमें जो सदंश देहादिक है जासों इन दोनोंको ( व्य-
वच्छेद ) होय है वह आधिभौतिक है ॥ १२१ ॥ अधिदैविकादि
तीनों पदार्थनके न्यारे न्यारे कार्य दीखे हैं तासों परस्पर भेद मा-
लूम पडे है परन्तु ब्रह्मस्वरूपमें भेद नहिं है जैसें एकही पुरुष जब
रसोई बनावे तब पाचक कहावे है जब पढावें लगेहै तब पाठक
कहावे है जब रक्षा करें है तब पालक कहावेहै याहीप्रकार सच्चिदा-
नन्दरूप ब्रह्महै सो धर्मरूप सदंशको कार्य प्रकट करे है तब आधि-
भूत कहावेहै चिद्धर्मको कार्य प्रकट करे तब अध्यात्म कहावे है
धर्मरूप आनन्दांशको कार्य प्रकट करेहै तब आधिदेव कहावेहै
स्वरूपमें भेद नहिं है; ब्रह्मके सत् अंशसों सत्वगुण, चिदंशसों
रजोगुण, आनन्दसों तमोगुण प्रकटहोवें है. सत् आधिभूतहै, चित
अध्यात्म है, आनन्द अधिदेव है, जीवके तीन भेदहैं समष्टिरूप
ब्रह्माण्डाभिमानी जीव१, व्यष्टिरूप अस्मदादिदेहाभिमानी जीव २,
और आवरणपुरुष ३, ये तीन जीवके भेदहैं व्यष्टिरूप अस्मदादि-
शरीर सत्प्रधानहै, समष्टिरूप ब्रह्माण्डशरीर चित्प्रधानहै, पुरुषशरीर
आनन्दप्रधानहै, उदाहरण कहेहै देह अधिभूतहै, जीव अध्या-
त्महै, अन्तर्यामी अधिदैवहै, यद्यपि समष्टिव्यष्टि आवरणपुरुष ये
तीनों तत्वमें जो गिनोंगयो क्षरपुरुष वाके अवतार हैं तामें ( य-
स्यांशांशेन सृज्यन्ते ) यह प्रमाणहै तथापि देहके अभिमानरा-
खवेवारे हैं तासों जीवनमें गणना है वाही एक देहमें रहवेवारो
अन्तर्यामी शरीराभिमान नहिं राखे है तासों ब्रह्मरूपनमें गिन्यो
जायहै याप्रकार तीन भेदनको जो ज्ञानहै सो स्वरूपके तारतम्य-
को निश्चय करायके मूलरूपके उत्कर्षकूं जतावे है ॥ १२२ ॥

**अन्तर्याम्यक्षरं कृष्णो ब्रह्मभेदास्तथापरे॥स्वभावकर्मकालाश्च रुद्रो ब्रह्मा हरिस्तथा॥१२३॥**

तत्त्वदीपप्रकाशः ।

एकत्रैव त्रिप्रकारेण वर्तत इति प्रकारान् गणयति ॥ अन्तर्याम्यक्षरं कृष्ण इति ॥ यथा सारथी रथी तदन्तस्थितश्च तथान्तर्याम्यक्षरं कृष्णः । एवंसति पुरुषोत्तमत्वेन सर्वत्र दर्शनं भवति। परं ब्रह्मैव त्रिप्रकारेण वर्तत इति त्रयो भेदास्त्रयाणां प्रत्येकं बहून् भेदानाह ॥ स्वभावेति ॥ अक्षरस्य स्वभावकर्मकालभेदाः रुद्रादयस्त्रयः कृष्णस्य । अन्तर्यामिणः सर्वत्र भिन्नतयैव स्थितत्वान्न भेदाः ॥ १२३ ॥

आवरणभंगः ।

एवं प्रासंगिकं परिहृत्य प्रस्तुतं वदन्तः । किंचित्कार्यार्थं देहेषु त्रिस्वरूपेण ब्रह्मणः स्थितिं बोधयन्ति । एकत्रेत्यादिस्थितिप्रकारं दृष्टान्तेनाहुः॥ ॥यथा सारथीत्यादि ॥ ॥ सारथिवद्दृष्ट्यादिदेहजीवानां नियामकोऽन्तर्यामी । अन्तर्यामिणो नियामकत्वञ्च ॥ "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति गीतावाक्यात् "अभिचाकशीति " इति श्रुतेश्च ज्ञेयम् ॥ तस्यापि रथिवन्नियामकमक्षरम् । अक्षरस्य नियामकत्वं प्रशासनश्रुत्यावगन्तव्यम् ॥ तस्याप्यन्तर्यामिवन्नियामकः कृष्ण इत्यर्थः॥भगवतो नियामकत्वं त्वन्तर्यामिब्राह्मणादेव सिद्ध्यति । तस्याक्षरनियामकत्वञ्च " अक्षरादपि चोत्तम " इति " अक्षरात्परतः पर " इति गीतावाक्यात् श्रुतेश्च ज्ञेयम् । ब्रह्मवैवर्ते अक्षराहङ्कारविमर्दकत्वकथनाच्च । एतेन निरंकुशं स्वातन्त्र्यं कृष्ण एव सिद्ध्यति इति प्रमेयबलं निर्णीतम् । एवमन्यत्र तत्तदपेक्षया तत्तदाधिदैविकस्य स्वातन्त्र्यं ज्ञेयम् ।अत्रापि क्रमस्तु पूर्ववदेव । एवं ज्ञानस्य फलमाहुः ॥ ॥ एवं सतीति॥ ॥तन्नियामकत्वेन सर्वान्तरत्वेन ज्ञाने सति तथाभवतीत्यर्थः ॥ नन्वन्तर्याम्यक्षराधिकरणयोर्मध्ये भाष्येऽन्तर्यामिणोऽक्षरस्य च स्वरूपात्मकत्वेन व्यवस्थापनात्कथं भेदत्वमेतयोरित्यत आहुः॥ ॥परब्रह्मेत्यादि ॥ एतेन यदेकमव्यक्तमनन्तरूपमिति श्रुत्युक्तमनन्तरूपत्वं दिङ्मात्रेण बोधितम् ॥ तत्रापि गणनापरिच्छेदाभावायाहुः॥ त्रयाणामित्यादि ॥ ॥ अत्रापि स एव क्रमः। नन्वन्तर्यामिणो भेदा नोक्ता इति कथं त्रयाणामित्युच्यते इत्यत आहुः ॥ ॥ अन्तर्यामिण इति ॥ ॥ तथाच तत्र स्वरूपभेदादेव । इति न प्रतिज्ञाहानिरि-

त्यर्थः ॥ अत्र स्वभावकर्मकालाश्चेति चकारेणाक्षरे चरणासनलोकरूपत्वेन भक्तप्राप्याक्षरोपासकप्राप्यविमुक्तमानिप्राप्यत्वेनापि भेदः संगृहीतः । एवं स्वभावादीनामपि ज्ञातव्यः । कालस्य तु सूर्यस्तस्याधिभौतिकमित्यादिनोक्ताऽप्येवमन्यदपि ज्ञेयम् ॥ १२३ ॥

व्रजभाषाटीका ।

एकठिकानेहि ब्रह्म तीनप्रकारकरकें रहेहै, उन प्रकारनकूँ गिनावेहैं (अन्तर्यामीति) अन्तर्यामी १ अक्षरब्रह्म २ परब्रह्म कृष्ण ३ ये तीन ब्रह्मके भेदहैं जैसें एकरथमें रथ चलायवेवारो रथमें बैठवेवारो और बैठवेवारेको जीवात्मा ये तीन पदार्थ हैं, जैसें रथचलायवेवारो रथको नियामक रहेहै ऐसें व्याष्टिरूप देहवाले जीवनको नियामक अन्तर्यामीहै जैसें रथचलायवेवारेको नियामक रथमें बैठवेवारोहै ऐसे अन्तर्यामीको नियामक अक्षर ब्रह्महै ये वार्ताप्रशासन श्रुतिसिद्ध है ( एतस्यैवाक्षरस्य प्रशासने द्यावापृथिवी विधृते ) इत्यादि जैसे रथमें बैठवेवारेको नियामक वाको आत्मा है ऐसें अक्षरब्रह्मके नियामक परब्रह्म कृष्णहै यामें ( अक्षरादपिचोत्तमः ) इत्यादि प्रमाणहै या प्रकार सर्वपदार्थनमें भगवान् विराजमान है और सर्वके नियामकहैं ऐसो ज्ञान होय तब सर्वत्र पुरुषोत्तमत्व करकें दर्शन होयहै याप्रकार परब्रह्म ही तीन प्रकारकरकें वर्तेहै ऐसें ब्रह्मविषयक तीन भेद वर्णन किये इनमेंसों एकएकके बहुतसे प्रकारहैं जैसें अक्षरके स्वभाव कर्म काल आदि प्रकारहैं तथा ब्रह्मा, रुद्र, विष्णु आदि तीनप्रकारके भेद परब्रह्म श्रीकृष्णके तथा अन्तर्यामीके भेद नहिं हैं क्योंकि सर्वत्र भिन्न होयके स्थित रहे हैं तासों ॥ १२३ ॥

अविद्या प्रकृतिर्माया निद्रा चिन्तेन्द्रजालता ॥
महत्तत्वं ब्रह्मरूपमस्माच्चितं तथैव च ॥१२४॥

अहंकारो रुद्ररूपमहंकारोस्मदादिषु ॥ मन-
श्चन्द्रशरीरञ्च मनोस्माकन्तथैव च ॥ १२५ ॥
चक्षुः सूर्यः शरीरञ्च चक्षुरस्माकमेव च ॥
मूलेन्द्रियाणि ब्रह्माण्डं देवदेहास्तथैव च १२६
अस्मदिन्द्रियवर्गश्च रूपत्रयमुदाहृतम् ॥ च-
न्द्रश्चन्द्राभिमानी च मनःप्रेरक एव च॥१२७॥
सूर्यो मण्डलमानी च चक्षुःप्रेरक एव नः ॥
एवं सर्वत्र तद्भेदाः स्वयमूह्या विभागशः॥१२८॥

तत्त्वदीपप्रकाशः ।

त्रयाणां शक्तिभेदानाह ॥ अविद्येति ॥ अविद्या जीवस्य, प्रकृति-रक्षरस्य, माया कृष्णस्य । उपलक्षणविधाया विद्याया भेदानाह ॥ निद्रेति ॥ एवं प्रकृतिपुरुषपर्यन्तमुपरिस्थितानां भेदानुक्त्वा महदादीनामाह ॥ महत्तत्त्वमित्यादिना ॥ महत्तत्वमाधिदैविकस्थानीयम् । द्वितीयं ब्रह्मशरीरम् । तृतीयमस्मदादीनां चित्तम् । अनेनान्येषाञ्चानुपलब्धेरिति भगवत्सिद्धान्ते दोषः परिहृतः ॥ १२४ ॥ अहंकारे भेदानाह॥ अहङ्कार इत्यादिना ॥ १२५ ॥ चक्षुरित्यादीन्द्रियाणां भेदाः सामान्येनाह ॥ मूलेन्द्रियाणीति ॥ १२६ ॥ त्रयाणामवान्तरभेदाः सन्तीति ज्ञापनार्थमाह ॥ चन्द्रश्चन्द्राभिमानी चेति ॥ अतिदिशति ॥ एवमिति ॥ १२७ ॥ १२८ ॥

आवरणभंगः ।

अविद्या जीवस्येति ॥ व्यष्ट्यादित्रयस्य च जीवस्येत्यर्थः ॥ एवञ्चान्तर्यामिणः शरीररहितत्वं ज्ञापितम् ॥ उपलक्षणविधयेति ॥ एवञ्च द्वादशशक्तिमध्यगणिता आधिदैविकी ब्रह्मणःसकाशात्पञ्चपर्वरूपेणोत्पन्ना द्वितीया । अस्मदादिषु रजतभ्रमजनिका तूलविद्या तृतीयेत्यादिरूपेणापि ज्ञेयम् ॥ तथा प्रकृतिमाययोरपि ज्ञेयाः। एतावत्पर्यन्तं ये भेदा उक्तास्तेषु पूर्वोद्दिष्टमाधिभौतिकमग्रे तु

व्युत्क्रमेणेति ज्ञापयितुमाहुः ॥ ॥ महत्तत्वमाधिदैविकेत्यादि ॥ एतन्निरूपण-प्रयोजनमाहुः ॥ ॥ अनेनेति ॥ ब्रह्मादिरूपेणोपलभ्यमानत्वात्परिहृत इत्यर्थः ॥ तदेतद्भाष्यप्रकाशे उपपादयिष्यते । एवं महत्तत्वेत्यारभ्य मूलेन्द्रियाणीत्य-न्तमानन्दचित्सत्प्राधान्येनाधिदैविकाध्यात्मिकाधिभौतिकभावो निरूपितस्तेन मूलावान्तरकारणयोराधिदैविकाध्यात्मिकत्वं कार्यस्थस्याधिभौतिकत्वं बोधित-म् ॥ १२४ ॥ मूलेन्द्रियाणीति ॥ चिद्वारा पुरुषेन्द्रियाणि ॥ १२५ ॥ १२६ ॥ त्रयाणामिति ॥ त्रयाणामाधिदैविकादीनामवान्तरभेदाः ॥ आधिदैविकादयस्त्र-य एवमाध्यात्मिकाधिभौतिकयोरपि त्रयो ज्ञेयाः ॥ ॥ चन्द्र इत्यादि ॥ एतेना-धिदैविके त्रिरूपतोदाहृता तथान्ययोरपि ज्ञातव्या । एवं कालस्वरूपे विचार्यमाणे सूर्य आधिभौतिकः । सूर्यस्वरूपे विचार्यमाणे त्वाधिदैविक इत्येवं तत्र तत्स्वरूप-विचारे क्रियमाणे यत्र महामाहात्म्यादिकं सूर्यस्य यथा साम्बपुराणे तत्राधिदैवि-को मूलेन्द्रियात्मा ज्ञेयः ॥ एवं यत्र विष्णोरपकर्षस्तत्र स भौतिकोऽस्मच्चरण-प्रेरको ज्ञेय इत्येवं विचारतः प्रमाणानां परस्परविरोधः परिहृतो भविष्यति॥ तदेत-द्धृदि कृत्याहुः ॥ ॥ अतिदिशतीति ॥ अत्र तन्मात्रादीनां त्रिरूपत्वकथनं चेतना-धिष्ठानरहितानामपि त्रिरूपत्वबोधनार्थम् ॥ तेन वैदिकसृष्टिस्थानां घटादीनाम-प्याधिदैविकत्वं सत्सृष्टिस्थानामाध्यात्मिकत्वं, गुणसृष्टिस्थानां भौतिकत्वं बोध्यम् ॥ १२७ ॥ १२८ ॥

ब्रजभाषाटीका ।

इन तीनोंकी शक्तिको निरूपण करें है ॥ जीवकी अवि-द्या शक्ति है, प्रकृति अक्षरब्रह्मकी शक्ति है, माया कृष्णकी शक्ति है, तथा अविद्या प्रकृति माया आदिकनके भी आधि-दैविकादि तीन तीन भेद हैं जैसे द्वादश शक्तिमें जाकी गणनाहै वह आधिदैविकी अविद्याहै, पञ्चपर्वात्मिका आध्या-त्मिकी अविद्याहै, छीपमें चांदीको भ्रम तथा रस्सीमें साँपको भ्रम करायवेवारी आधिभौतिकी अविद्याहै, या प्रकार प्रकृति मायाके भी भेद समझने निद्रा तन्द्रा इन्द्रजाल आदि अविद्याके अवा-न्तरभेद हैं ऐसें महत्तत्वभी तीनप्रकारकोहै महत्तत्व आधिदैविक रूपहै, ब्रह्मशरीर आध्यात्मिकरूपहै अस्मदादिकनको चित्त आधि-

भौतिकरूपहै, ऐसें अहङ्कार आधिदैविकरूपहै, रुद्र आध्यात्मिक-रूपहै, अस्मदादिकनके अहङ्कार आधिभौतिकरूपहै ऐसें पुरुष चक्षु आधिदैविकहै,सूर्यको शरीर आध्यात्मिकहै,अस्मदादिकनके चक्षु आधिभौतिकहै, पुरुषमन आधिदैविकहै, चन्द्रमाको शरीर आध्यात्मिकहै, अस्मदादिकनको मन आधिभौतिकहै, ऐसेंही मूलेन्द्रिय आधिदैविकहै,देवतानकी देह आध्यात्मिकहै,अस्माद-दिकनकी इन्द्रिय आधिभौतिकहै,इन तीनतीन रूपनमें भी एकए-कके तीनतीन भेदहैं जैसे चन्द्रमण्डल आधिभौतिक चंद्राभि-मानी आधिदैविक मनःप्रेरक आध्यात्मिकहै ॥ १२४–१२७ ॥ जैसें सूर्यमण्डल आधिभौतिक सूर्यमण्डलाभिमानी आधिदैवि-क अस्मदादिकनके चक्षुः प्रेरक आध्यात्मिक याप्रकार सब पदार्थ-नमें तीनतीन भेद स्वयं बुद्धिसों समुझलेने अर्थात आनन्दप्रधा-न आधिदैविकहै, चित्प्रधान आध्यात्मिक है, सत्प्रधान आधिभौ-तिकहै, सब ठिकानें मूलकारण आधिदैविकहोयहै, अवान्तरका-रण आध्यात्मिक होयहै,कार्यस्थ रूप आधिभौतिक होय है;ऐसेंही कालके स्वरूपको विचारकियो जाय कालको सूर्य आधिभौतिक-रूपहै सूर्यके स्वरूपको विचार कियो जायतो सूर्य आधिदैविक है जैसे सांबपुराणमें सूर्यकी अधिक महिमा लिखीहै वहां मूलेन्द्रिया-त्मा आधिदैविक सूर्य समुझनों ऐसेही जहां विष्णुको अपकर्ष लिखोहै तहां ( विष्णुर्गत्यैव चरणौ ) इत्यादिकनमें अस्मदादि-कनके चरण प्रेरक आधिभौतिक विष्णुको वर्णन समुझनो या प्रकार घटपटादि पदार्थभी तीन प्रकारके हैं, वैदिकसृष्टिके जे घ-टादिक हैं वे आधिदैविक हैं, सत्सृष्टिके घटादिक आध्यात्मिक हैं, गुणजसृष्टिस्थित घटपटादिक आधिभौतिकहैं ॥ १२८ ॥

तन्मात्राणि च भूतानां गुणाः कार्यगतास्तथा ॥ महाभूतान्यावरणं मध्यभूतानि च क्रमात् ॥ १२९ ॥ अहंकारमहत्तत्वप्रकृतीनां पुनस्तथा ॥ मूलमावरणं चैव ब्रह्मान्तःकरणन्तथा ॥१३०॥अन्येऽप्यवान्तरा भेदाः शतशः सन्ति सर्वशः ॥ लोकपालास्तु ते त्वत्र स्वर्गस्थस्तु पुरन्दरः ॥ १३१ ॥ दश दिक्षु च ते चात्र मध्यस्थस्तु पुरन्दरः ॥तादृशैरपि दैवैः प्रतिमन्वन्तरं पृथक् ॥ १३२ ॥ लोकपालास्त्रिधा भिन्नाः स्थानैः सह विभागशः ॥ लोकालोके मानसे च मेरोर्मूर्ध्नि तथैव च ॥ १३३ ॥

तत्त्वदीपप्रकाशः ।

एवमिन्द्रियाणामुक्त्वा तन्मात्राणामाह ॥ तन्मात्राणि चेति ॥ ब्रह्माण्डस्य देहत्वात्परिच्छेदं वारयति ॥ अहङ्कारमहत्तत्वप्रकृतीनामपि भूतादिन्यायेनाह ॥ पुनस्तथेति ॥ पुनःशब्देन सिंहावलोकनमुक्तम् ॥ सामान्यतो वदन्नुपसंहरति ॥ मूलमिति ॥ मूलतत्त्वानि । आवरणस्थानि द्वितीयानि । ब्रह्माण्डान्तःस्थितानि तृतीयानि ब्रह्मणा अन्तःकरणं येषामिति ॥१२९॥ १३०॥ परिच्छेदं वारयति ॥अन्येपीति ॥ अस्मदाद्यधिष्ठिता पृथ्वी प्रथमा, भाराक्रान्ता गोरूपा द्वितीया, भगवतः पार्श्वे वर्तमाना तृतीयेति । एवञ्जलादावपि ज्ञातव्यम् ॥ ये दशेन्द्रियाणां देवा उक्ताः । अहङ्कारादुत्पन्नास्त एव लोकपाला इन्द्रादयः । नामसाम्यात् ॥ ब्रह्माण्डस्य देहत्वात् । अतः पिण्डपाला एव लोकपाला इत्यभिप्रायेणाह ॥ लोकपालास्त्विति ॥ मित्रो निर्ऋतिः ॥ अश्विनावुत्तरतः दिशो यमस्थानीया इति । तत्र पुरन्दरस्य मध्यस्वर्गे

स्थितिः उपरिभागद्योतिका ॥ तेषां यथेच्छां स्थितिं वारयितुमाह ॥ ॥१३१॥दश दिक्षु त्विति॥चंद्रमसो मध्यपाते पुरन्दरो मध्यस्थः। एवं सति तत्वाधिक्यं न भवति । एते सर्वे सहोत्पन्नाः सहैव तिरोहिता भवन्ति इति प्रतिमन्वन्तरं तदंशास्तन्नामानो भिन्ना इत्याह॥ तादृशैरपरैरिति ॥ तेषामवान्तरभेदानाह ॥ १३२ ॥ लोकपाला इति ॥ सर्वेषां देवानां लोकालोकस्थानमेकम् । तथा मानसोत्तरे तथा मेरोर्मूर्द्धनि ॥ १३३ ॥

आवरणभंगः ।

मूले शतशः सन्ति सर्वश इति । सर्वेषु शतं शतं सन्तीत्यर्थः ॥ बह्वल्पार्थाच्छस्-कारकान्यतरस्यामिति सूत्रेऽर्थग्रहणात्पर्यायेभ्यो विशेषेभ्योऽङ्गीक्रियत इति शतश इति विशेषात्कर्त्रर्थे शस् संख्यैकवचनाच्च वीप्सायामितिसूत्रे वामनेन कुंडशो ददाति वनशः प्रविशतीति प्रत्युदाहरता एकार्थतानियतेभ्यो जातिशब्देभ्योऽप्यङ्गीकृता इति सर्वशब्दाद्वैषयिकाधिकरणकारकाच्छस् बोध्यः ॥ देवेष्वतिदेशेन प्राप्ते त्रिरूपत्वे प्रकारं विशदीकर्तुं तेषु लोकादिपालकत्वमुपपादयन्ति॥ ये दशेन्द्रियाणामिति ॥ ॥ नामसाम्यस्याप्रयोजकत्वमाशङ्क्य हेत्वन्तरमाहुः॥ ॥ब्रह्माण्डेत्यादि ॥ ॥ निर्ऋतौ नामसाम्याभावाद्दशानन्तर्गतत्वमाशङ्क्य समादधते॥ मित्रोनिर्ऋतिरिति ॥ "गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत्" इति निर्ऋतिः पाय्वघाश्रय इति च तृतीयस्कन्धवाक्यात्तादृशलोकपतित्वं रक्षस एवोचितमिति मित्रशब्दवाच्या निर्ऋतिरेव ज्ञेया इत्यर्थः ॥ अश्विनोर्लोकपालत्वं न स्फुटमिति पूर्वोक्तमसंगतमित्याशङ्कायां तयोस्तथात्वमुपपादयन्ति ॥ अश्विनावुत्तरत इति ॥ "विनिर्भिन्नेऽश्विनौ नासे विष्णोराविशतां पदम्" इतिवाक्ये यद्यपि लोकेशपदन्नास्ति तथापि "यावद्बलिं तेऽजहरामकाल" इति पद्योक्तसामुदायिकप्रार्थनयाऽत्रापि लोकेशत्वमावश्यकम् ॥ एवंसति तयोर्भिषक्त्वेन सौम्यत्वादुत्तरस्या दिशः शान्तत्वात्तल्लोकपालकौ तावेवौचित्यान्निश्चेयावित्यर्थः ॥ दिशां देहाभावेन देवत्वस्यास्फुटत्वाल्लोकपालत्वदौर्घट्यमाशंक्य समादधते॥ दिशो यमस्थानीया इति ॥ ॥ दिशः श्रोत्रादितिश्रुतेः कर्णोत्पन्नत्वेन दिशां कर्णस्थानकत्वम् ॥ तौ च द्वौ पुरुषश्च द्वितीयस्कन्धे प्राङ्मुख उक्तस्तत्रोत्तरेशत्वं यद्याश्विनोस्तदा पारिशेष्याद्दक्षिणेशत्वं दिशाम् ॥ युक्तिस्तु धर्मनियामकत्वरूपा ज्ञेया । यमस्य तदाधिभौतिकरूपत्वात् ॥ अतोयमाधिदैविकरूपास्ता इति लोकपालत्वं न तासां नदुर्घटमित्यर्थः ॥ नन्वेवं सति इन्द्रस्य हस्तयोरेव स्थितिर्भवेद्लोकेष्वेवे-

न्द्रियस्य सदैवस्य स्थितेरौचित्यादत आहुः ॥ ॥ तत्रेति ॥ तेषु देवेषु स्वर्गमध्य इति ॥ ॥ "इन्द्रः स्वर्पतिराविशत्" इति वाक्यादित्यर्थः॥ ॥ उपरीत्यादि ॥ हस्तदेवतात्वेन वक्षःस्थले प्रचरणाल्लोकत्रयोपरिभागस्य द्योतको नतु वरुणवद्रसातलादिस्थ इत्यर्थः ॥ १२९ ॥ १३० ॥ १३१ ॥ ननु यथा द्वितीयस्कंधे "देवा वैकारिका दश" इति दश देवपक्ष उक्तस्तथैकादशे "तैजसाद्देवता आसन्नेकादश च वैकृतात्" इत्येकादश देवपक्ष उक्त इति तस्मिन्पक्षे कथं पुरंदरस्य मध्यस्थत्वमित्यत आहुः ॥ ॥ चंद्रमस इत्यादि ॥ हृदये वागीशचन्द्रमहदभिमानानां चतुर्णां स्थितिरुक्तेति चन्द्रस्यैव मध्यपत्वे विनिगमकाभावात् तस्यैव मध्ये स्थितिरुचिता राजाधिराजत्वादित्यर्थः ॥ अतएवाभिमानाधिष्ठातुरीशानस्याप्यैशान्यामेव स्थितिः। यद्वा लोकपालत्वेन पूर्वोक्तरीत्या स्थितावपि दिक्पालत्वे इन्द्रस्यैव प्राचीदिक्पतित्वेन चन्द्रमसो मध्यस्थत्वे पुरन्दरो न मध्यस्थ इत्यर्थः ॥ मूलं त्वेवं योज्यम्। तुरितर व्यावृत्तौ। अत्र ब्रह्माण्डे ते तु दशेंद्रियदेवा लोकपाला नान्येऽतिरिक्ताः। तुः पूजायां पुरन्दरस्तु पूज्यत्वात्तेषु । स्वर्गस्थः तुरितरव्यावृत्तौ। भूमौ ते दशदिक्षु स्थिता नतु यथेच्छं यत्रक्वापि तिष्ठंति तुर्विशेषावधारणे चन्द्रमसो मध्यपाते पुरन्दर एव तथेत्यर्थ इति ॥ एवञ्च कुबेरस्याप्यश्विनाधिभौतिकत्वं ज्ञेयम् ॥ अत एवातिसुंदरयोर्नलकूबरमणिग्रीवयोस्ततो जन्म । एतत्कथनस्यावान्तरफलमाहुः ॥ ॥एवं सतीत्यादि ॥ एवं निरूपस्य प्रामाणिकत्वायाहुः ॥ तेषामिति ॥ ॥ तथा च स्थानभेदोक्तेरेवात्र मानमित्यर्थः ॥ मूलेविभागश इति ॥ जातिशब्दात्करणकारके शस्विभागेनेत्यर्थः ॥ १३२ ॥ १३३ ॥

ब्रजभाषाटीका।

तन्मात्रानके भेद वर्णन करे हैं, पञ्चतत्वनके कारण जे मात्रात्मक रूप रस गन्ध स्पर्श शब्द हैं वे आधिदैविक हैं, और पञ्च तत्व आध्यात्मिकहैं, कार्यके गुणरूप जे रूप रस गन्ध स्पर्श शब्द वे आधिभौतिकहैं ॥ ऐसेंही आध्यात्मिक महाभूत भी तीनप्रकारके हैं कारणरूप महाभूत आधिदैविकहै, ब्रह्माण्डके चारोंतरफ लिपटरहे जे आवरणरूप महाभूत आध्यात्मिकहैं, ब्रह्माण्डके भीतरके जो महाभूत हैं वे आधिभौतिक हैं ॥ ऐसेंही अहंकार आधिभौतिक है महत्तत्त्व आध्यात्मिकहै प्रकृति आधिदैविक है याही प्रकार अठाईस तत्वनके भी तीन भेद हैं मूलकार-

णरूप अष्टाविंशति तत्व आधिदैविक हैं ब्रह्माण्ड जिनसों घिर रह्योहै वे आध्यात्मिक हैं और ब्रह्माण्डके भीतर जे तत्व वे आधिभौतिक हैं ऐसें एकएक तत्वभी तीनप्रकारको है जैसें पृथ्वीके तीन स्वरूप हैं जाके ऊपर मनुष्यादिक रहें हैं वह आधिभौतिक पृथ्वी है, दैत्यसों दुखितभई गौरूपवाली जो ब्रह्माजीसों प्रार्थना-करवेगई हती वह आध्यात्मिक पृथ्वी है,और भगवान्की पत्नी है वो आधिदैविक पृथ्वी है, ऐसेंही जलादिकनके भी तीन भेद स-मुझलेनो ऐसेंही लोकपालभी तीनप्रकारके हैं सात्विक अहंकार-सों उत्पन्नभये जे दश इन्द्रियनके देवता हैं वेही लोकपाल हैं क्यों-कि उनके इनके एकही नाम हैं जैसे आपनो देह है तैसे ब्रह्मा-ण्डाभिमानी पुरुषको ब्रह्माण्ड देहहै जैसे अपने पिंडके हाथ पांव आदि अवयवनके रक्षाकरवेवारे इन्द्र वायु आदि देवता हैं ऐसें ब्रह्माण्डरूप देहके स्वर्गादिलोकरूप अवयवनके रक्षाकरवे-वारे वेही देवताहैं लोकालोकमें रहवेवारे देवता उनके आधिदै-विकरूप हैं, मानसोत्तरपर्वतपे रहवेवारे उनके आध्यात्मिकरूप हैं, मेरुपर्वतके ऊपर रहवेवारे देवता आधिभौतिक रूपहैं ऐसेही इनके स्थानमें भी तीन भेदहैं मेरु आधिभौतिक स्थान है,मानसोत्तर आ-ध्यात्मिक स्थान है, लोकालोक आधिदैविक स्थान है, ये देवता साथही प्रकट होवे हैं,साथही तिरोहित होय जावे हैं,मन्वन्तर म-न्वन्तरमें ब्रह्माण्डके देवतानके अंशरूप देवता न्यारे न्यारे होजावे हैं, जैसे अपने कर्णनकी दिशा देवता हैं ऐसें ब्रह्माण्डाभिमानी पूर्वाभिमुख पुरुषके कर्णनकी देवताभी दिशाहैं ऐसें सब इन्द्रिय-नके जानने, ये देवता पृथ्वीमें तो दश दिशानके पालक होयके अपनी दिशानमें रहे हैं तहां हस्ताभिमानी देवता इन्द्र पूर्वदिशा-को पाल है, वाणीकी देवता अग्नि अग्निकोणको मालिक है, कर्ण-

नकी देवता दिशा है सो अपने आधिभौतिक यमराजके रूपसों दक्षिणदिशामें रहे हैं, पायु इंद्रियको देवता मित्र है सो अपने आधिभौतिक निर्ऋति देवताके रूपसों नैर्ऋत्यकोणमें रहेहैं जिह्वाको देवता वरुण है सो पश्चिमदिशामें रहे है, त्वचा इन्द्रियको देवता वायु वायुकोणमें रहे है, नासा इन्द्रियको देवता अश्विनीकुमार अपने आधिभौतिक कुबेररूप करके उत्तरादिशामें रहे है, अभिमानाधिष्ठाता रुद्र इशानकोणके स्वामी हैं, गुह्यके देवता ब्रह्मा ऊपरकी दशामें रहे है, चरणके देवता आधिभौतिक विष्णु नीचेकी दिशामें रहे हैं, ये देवता इंद्रियनसहित अपने अपने गोलकनमें रहे हैं परन्तु हस्तको देवता इन्द्र तो मध्यभाग जो स्वर्ग है वामें स्थित है क्योंकि हस्त जैसे सर्व शरीरको स्पर्श करसके हैं ऐसें इन्द्रभी सर्वलोकनमें विचरतोभयो तीनो लोकनमें ऊपर जो स्वर्गलोक है वामें स्थित रहतेहैं स्वर्गविराट्के मध्यभागमेंहै १२९–१३३

ब्रह्मणोऽपि तथा सत्ये विराट्जीवस्तु भोगभुक् ॥ गुणावतारस्त्वन्यःस्यादेवमन्यत्र सर्वशः ॥ १३४ ॥ कैलासादिविभेदश्च तथा वैकुंठवासिनः ॥ कृत्रिमं च ध्रुवस्थानं श्वेतद्वीपं तथैव च ॥१३५॥ एवमेकप्रकारेण गुणतस्त्रिविधं मतम् ॥ सूर्यश्चक्षुस्तथा रूपं गोलकं चेति वाभिदा॥१३६॥ बुद्धिः खानि तथा मात्राः क्वचिदेवं भिदा त्रयम् ॥ भगवद्व्यतिरिक्तानां घटादीनां यथोद्भवः ॥१३७॥ इति कार्यप्रकरणम् ॥

तत्त्वदीपप्रकाशः ।

ब्रह्मणोऽप्याह ॥ ब्रह्मण इति ॥ मेरोर्मूर्द्धनि स्पष्ट एव ॥ पुष्करद्वी-

पेऽपि स्पष्टम् ॥ अतो लोकालोकेऽपि ज्ञातव्यम् ॥ सत्यलोके आधिदैविकः ॥ विराट्देहे अभिमानी द्वितीयः ॥ मेरोर्मूर्द्धनि तृतीयः ॥ मध्यम एव भोगभोक्ता ॥ गुणावतारस्तु तेभ्यो भिन्न इत्याह ॥ **गुणावतारस्त्विति** ॥ यो नाभिकमले जातः ॥ एवं रुद्रादीनामपि कैलासादिविभेदा वक्तव्याः ॥ एवं वैकुंठस्यापि भेदास्तानाह ॥ **कृत्रिममिति** ॥ वैकुंठः कल्पितो येनेतिवाक्यात् ॥ तदाधिदैविकस्थानीयम् । चकारात्तदकृत्रिममपि भगवदिच्छामात्रेण प्राकट्यात् ॥ ध्रुवस्थानं ज्योतिश्चक्रस्थमथवा ध्रुवं निश्चलस्थानं लोकत्रयोपरि महर्लोकादर्वाक्प्रकारान्तरं वक्तुं पूर्वोक्तमुपसंहरति ॥ **एवमिति** ॥ द्वितीयं प्रकारमाह ॥ **सूर्य इति** ॥ यत्रैवाधिदैविकव्यवहारः स प्रथमः । आध्यात्मिको द्वितीयः । तृतीये प्रकारद्वयं रूपं गोलकञ्च पुनरन्यं प्रकारमाह ॥ **बुद्धिःखानीति** ॥ इंद्रियजन्या बुद्धिराधिदैविकी ॥ एवं प्रकारत्रयं निरूप्य सर्वेषां स्वरूपं निरूपयितुं भगवत्वे जन्मादिभावा न युक्ता इति ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्च वैयर्थ्यमाशङ्क्य त्रैविध्यसमर्थनार्थं ज्ञानक्रिययोरुत्पत्तिं समर्थयते ॥ **भगवद्व्यतिरिक्तानामिति** ॥ भगवतोऽप्याविर्भावतिरोभावौ प्रायेण वैदिकानां संमतौ तदतिरिक्ते संदेहोऽतस्तत्र विचारः कर्तव्य इति घटादिनिर्णय एव ज्ञानक्रिययोरपि निर्णयो भविष्यतीति नेन्द्रियाणां वैयर्थ्यमित्यर्थः ॥ १३४--१३७ ॥ इति कार्यप्रकरणम् ॥

आवरणभंगः ।

भोगभोक्तेति ॥ ॥ ब्रह्माण्डदेहस्थं यत्सुखं तद्भोक्तेत्यर्थः ॥ वक्तव्या इति ॥ कैलासे एकः शिवलोकः । सत्योपरि द्वितीयः । एवं पुराणान्तरानुरोधात्तृतीयोपि ज्ञेय इत्यर्थः ॥ ॥ पूर्वोक्तमिति ॥ धर्मतस्त्रैविध्यप्रकारमित्यर्थः ॥ द्वितीयं प्रकारमिति ॥ आनन्दादिधर्मप्राधान्यमाधिदैविकादिशब्दानां यौगिकमर्थञ्च पुरस्कृत्य यः सिद्ध्यति तमित्यर्थः ॥ यौगिकार्थमात्रं पुरस्कृत्य तृतीयं प्रकारमाहुः ॥ पुनरन्यमित्यादि॥खानां शरीरनिष्ठत्वेनाध्यात्मिकत्वस्य मात्राणां भूतनिष्ठत्वेनाधिभौतिकत्वस्य स्फुटत्वात्पारिशेष्येणाहुः ॥ ॥इन्द्रियजन्येति ॥ ॥ अधिदैविकीति॥

अस्मदिन्द्रियप्रेरकमनोरूपदेवनिष्ठेत्यर्थः ॥ मनसो देवत्वमत्र व्यहाराज्ज्ञेयम्। दीव्यति व्यवहरतीति देव इति। मनसो वशे सर्वमिदं बभूव नान्यस्य मनोवशमन्वियाय ॥ भीष्मो हि देवः सहसः सहीयानिति श्रुत्या च ॥ अयं त्रैविध्यप्रकारो द्वादशस्कन्धे चतुर्थाध्याये " दीपश्चक्षुश्च रूपश्च ज्योतिषो न पृथक् भवेत्। एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात्॥" इतिवाक्ये अन्योन्यसापेक्षत्वकथनात्तन्मूलको व्यवहारोपयोगाय ज्ञेयः॥ अत्रानन्त्येऽपि हि कार्याणामित्यारभ्य प्रतिपादितस्य समष्टिव्यष्टिभावस्याध्यात्मिकादिभावस्य च मूलमविरोधचतुर्थपादे ज्योतिराद्यधिष्ठानाधिकरणे विचारितं ज्ञेयम्॥ एवमेतावति ग्रन्थे "प्रमेयबलमाश्रित्य सर्वनिर्णय-उच्यते" इत्यत्रोक्तं प्रमेयं पश्चात्मकेत्यारभ्य जडजीवेनेत्यन्तेन विवेचितम्। ततः सर्वेषां त्रिगुणत्वाद्धीत्यारभ्य भिदात्रयमित्यन्तेन तस्य सर्वस्य प्रमेयस्य तत्तत्कार्यक्षमस्वरूपं बलं दिङ्मात्रेणोपलक्षणविधया निरूपितम्॥ अतः परं तदाश्रयेण विचारापरपर्यायेण सर्वस्य भगवद्व्यतिरिक्तस्य पदार्थजातस्य स्वरूपं निर्णीयते॥ एवमित्यादि ॥ ॥ एवं तत्र तद्बलनिश्चयो येन रूपेण भवेत्तेन रूपेण प्रकारत्रयं निरूप्य कार्यकारणस्वरूपात्मकं विविच्य सर्वेषां लौकिकसच्चिदानन्दानां नामरूपकर्मणाञ्च स्वरूपं भगवदात्मकत्वलक्षणं निरूपयितुं भगवत्त्वे कार्यकारणकोटिगतानां सर्वेषां भगवदभिन्नत्वे जन्मादिभावाः। जायतेऽस्ति वर्द्धते विपरिणमतेऽपक्षीयते नश्यतीति प्रतीतिसाक्षिकाः षडपि न युक्ता इति तदभावे उभयेन्द्रियवैयर्थ्यञ्चेत्याशंक्य त्रैविध्यसमर्थनार्थमाधिभौतिकादिरूपत्रैविध्योपपादनार्थं ज्ञानक्रिययोः आधिभौतिकव्यावहारिकज्ञानक्रिययोरुत्पत्तिमुपपादयतीत्यर्थः ॥ ननु सर्वस्यैव भगवत्त्वे व्यावहारिकज्ञानक्रिययोरपि भगवत्वमेवेति तदुत्पत्तिविचारः कुतः क्रियत इत्यत आहुः ॥ ॥ भगवत इत्यादि ॥ तदतिरिक्ते संदेह इत्यादि भगवदतिरिक्ते कार्यकोटिस्थे व्यावहारिकज्ञाने कारणकोटिस्थे प्रकृत्यादौ स्वरूपकोटिस्थे कालादौ च यथायथं मायादिसांख्यवादिवैदिकवादिमतप्रकारदर्शनात्संदेहः॥ अतो वादिवैसंमत्याद्विचारः कर्तव्य इति हेतोर्घटादिनिर्णये सर्वाकारस्वरूपेणेत्यादिनानुपदं करिष्यमाणे तयोरपि सम्भविष्यतीति तथेत्यर्थः ॥ १३४–१३७ ॥ इति [illegible]णम् ॥

ब्रजभाषाटीका।

ब्रह्मादिकनके भी त्रिविध भेद वर्णन करेहैं सत्यलोकमें आधिभौतिक ब्रह्माहै, ब्रह्माण्डदेहके सुखको भोक्ता विराट्देहमें अरु आध्यात्मिकब्रह्मा है, सुमेरुपर्वतपै जाकी पुरी है

वह आधिभौतिक ब्रह्माहै भगवान्‌के चिदंशसों प्रकटभये रजोगुणमें अवतारलेवेवारे नाभिकमलसों जो प्रकटभये हैं वे ब्रह्माजी इन तीनोंसों न्यारेहैं ऐसे शिवलोकके भी तीन भेदहैं कैलासमें एक शिवलोकहै, दूसरो शिवलोक सत्यलोकके ऊपरहै याप्रकार और पुराणनके अनुसार तीसरो शिवलोक भी जानलेनो ऐसेंही वैकुण्ठके भी तीन भेदहैं लक्ष्मीजीकी प्रार्थनासों प्रकटकियो आधिदैविक वैकुंठहै, ध्रुवजी जावै कुण्ठमें रहेहैं वह आध्यात्मिक वैकुण्ठहै, श्वेतद्वीपमें आधिभौतिक वैकुण्ठ है ॥१३४॥१३५॥ पहले प्रकारमें आनन्द प्रधान पदार्थकूं आधिदैविक, चित्प्रधानकूँ आध्यात्मिक, सत्प्रधानकूं आधिभौतिक कह आये हैं, या द्वितीय प्रकारमें आनन्दादि धर्मनकूं ग्रहणकरके तथा व्याकरणादिद्वारा आधिदैविकादिशब्दनको जैसे अर्थ होयहै वाकूं भी लेकें तीनप्रकार वर्णन करेहैं, सूर्य आधिदैविकहै, चक्षु आध्यात्मिकहै, गोलक आधिभौतिकहै, या क्रममें आधिदैविक पदार्थकूं प्रथम, आध्यात्मिककूं द्वितीय, आधिभौतिककूं तृतीय समुझलेनों, तृतीयके दो भेदहैं गोलक और रूप, व्याकरणके द्वारा आधिदैविकादिपदनको जैसो अर्थ होवेहै वाकूं लेके तृतीय प्रकारको वर्णन करेहैं, अस्मदादिकनके इन्द्रियको प्रेरक 'भीष्मो हि देवः' इत्यादिश्रुतिसिद्ध मनरूप देवनिष्ठ जो बुद्धि है वह आधिदैविकीहै, शरीरमें रहवेवारी इन्द्रियें आध्यात्मिकहैं, पञ्चभूतनमें रहवेवारी रूप, रस, गंध, स्पर्श, शब्द आदि मात्रा आधिभौतिक हैं, ऐसें और पदार्थनमेंभी भेद जानने, ये प्रकार द्वादशस्कन्ध चतुर्थाध्यायमें ( दीपश्चक्षुश्च रूपञ्च । एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ) इत्यादिस्थलमें प्रसिद्धहै, ये प्रकार व्यवहारके उपयोगार्थ वर्णन कियोहै, यारीतिसों तीनों प्रकारनको निरूपणकरके

संपूर्ण पदार्थनको यथार्थस्वरूप भगवान्हीहै यह निरूपण करेहै तहां लौकिक सच्चिदानन्द सब पदार्थ तथा इनके नाम रूप ये सब पदार्थ भगवत्स्वरूप माने तब उनके जन्म नाशादि क्यों होवेहैं ऐसी शंका होवेहै, यदि उन पदार्थनके जन्मनाशादि नहिं मानेहैं तो घटादि सब पदार्थ विद्यमानहीहैं इनकी उत्पत्तिनाशादि करवेकेलिये क्रियाकी आवश्यकता नहीं होगी तब क्रियाकेलिये हस्तपादादिक कर्मेन्द्रियभी वृथाही होयगी ऐसेंही ज्ञानभी सर्वपदार्थनको विद्यमानहीहै तब पदार्थनके ज्ञानकरवायवेवारे नेत्र श्रवणादिक ज्ञानेन्द्रियभी वृथाही होयगी याकेलिये व्यवहारमें आयवेवारे ज्ञानक्रियानकी उत्पत्तिनाशादिकनको यथार्थस्वरूप युक्ति द्वारा वर्णनकरेहै तासों कहेभये आधिदैविकादि तीन भेदनको भी समर्थन होयजायगो तहां भगवानके आविर्भाव तिरोभाव तो वैदिकननें मानें हैं उनमें संदेह नहिंहैं किन्तु लौकिक पदार्थनमें संदेह है, क्योंकि मायावादि उनकूं उत्पत्ति नाशवारे मानेहैं, सांख्यवादि अविर्भाव तिरोभाववाले मानेहैं तासों घटादिपदार्थनके उत्पत्तिनाशको निर्णय करनो आवश्यकहै ताहिमें ज्ञानक्रियाके उत्पत्तिनाशकोभी निर्णय होयजायगो तासों इन्द्रियके व्यर्थताकी शंकाभी दूर होयजायगी ॥ १३६ ॥ १३७ ॥

व्यवहारे तथा ज्ञानक्रिययोरपि निश्चयः ॥
न प्रतिस्फुरणं रूपरहितस्य कदाच न ॥१३८॥
अविद्यायास्तथाबुद्धेर्न शुद्धत्वं कदाचन ॥ बु-
द्धेर्वृत्तिः स्थितिर्नाम गुणतः सा त्रिधा मता ॥
अतो जागरणादीनि जीवस्तद्वशगो यतः१३९॥

तत्त्वदीपप्रकाशः।

ननु ज्ञाने प्रतिबिम्ब एव भवतु स्वरूपस्य नित्यत्वादित्याशंक्य
तथा पक्षपातः त्रिष्वपि कर्तव्य इति वक्तुं ज्ञाने प्रतिबिम्बपक्षं दूषय-
ति ॥ **न प्रतिस्फुरणमिति** ॥ तत्र हेतुः ॥ **रूपरहितस्येति** ॥ कालान्तरे
देशान्तरेऽपि तथात्वं वारयति ॥ **कदाचनेति** ॥ १३८ ॥ दोषान्तर-
माह ॥ **अविद्याया इति** ॥ अविद्यायां प्रतिबिम्बे जीवत्वं बुद्धौ प्रतिबि-
म्बे व्यावहारिकज्ञानमिति स्यादेवं यद्यविद्याबुद्धिर्वा शुद्धा स्यात् ।
तथासति सदंशानामपि भावात् सर्वेषां सर्वज्ञता स्यात् ॥ सर्वेषां प्र-
तिबिम्बाभावे हेतुभावात् । इन्द्रियाणाञ्च वैयर्थ्यम् । अत इदं ज्ञानं
कार्यरूपं भिन्नमेव चिदादिभिः सह बुद्धेः कोशादिष्वैकार्थ्यात् ॥ बु-
द्धिवृत्तिर्जन्यत इत्यत्र वृत्तिर्बुद्धेः पदार्थान्तरं नभवति किन्तु स्थितिरेव
सत्वादिभिः ॥ अत एव भ्रमादीनामपि संग्रहः । यदीन्द्रियैर्जन्या न
स्यात् घटे क्वापि तदा भ्रमो नस्यात् । जीवस्य गुणतोऽवस्थात्रयं भिन्न-
हेतुकं स्यात् । अतो गुणवशाद्यथा बुद्धिर्भवति तथैव मन्तव्यमिति ।
अत एव जीवस्यापि नस्वातंत्र्यं गुणाधीनत्वात् ॥ १३९ ॥

आवरणभंगः।

एवं ज्ञानक्रिययोरुत्पत्तिनिरूपणं प्रतिज्ञाय लौकिकक्रियोत्पत्तेः सर्ववादिसं-
मतत्वात्तद्विचारमकृत्वा ज्ञानोत्पत्तिं प्रतिपादयिष्यन्तो मायावादिमते ज्ञानो-
त्पत्त्यनङ्गीकारात्तन्मतं दूषयितुमुत्थापयन्ति नन्वित्यादिना ॥ ॥ ज्ञाने ॥
कार्यत्वेनाङ्गीक्रियमाणे ज्ञाने प्रतिबिम्ब एव भवतु । बुद्धिवृत्तौ ज्ञानस्य प्रतिबिम्ब
एवास्तु ॥ स्वरूपस्य ज्ञानस्वरूपस्य नित्यत्वादित्याशंक्य तथा पक्षपातः स्वरू-
पनित्यत्वपक्षपातः त्रिष्वपि सच्चिदानन्देषु कर्तव्यः कर्तुमुचित इति ॥ ज्ञाने प्रतिबि-
म्बं दूषयतीति योजना ॥ ॥ अत्रायमर्थः ॥ सिद्धान्तिना हि द्विविधं ज्ञानमङ्गीक्रि-
यते । नित्यं कार्यञ्च । तत्र नित्यं चतुर्विधं कार्यं षड्विधमिति तृतीयस्कन्धसुबोधि-
न्यां 'तया विभ्रंशितज्ञाना' इत्यत्र । तत्र नित्यं वृत्त्याऽभिव्यज्यते वेदादिशरीरञ्च
गृह्णाति भगवद्धर्मरूपं यत्तद्भगवद्दत्तं जीवेपि समायाति ॥ कार्यज्ञानं तु तत्तदिन्द्रि-
याणां विषयसन्निकर्षद्वारा जाग्रदादिवृत्तौ मनसि जन्यते । तथासत्यर्द्धजरतीया-

पत्तिरनेकव्यक्तितदुत्पत्तिनाशादिगौरवापत्तिश्चेति तदनादृत्यैकमेवात्मरूपं ज्ञानं नित्यमङ्गीकार्यं लाघवात् । सर्वस्य ब्रह्मात्मकत्वं वदता सिद्धान्तिनापि जन्यज्ञानस्य भगवद्रूपताङ्गीकरणाच्च सिद्धे चैवं स्वरूपनित्यत्वे वृत्तौ यदभिव्यञ्जनं समागमनं जननं वाङ्गीकृतं तदपि प्रतिबिम्बद्वारकमेव भवति सात्विकवृत्तेः शुद्धत्वादतो ज्ञानप्रतिबिम्ब एव युक्तः । तदेतदुक्तं ज्ञाने प्रतिबिम्ब एव भवतु स्वरूपस्य नित्यत्वादित्याशंक्येति । एवं ज्ञानस्यात्मस्वरूपत्वेन नित्यत्वस्वीकारे ब्रह्मणः सच्चिदानन्दरूपस्यात्मत्वेन स्वरूपात्मकज्ञानवत्तादृशस्वरूपात्मकसदानन्दयोरपि नित्यत्वात् । तन्मध्ये व्यावहारिकज्ञानस्यैव वृत्तौ प्रतिबिम्बोन्ययोस्तु न प्रतिबिम्ब इति । तत्राप्यर्धजरतीयं स्वरूपे समानमिति तन्निरासार्थं तयोरपि ज्ञानस्य इव वृत्तौ प्रतिबिम्ब एव भवतापि स्वीकार्यः । तथासति सविषयभानावसरे सदानन्दावपि स्वरूपभूतौ भासेतां तदेतदुक्तं तथा पक्षपातस्त्रिष्वपि कर्तव्य इति । अथ तथा न स्वीक्रियते तदाऽप्रामणिकार्द्धजरतीयादृक्ष्यपाणदोषाच्च ज्ञानप्रतिबिम्बपक्षोप्यप्रयोजकस्तदेतदुक्तम् ॥ ज्ञाने प्रतिबिम्बं दूषयति इति ॥ दूषणमाहुः ॥ नेत्यादिरूपरहितस्येति ॥ ॥ चक्षुरयोग्यस्य ननु सर्वदा चक्षुरयोग्यस्य शब्दस्य कूपादौ प्रतिध्वनिदर्शनात्तस्य च शब्दप्रतिरूपत्वान्न सार्वत्रिकश्चक्षुरयोग्यस्य प्रतिबिंबभावनियमोऽतो न दोष इतिचेत् । अत्र केचित् । प्रतिध्वनिर्नपूर्वशब्दप्रतिबिम्बः । पंचीकरणप्रक्रियया पटहादिशब्दानां क्षितिसलिलादिशब्दत्वेन प्रतिध्वनेरेवाकाशीयशब्दतया तस्यान्यशब्दप्रतिबिंबत्वायोगात् । नापिवर्णरूपप्रतिशब्दस्तथा वर्णाभिव्यंजकध्वनिनिमित्तकप्रतिध्वनेः । प्रथमध्वनिवदेव वर्णाभिव्यंजकत्वोपपत्तेः । पूर्ववर्णप्रतिबिम्बत्वकल्पनायोगादित्याहुः ॥ वस्तुतस्तु प्रतिध्वनेः शब्दप्रतिबिंबत्वं मानाभावग्रस्तमेव नच साजात्यानुभव एव मानमिति वाच्यम् । तस्य शब्दांतरेपि तुल्यत्वात् । बिंबस्थित्यधीनस्थितिकत्वस्य प्रतिबिम्बताविनिगमकस्यात्रासत्वात् । नच बिम्बरूपपूर्वशब्दस्थितिः ॥ शक्यवचना शब्दस्य त्रिक्षणावस्थायित्वेन तदानीं नाशात् । आभासतया अप्यत एवाशक्यवचनत्वात् । चिरकालस्थायित्वपक्षाभ्युपगमेनेष्टसाधने कूपस्थवायुना प्रतिध्वनिवद्ध्वन्यानयनस्यापि संभवदुक्तिकत्वाद्ध्वनिद्वयश्रवणापत्तेः । ध्वन्यनानयने नियामकाभावात् ॥ अनानीते च ध्वनौ प्रतिबिम्बतानिश्चयस्याशक्यत्वात् ॥ ---- छायाप्रत्याह्वयाभासा असंतोऽप्यर्थकारिण इति । भगवद्वाक्ये प्रतिध्वनेरसत्त्व---त्सादृश्यस्य चोपलभ्यमानत्वात्प्रतिबिम्बत्वं कल्प्यत इति वाच्यम् ॥ न---रावता[illegible]रूत्वदुक्तहेतुभ्यां मायाजन्यशब्दांतरत्वस्यापि शक्यवचन---पि वर्ण[illegible]रूपप्रतिशब्दस्य पूर्ववर्णप्रतिबिंबत्वं व्यंजनाक्षराश्रवणात् । नच

स्वराक्षरस्यैव प्रतिबिंब इति वाच्यम् ॥ नियामकस्याशक्यवचनत्वात् । युगप दुभयस्वरग्रहणाभावात्। पूर्वध्वनिवद्वितीयस्य प्रतिध्वनेरपि पूर्ववर्णव्यंजकता याः शक्यवचनत्वेन संदेहानपायाच्च । नापि ध्वनेर्वर्णप्रतिबिंबत्वं मानाभावात् व्यंजकतया संनिधिमात्रेण स्वधर्माणामुदात्तादीनां वर्णेष्वारोपस्य शक्यत्वादेक वदेव ग्रहणाच्च ॥ यत्तु । आकाशस्य शब्दसमवायिनः कूपादौ सत्वेनास्मदादि शब्दजन्यशब्दपरंपराजनितस्तथ्यः शब्दविशेष एव प्रतिध्वनिरिति केचिदाहुः ॥ तन्न । अश्रवणापत्तेः । वीचीतरंगादिन्यायेन तत्रोत्पन्नस्य ध्वनेः पुनर्वैपरीत्येन तत उत्पादकस्याशक्यवचनत्वात् । कूपादिप्रतिबद्धस्य वायोस्तथात्वकल्पनेपि तत्तथ्यतागमकस्याभावात्। समाचारोपलंभयोर्व्यभिचारित्वात्। अतो मायिक- मेव प्रतिबिंबातिरिक्तं शब्दांतरं तदिति निश्चयः । नाप्याकाशदृष्टांतेन सिद्धिः ॥ शास्त्रार्थप्रकरणे तस्य निराकृतत्वात् । स्वरूपभूतसदानंदयोरपि रूपाभावेन तद- भावाच्च। अतः सुष्ठूक्तं न प्रतिस्फुरणमित्यादि ॥ १३८ ॥ एवं निमित्तस्वरूप- विचारेण ज्ञानप्रतिबिंबपक्षं निराकृत्य अधिकरणस्वरूपविचारेणापि निराकर्त्तु- माहुः ॥ ॥ दोषांतरमित्यादि ॥ ॥ अत्राविद्यायामित्यादिनोक्तः। पक्षो यद्यपि पूर्वप्रकरणे निराकृतस्तथाप्यधिकरणस्वरूपविचारेण न निराकृत इति पुनरनूद्य निराकुर्वंति ॥ ॥ स्यादेवमित्यादि ॥ ॥ ननु प्रतिबिंबार्थं ते शुद्धे एवांगीकार्ये को- दोष इतिचेत्तत्राहुः ॥ ॥ तथासतीत्यादि ॥ ॥ इतिभावात्। प्रतिबिंबभवनात् । सर्वेषां सर्वज्ञता स्यात् । अयमर्थः । अरूपस्य ज्ञानस्य प्रतिबिंबोऽविद्याबुद्ध्योः शुद्धत्वांगीकारेणाभ्युगतश्चेत्सरूपाणां सदंशानां बाह्यानां घटादीनामांतराणां शि- रांत्रादीनां च तत्र तत्र प्रतिबिंबो निर्बाधः । निर्बाधे च प्रतिबिंबे तत्समानाधिकरणा- नामविद्यायां प्रतीतानां व्यापकानां जीवानां सर्वसंसर्गे द्विगुणीकृत्य जाते सर्वतादा- त्म्यापन्नस्य ब्रह्मण इवैतेषामपि सर्वसंसृष्टत्वात्साक्षित्वाच्च वृत्तिंविनैव स्वरूपचैत- न्येन सर्वावभासकतायाः शक्यवचनत्वेन ब्रह्मवत्सर्वेषां सर्वज्ञता स्यात् । न- चांतःकरणभेदेन प्रमातृभेदात्तदनापत्तिः । व्यापकत्वेन सर्वेषां सर्वांतःकरणसं- सृष्टतया प्रमातृभेदस्याशक्यवचनत्वात् ॥ संसर्गतौल्ये एकस्यैवैकांतःकरणवैशि- ष्ट्यं नापरस्येत्यत्र हेत्वभावात्। अदृष्टादीनां हेतूनां कल्पनस्य पूर्वप्रकरण एव निरस्तत्वात्। ननु दूषणग्रासान्मास्तु व्यापकानेकजीववादः । किंतु। व्यापकैक- जीववादे तस्य सर्वज्ञातायामिष्टापत्तिरितिचेत् । सत्यमिष्टापत्तिः स्यात् । यद्येक- स्यैव सर्वज्ञता स्यात्। अविशेषेणैकस्यैव सर्वशरीराधिष्ठाने सर्वत्राविद्योपाहितस्य साक्षिण एकत्वात्सर्वत्रोपाधौ सर्वप्रतिबिंबेषु संसृष्टत्वाद्ब्रह्मण इव जीवस्यापि सर्व- त्र सर्वज्ञातायां बाधकाभावात्॥ नच ब्रह्माप्येकत्रैव सर्वज्ञं न सर्वत्रेति वाच्यम् ।

ब्रह्मविष्णु शिवादिशरीरावच्छेदेन सर्वज्ञताप्रतिपादकशास्त्रविरोधापातात् । नचोपाधौ सर्वप्रतिबिंबेऽप्यंतःकरणभेदेन प्रमातृभेदात्तन्निकटस्थस्यैव ज्ञानं प्रमातुर्भविष्यतीति न सर्वत्र सार्वज्ञापत्तिरितिवाच्यम् । प्रमातृभेदे करणभेदस्यैव साक्ष्यभेदे प्रमातृभेदस्याप्यप्रयोजकत्वात् ॥ सर्वत्र साक्षिण एव भासकत्वात् । नच तस्याविद्योपहितरूपेण न साक्षित्वम् । किंतु । अंतःकरणोपहितरूपेण । तथा च रूपभेदेन साक्षिभेदान्न सार्वज्ञापत्तिरितिवाच्यम् । अप्रयोजकत्वात् ॥ तथा सत्यपि हृदयनाडीप्रभृतीनामांतराणामंतःकरणे प्रतिबिंबितानां ज्ञानं तस्य निर्बाधमित्यांतरसर्वज्ञताया दुर्वारत्वात् ॥ तदेतदुक्तं तथासतीत्यादि ॥ ननु सर्वेषां प्रतिबिंबो नास्माभिरंगीक्रियत इतिचेत्तत्राहुः ॥ सर्वेषामित्यादि ॥ ॥ अयमर्थः । यदयं नस्वीक्रियते कस्तत्रहेतुः ॥ न तावदसंनिधिः । अविद्यायाः व्यापकत्वात् ॥ अंतःकरणस्य चांतरसन्निहितत्वात् । नापि बिंबालोकसंयोगाभावः।सूर्यादेर्विद्यमानत्वात् । अंतर्गृहगतदर्पणप्रतिबिंबितसूर्यप्रकाशेनांतरवस्तूनां प्रतिबिंबदर्शनादिहापि जीवचैतन्यप्रकाशितांतःकरणसंसृष्ट आंतरबिंबे आलोकांतरानपेक्षणात् । तेनांतरप्रकाशानंगीकारे साक्षात्संसृष्टांतःकरणतद्धर्मादीनामप्यनवभासप्रसंगात् ॥ मते च तदवभासे तद्वदेव तत्संसृष्टानामप्यवभासादहंकारादिवद्धृदयनाडीप्रभृतीन्यप्यनुसंधीयेरन् संस्काराधायकस्य तुल्यत्वात् ॥ अथैकप्रतिबिंबावरुद्धे दर्पणादावन्यस्य प्रतिबिंबादर्शनाद्व्यापकजीवावरुद्धे विद्यादावितरेषां प्रतिबिंबो न भविष्यतीत्यवरोध एव प्रतिबिंबाभावे हेतुरिति विभाव्यते तदप्यसंगतम् । एकप्रतिबिंबावरुद्धेऽन्यप्रतिबिंबस्तदा न भवति यदा बिंबांतरं पूर्वबिंबव्यवधेयं भवति । इह तु ब्रह्मणो व्यापकत्वेन परिच्छिन्नानां सर्वेषां ब्रह्मान्तर्वर्त्तित्वेन तद्व्यवधेयत्वाभावान्न जीवेन तत्प्रतिबिंबावरोध इति दुर्वार एव सर्वेषां प्रतिबिंब इति ॥ तदेतदुक्तं सर्वेषां प्रतिबिंबाभावे हेत्वभावादिति ॥ ननु भवतु सर्वेषां प्रतिबिंबः । तथापि न जीवस्य सर्वज्ञतापत्तिर्भवित्री जीवसाक्षिवादस्यानंगीकारात् ॥ तथासति कूटस्थचैतन्यं वा जीवाभिन्नं सर्वप्रत्यग्भूतं शुद्धं ब्रह्मैव वा परमेश्वरस्यैव रूपांतरं वा साक्षी भविष्यति तस्य तु सर्वज्ञत्वेऽप्यदोषः ॥ जीवस्तु यथासर्वगतं गोत्वसामान्यं स्वभावादश्वादिसंगित्वाभावेपि सास्नादिमद्व्यक्तौ संसृज्यते तथा विषयादौ सन्नपि जीवः स्वभावादंतःकरण एव संसृज्यते यदा चांतःकरणपरिणामो वृत्तिरूपो नयनद्वारेण निर्गत्य चक्षूरश्मिवज्झटिति दीर्घप्रभाकारेण परिणम्य विषयं प्राप्नोति तदा तमुपारुह्य जीवं स विषयं गोचरयति । केवलाग्न्यदाह्यस्य तृणादेरयःपिंडसमारूढाग्निदाह्यत्ववत्केवलजीवचैतन्याप्राकाश्यस्यापि घटादेरंतःकरणवृत्त्युपारूढतत्प्रकाश्यत्वं युक्तमिति चिदुपरागार्थत्वेन वृत्तिनिर्गमनमपेक्ष्य वृत्तिसं-

सृष्टविषयमात्रावभासकत्वात्तस्य किंचिज्ज्ञत्वमुपपत्स्यत इति चेत्तत्राहुः ॥ इंद्रियाणां च वैयर्थ्यमिति ॥ ॥ स्वभाववादेन समाधानेपि जीवस्य प्रकाशकप्रतिबिंबत्वात्स्वप्ने स्वयंज्योतिष्ट्वे प्रतिपादनाच्च प्रकाशरूपत्वेन स्वप्न इवापरोक्षवृत्ताविव च पूर्वपूर्वानादिसंस्कारवशादेवेंद्रियं विनापि प्रत्यक्षोपपत्तेर्ज्ञानेंद्रियाणि वृथैव स्युः । किंच अयःपिंडसमारोहेण दाहकस्याग्नेः साक्षात्संसृष्टदाहकतादर्शनाद्वृत्त्युपारोहे प्रकाशकस्य जीवस्य साक्षादंतःकरणसंसृष्टप्रकाशकत्वं सुतरां सुवचमित्यंतःकरणे प्रतिबिंबितानां प्रकाशोऽस्य स्यादेवेत्यधिकं तत्रानुप्रविष्टमित्यर्थः । वस्तुतस्त्वेवमपि गोत्वस्य सकलगोव्यक्तिष्विवैकस्यैव जीवस्य सर्वांतःकरणेषु संसर्गस्य वक्तव्यत्वात्तथासति तत्तदंतःकरणवृत्तिनिर्गमेण तत्तद्विषयप्राप्तौ तत्तद्वृत्त्युपारूढस्य जीवस्यापि तत्तद्विषयोपरागसंभवात्सर्ववृत्तिसंसृष्टविषयाणां गोचरीकरणे बाधकाभावेन किंचिज्ज्ञत्वमनुपपन्नमेव ।अतो विषयविषयिभावो वा विषयसन्निहितजीवचैतन्यतादात्म्यापन्नवृत्तिविषयसंयोगद्वारको जीवतद्विषययोः परंपरासंबंधो वा। अंतःकरणोपादानस्य जीवस्य वृत्तिविषयसंयोगजनितः साक्षात्संयोगो वा। अंतःकरणोपहितस्य विषयावभासकचैतन्यस्य विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्तिद्वारा विषयतादात्म्यसंपादनं वा। अन्यद्वा यत्किंचित् ॥ चिदुपरागत्वेनाभिधित्सितं तस्य सर्वस्य वृत्तिसंसर्गजनितत्वेन वृत्तिजनकानां चांतःकरणानां सर्वशरीरव्यापकजीवसंसृष्टत्वेन तत्तद्वृत्तिद्वारा सर्वेषां सर्वज्ञतापत्तिरनिवार्यैव । तत्राप्यनुपदोक्ते विषयातादात्म्यसंपादनपक्षे मैत्रस्य चैत्रदर्शनेऽहं चैत्र इत्याद्याकारकज्ञानापत्तिरधिकायातीति फल्गून्येवैतानि कल्पनानि । अथ जीवःसर्वगतोप्यविद्यावृतत्वात्स्वयमप्रकाशमानतयाविद्याकारकज्ञानापत्तिरधिकाया या विषयाननवभासयन् विषयविशेषे वृत्त्युपरागादावरणतिरोधानेन तत्रैवाभिव्यक्तस्तमेव विषयं प्रकाशयतीत्यावरणभंगपक्षः किंचिज्ज्ञत्वार्थमालंब्यते ॥ तदाप्यावरणस्य वृत्त्युपरागतिरोभाव्यत्वाज्ज्ञाने वृत्त्युपरागे तेन चावरणे भग्ने सर्वांतःकरणसंसृष्टो जीवस्तत्तद्विषयेष्वभिव्यक्तस्तंस्तं विषयं प्रकाशयेदेवेति न किंचिज्ज्ञत्वोपपत्तिः । एवं च चैतन्यमात्रावरकाज्ञानस्य खद्योतप्रकाशेन महांधकारस्येव ज्ञानेनैकदेशाज्ञाननाशो वा पटवत्संवेष्टनं वा भीतभटवदपसरणं वा चैतन्यमात्रावरकस्याप्यज्ञानांतरनाशो वाऽन्यो वा यः कश्चनावरणभंगो निरूच्यते स सर्वोपि वृत्त्युपरागज एवेति जाते वृत्त्युपरागे पूर्वोक्तरीत्या सकलांतःकरणसंसृष्टस्य जीवस्य सर्वज्ञतैवायातीति नैतेपि रोचिष्णवः पक्षा नन्वेकस्मिन्नपि जीवे जन्मांतरमापन्ने पूर्वजन्मानुसंधानादर्शनात् । शरीरभेदस्य सुखाद्यननुसंधा-

नप्रयोजकत्वं क्लृप्तमिति स शरीरभेद एवेत्यर्थः ॥ एवं किंचिज्ज्ञताया अपि प्रयोजको भवतु । तथा च व्यापकस्यापि जीवस्य शरीरांतरे शरीरांतरीयांतःकरणवृत्त्यादिभिर्ज्ञानं न भविष्यतीति न सर्वेषां सार्वज्ञापत्तिरिति चेत् । न शरीरभेदस्य पूर्वजन्माद्यननुसंधानप्रयोजकतया योगिकायव्यूहे जातिस्मरे भूतादौ च व्यभिचारेण तस्य किंचिज्ज्ञतायामप्यतंत्रत्वात् ॥ एतेनैव भोगायतनभेदस्य विश्लिष्टोपाधिभेदस्य चाननुसंधानप्रयोजकत्वं परास्तं बोध्यं "उद्यदायुधदोर्दंडाः पतितस्वशिरोक्षिभिः । पश्यंतः पातयंतिस्म कबंधा अप्यरीन् युधि" ॥ इतिभारते भूतार्थवादाच्च नच योगिप्रभृतिषु प्रभावविशेषेणानुसंधानेऽपि पूर्वोक्तोपाधीनामुत्सर्गतस्तथात्वान्नाननुसंधानप्रयोजकत्वहानिरिति वाच्यं बहुषु व्यभिचारदर्शनात् । एकत्र तथादर्शने ह्यौत्सर्गिकाननुसंधानतंत्रत्वाविघातः प्रभावविशेषसमवधानवशात्कल्पयितुं शक्यते । नतु बहुषु तथादर्शने । अतो मनुष्यविशेषेषु भूतेषु मनुष्यादुत्कृष्टयोनिषु सर्वेषु च पूर्वजन्मीनज्ञानस्य तत्रतत्रोक्तेः शास्त्रस्य प्रामाण्याच्च नपूर्वोक्तोपाधीनामननुसंधानतंत्रत्वं साधीयः । नाप्यंतःकरणभेदस्य ताथात्वं दृष्टिसृष्टिवादे पूर्वपूर्वस्यांतःकरणस्य नष्टत्वेनाग्रिमाग्रिमस्य तस्य भिन्नत्वात् पूर्वदृष्टानुसंधानाभावप्रसंगात् । साक्ष्यैक्येन तत्समर्थने तु अंतःकरणभेदस्याप्रयोजकत्वादंतःकरणांतरेणास्य सर्वज्ञताया एवापत्तेः । अंतःकरणवैजात्यादिकल्पनं तु फेनालंबनकल्पत्वात्कदर्यमेव सृष्टदृष्टिवादमालंब्यांतःकरणैक्यांगीकारेण समर्थने तु यथापादेन स्पृशामि कर्णाभ्यां शृणोमि चक्षुषा पश्यामीति करणभेदेऽप्येकस्य ज्ञानं तथा तेन तेनांतःकरणादिना तत्तज्जानामि स्पृशामि शृणोमि पश्यामीत्यादिज्ञानमपि बहिःकरणभेदस्येवांतःकरणभेदस्याप्यप्रयोजकत्वात् निर्बाधमेव । नच फलानामंतःकरणभेदस्याप्रयोजकत्वमिति वाच्यं फलबलस्य साधनभेदकल्पनामात्रप्रयोजकत्वेनांतःकरणभेदकल्पने अप्रयोजकत्वात् । फलबलेन जीवभेदकल्पनेपि दोषाभावात् । अतो व्यापक एकः प्रतिबिंबो जीव इति पक्षे कथमपि न सर्वज्ञतापत्तिपरिहारः । ननु तर्ह्यस्तु नानाजीववादः । तथासत्यंतःकरणे प्रतिबिंबितचैतन्यरूपस्य जीवस्य वृत्तिपरिच्छिन्नत्वेन सर्वसंसर्गाभावान्न सर्वज्ञतापत्तिर्भवित्री विषयप्रकाशस्तु विषयसंसृष्टवृत्तिद्वारा तडागसलिलस्य कुल्याद्वारा केदारसलिलैक्यवद्विषयावच्छिन्नब्रह्मचैतन्याभेदाभिव्यक्तौ भविष्यतीति किंचिज्ज्ञत्वमुपपत्स्यत इति चेत् । नेदं युक्तं भाति । सलिल एको द्रष्टा भवतीति श्रुत्या सुषुप्तावेव जीवब्रह्मणोरेकीभावश्रावणात्तदितरत्र जाग्रदादौ व्यावर्त्तकोपाधेर्विद्यमानत्वाच्च दर्पणसत्वे बिंबप्रतिबिंबयोरिव जीवब्रह्मणोर्भेदस्य शक्यवचनत्वात् । किंच जीवब्रह्मणोरिदानीमभेदेऽन्यो-

न्यधर्मविनिमयाद्ब्रह्मणोऽल्पज्ञताऽन्यस्य सर्वज्ञता चापत्स्यत इति नोक्तदूषणोद्धारसंभवः। यदि च बिंबभूतं विषयाधिष्ठानचैतन्यमेव साक्षादाध्यासिकसंबंधलाभाद्विषयाप्रकाशकमित्याध्यासिकसंबंधोपलक्षितचैतन्यात्मना जीवैकीभावो नतु बिंबत्वविशिष्टरूपेणेति भेदस्यापि सद्भावान्नोक्तदूषणापत्तिरिति विभाव्यते। तदापि विषयतादात्म्यापन्नब्रह्मणा त्वेकीभावोऽस्य जात एवेति। अहं घट इत्याकारकज्ञानापत्तिः। अध्यासेनांतःकरणात्तादात्म्यापत्त्याहमिति ज्ञानत्वात्। अंतःकरणधर्माणां सुखादीनां स्वास्मिन्नभिमानवद्विषयधर्माणामप्यभिमानप्रसंगश्च। अयं घट इत्यादिज्ञानाभावश्च स्यात्। यदि च विषयावच्छिन्नं ब्रह्मचैतन्यं विषयसंसृष्टाया वृत्तेरग्रभागे विषयप्रकाशकं प्रतिबिंबमर्पयति तस्य प्रतिबिंबस्य जीवेनैकीभावे विषयाग्रमितिरिति विभाव्यते। तदा तु सुतरामसंगतम्। वस्त्वंतररुद्धे दर्पणादौ प्रतिबिंबादर्शनाद्विषयसंसृष्टेऽग्रभागे ब्रह्मप्रतिबिंबायोगाद्विषयप्रकाशस्यैवाभावप्रसक्तेः। किंच प्रतिबिंबार्पकं चैतन्यं यदि बिषयाद्बहिस्तदा तस्य वृत्तिसंसृष्टत्वात्प्रतिबिंबायोगः। यदि च विषयान्तस्तदापि विषयेन व्यवधानात्तथा। यदि बिषयाद्दूरवार्त्ति तदा विषयावच्छिन्नत्वस्यैवायोगः। किंच। अंतःकरणोपाधिपरिच्छिन्नप्रतिबिंबस्याप्यणुत्वाद्दूरदर्शने वृत्तिद्वारा तस्य निर्गमात्प्राणानामपि निर्गमापत्तिः। तमुत्क्रामंतं प्राणोनूत्क्रामतीति श्रुतेः। किंचैवं कल्पनैकशरणत्वे गोलकद्वारा तैजसस्य वेगवतो वृत्तिरूपपरिणामस्य निर्गमादेव प्रमातृवृत्तिविषयचैतन्याभेदसिद्ध्या विषयाप्रकाशसंभवे गोलकातिरिक्तेंद्रियकल्पनापि वृथा स्यात्। तस्मादनादरणीया एवैते पक्षा इति दिक्॥ तदिदं हृदि कृत्वाहुः॥ अत इत्यादि॥ ॥ अतः बिंबधर्मप्रतिबिंबाधारस्वरूपयोर्विचारेण ज्ञानेंद्रियवैयर्थ्यापत्तिरूपदूषणान्तरग्रासेन च प्रतिबिंबपक्षस्यासंगतत्वात्। इदमर्थप्रकाशरूपं ज्ञानं कार्यरूपत्वात्। नित्यज्ञानातिरिक्तमेवेत्यर्थः ॥ अत्रोपष्टंभाय तर्कगतं हेत्वंतरमप्याहुः॥ चिदादीत्यादि॥ ॥ तथाच कार्यरूपं ज्ञानं यद्यात्मभिन्नं न स्यात् कोशादिषु चिदादिभिर्बुद्धेरैकार्थ्यं नस्यात्। आदिपदं व्याकरणसंग्राहकम्। बुध अवगमने बोधो ज्ञानमिति चितीसंज्ञान इति नच वृत्तौ ज्ञानत्वोपचाराच्चिदादिप्रयोग इति शक्यवचनः। कोशादीनां शक्तिग्राहकत्वेन तत्रौपचारस्याशक्यवचनत्वात्। तस्माज्जन्यं ज्ञानमतिरिक्तमेवेति निश्चयः॥ ननु नेंद्रियाणां वैयर्थ्यं बुद्धिवृत्तिजननार्थं तेषामुपयोगात्। स्वप्ने स्वयं ज्योतिष्ट्वप्रतिपादनेनान्यदा जीवस्याप्रकाशकतयाऽवश्यं वृत्त्युपेक्षणात्। अत एव चांतराणामपि ज्ञानाभावसिद्धेर्नकोपि दोष इत्याशंकायां वृत्तिस्वरूपं निश्चेतुमाहुः॥ बुद्धिवृत्तिरित्यादि॥ ॥

नेत्रनिमीलने कृते बहिर्दृष्टपदार्थस्येव कश्चिदाकारो नेत्रांतर्भासते स आकारो न बाह्यवस्तुनः । आश्रयमतिहाय तस्य तत्राशक्यवचनत्वात् । अतः स आंतरस्यैव कस्य च न भवितुमर्हतीति तदाश्रयत्वेन सांख्यैराहंकारिकं तत्वांतरं वृत्तिनामकं कल्प्यते । यथाहि प्रवचनसूत्रद्वयं प्रमार्थप्रकाशलिंगा वृत्तिसिद्धिः । भागगुणाभ्यां तत्वांतरं वृत्तिरिति । अर्थस्तु प्रमापूर्वोक्तरीतिकमाकारज्ञानं तत्सहितो योर्थप्रकाशः विषयज्ञानम् ॥ एवमुभयविधाल्लिंगात् वृत्तिसत्तानिश्चयः । यदि वृत्तिर्न स्यात् उक्त आकारो न प्रतीयेत ॥ अतैजसत्वादचलं चक्षुर्विप्रकृष्टं विषयमप्राप्नुवत्तत्प्रकाशनं नकुर्यात् । जायते च तदुभयमतः सास्तीति निश्चयः । एवं भागो विभागः अहंकारादिभज्य विषयदेशावधिगमनं गुण उक्ताकारः। ताभ्यां कृत्वा आहंकारिकं तत्वांतरं वृत्तिरिति । अभियुक्तोक्तिश्च । वृत्तयः प्रसरद्रूपास्फारिताक्षस्य यत्र च अदृष्टानुग्रहात्तत्तत्संबद्धार्थावबोधिका इति ॥ अमूर्तायास्तस्याः कथं क्रियेत्यतस्तृतीयं सूत्रम् ॥ नद्रव्यनियमस्तद्योगादिति ॥ अनियतत्वात्पदार्थानां नद्रव्य एव क्रियानियमः। किंतु यत्र यत्प्रमाणतः सिद्ध्यति तत्र तदनुमन्यामहे । अतो दूरस्थवस्तुन आकारग्रहणदर्शनात्सापि क्रियावतीत्यर्थ इति ॥ एवं मायावादिनोपि अंतःकरणविशिष्टस्य प्रमातृत्वमंगीकृत्य तस्मिंज्ञानसूक्ष्मावस्थारूपं विषयसंस्कारमाधातुं विषयेंद्रियसन्निकर्षसामर्थ्यजन्यामंतःकरणपरिणामरूपां वृत्तिमंगीकुर्वंति । नैयायिकादयस्तु नयनकिरणानां निर्गमेन विषयसन्निकर्षाज्ज्ञाने तेन च भावनासंस्काराख्यं गुणांतरं चरमस्मृतिनाश्यमात्मन्यंगीकुर्वंतो वृत्तिपदार्थमेव नेच्छंति । तत्र नेत्रांतरानुभवस्य सार्वजनीनत्वादप्रयोजकं नैयायकादिमतमिति वृत्तिः सर्वथाभ्युपेयैव । परंतु या वृत्तिः संस्काराधानाद्यर्थं जन्यत इत्युच्यते या वृत्तिः बुद्धेर्बुद्धितत्वादतिरिक्तं पदार्थांतरं न भवति । किंतु स्थितिरेव अवस्थाविशेष एव सत्वादिभिः कालादिक्षुब्धैस्सत्वादिगुणैः कृतः । तथाच यदा चक्षुषा ज्ञानं जाग्रति जन्यते तदा तदाकारिका बुद्धिवृत्तिरपि तेन जन्यते । बुद्धिर्विज्ञानरूपिणी । द्रव्यस्फुरणविज्ञानमित्यादिभिस्तल्लक्षणवाक्यैस्तस्या विशिष्टज्ञानसमानाकारतयैव सिद्धत्वात् । सैव वृत्तिर्नेत्रनिमीलने गोलकांतरेऽनुभूयते । एवमेवेंद्रियांतरजन्यापि ज्ञेया । अत एतावतैव निर्वाहे सांख्याभिमतं तस्याः पदार्थांतरत्वमप्रामाणिकं गुरुभूतं च । तथैव मायावादिप्रतिपन्नं तस्याज्ञानप्रतिबिंबाधारत्वमपि व्यावहारिकत्वमिति कल्पनावैरूप्यादिदोषग्रासात् । अत उक्तरीत्येंद्रियसार्थक्यादिसाधनेऽपि जन्मज्ञानमतिरिक्तमवश्यमभ्युपेयमित्यर्थः ॥ नन्वस्त्वेवं तथापि इंद्रियसंप्रयोगोत्तरं संप्रयुक्तार्थसमानो वृत्तावाकारो जायत इति प्रमा भविष्यति नतु भ्रमादिकं शुक्त्यादौ तद्विरुद्धस्य रजताद्याकारस्याभावेन वृ-

त्तौ तत्सर्पणायोगात् । अत इदमपि मतमनुपपन्नमित्याशंकायामाहुः ॥ अत ए-
वेत्यादिवृत्तेर्गुणजन्यत्वांगीकारादेव संशयोऽथविपर्यास इत्यत्रोक्तानां भ्रमादिवृ-
त्तीनामन्यख्यात्याद्यंगीकारेणोपपत्तिरिति नदोष इत्यर्थः ॥ इदं यथा तथा तृती-
यस्कंधे बुद्धिलक्षणे व्युत्पादितम् । नन्विंद्रियाणामनुग्रह इतिबुद्धेः कार्यलक्षणा-
त्तस्या इंद्रियानुग्राहकतयेंद्रियसमानकालिकत्वाद्वृत्तेस्तदभेदे तस्यामिंद्रियजन्यत्वं
दुर्घटमित्याकाक्षायां तत्साधयितुमिंद्रियाजन्यत्वे बाधकं तर्कमाहुः ॥ ॥ यदित्या-
दि ॥ ॥ क्वापीति ॥ कस्मिन्नप्यंशे । अयमर्थः । यत्र भ्रमद्वारो गृह्यते तत्र वृ-
त्त्युपरंजकस्य भ्रमणस्य विषयनिष्ठत्वाभावेन ततश्चिदुपरागायोगात् । घटाका-
रिकया वृत्त्या विषयावरणाभिभवेन क्रियांशे विक्षेपस्याप्यशक्यवचनत्वात् वृत्त्या
विषयचैतन्याभेदाभिव्यक्तावपि विषयप्रकाशके ब्रह्मचैतन्ये तदाभावान्नयनप्रदे-
शे दतननुभवेनेंद्रियेपि दतभावाद्वृत्तिमात्रजनकस्येन्द्रियसंप्रयोगस्य विषयकारण-
त्वात्क्लप्तेः संप्रयोगेनापि विषये तदाधानायोगादंतःकरणावच्छिन्ने प्रमातर्यप्यहं-
भ्रमामीत्यननुभवात् । भ्रमः सर्वत्रालब्धसत्ताको घटेऽपि न स्यात् । यस्मादप्यसन्
घटदेशेऽनुभूयते । तस्मात्तद्देशावच्छेदेनानुभूयमानायां वृत्तावस्ति । यस्मादेवं त-
स्माद्वृत्तिरिंद्रियजन्यैवेत्यर्थः ॥ एवं सिद्ध एकत्र इंद्रियजन्यत्वेऽन्यत्रापि तथैवां-
गीकार्यमिति भावः । नच शुक्तिरजतादिस्थले इदमाकारवृत्तौ सत्यामपि रजता-
ध्यासदर्शनादंशत एवावरणानाश इत्यंशांतरेणेहापि भ्रमविक्षेपोपि भविष्यतीति
नतदननुभवानुपपत्तिरिति वाच्यम् । विषये तत्सत्वेऽन्येषामपि तदनुभवापत्तेः ।
अन्येषां घटद्रष्टृणां प्रमाणवृत्त्या तदंशावरणनाशादस्यापि तदननुभवापत्तेश्च
विषयाश्रितावरणपक्षस्यैव दुष्टत्वात् । पुरुषाश्रितत्वपक्षे तूक्तरीत्या प्रमातरि प्र-
माणे च वक्तुमशक्यत्वेन भट्टकुटीप्रभातवदननुभवस्यैवाप्यात् शुक्तिरजतस्या-
प्येतत्तुल्यत्वात् । एवं मूलाज्ञानावस्थारूपाज्ञानानां नानात्वमंगीकृत्य घटावर-
काज्ञानस्य घटाकारकवृत्त्या निवृत्तावपि नैश्चल्यावरकस्यानिवृत्त्या भ्रमविक्षेप
इत्यादरणेपि पूर्वोक्तरीत्या पुरुषनिष्ठतैव तस्य वाच्येति तस्य तद्वदेवासिद्धेः ।
वृत्तेर्ज्ञानात्मकत्वमात्रकल्पनया तस्योत्पत्तिनाशशालित्वमात्रेण निर्वाहे विषयाव-
रणतन्नानात्वकल्पनयोर्गुरुत्वादप्रामाणिकत्वाच्च । एतेनैव घटावरकाज्ञानगता-
वरणशक्तिमात्रनिवृत्तिरपीति पक्षो निरस्तो बोध्यः । नैश्चल्यावरणमंतरेण भ्रमण-
विक्षेपासंभवादावरणशक्तिनिवर्त्तकताया अप्रयोजकत्वाच्च । जलप्रति बिंबितवृक्षा-
धोग्रत्वभ्रमे तु प्रतिबिंबपदार्थस्यातिरिक्तत्वेन मूलसमीपवर्तिनि जले मूलस्य ततो
विप्रकृष्टेग्रस्य प्रतिबिंबात् प्रतिबिंबत्वेनैवावगाहाद्भ्रमत्वस्यैव दुर्वचत्वेन तत्रावरणा-

दिकल्पनाया एवायोगाच्चेति दिक् । तर्कान्तरमाहुः ॥ ॥ जीवस्येत्यादि ॥ ॥ इंद्रियाणां जागरणे जाग्रत् तेषां लये स्वप्न अंतरिंद्रियस्यापि लये सुषुप्तिरितीं-द्रियहेतुकमवस्थात्रयं गुणतस्तत्तथा न स्यादित्यर्थः ॥ १३९ ॥

ब्रजभाषाटीका ।

मायावादिके मतमें कार्यरूपज्ञानकी उत्पात्ति नहिं मानें हैं किंतु ज्ञानके स्वरूपकूँ नित्यमानें हैं तासों नित्य ज्ञानको जो बुद्धिवृत्तिमें प्रतिबिंब है वाकूँ कार्यरूप ज्ञान कहें है तहाँ उनसों यह पूछनों योग्य है तुम केवल ज्ञानरूप चितकूँ नित्य कहो हो तैसें सतकूँ तथा आनंदकूंभी नित्य माननो चाहिये क्योंकि (सत्यं ज्ञानमनन्तं ब्रह्म) याश्रुतिमें सत् ज्ञान आनंदरूप ब्रह्म कह्यो है तासों जैसे ज्ञान ब्रह्मस्वरूप है तैसें सत् आनंदभी ब्रह्मस्वरूप है नित्यमानो हो तो इन तीनो पदार्थनकूँ हीं नित्य माननों योग्यहै किञ्च ज्ञान रूप-रहित वस्तु है याको कोई कालमें कोई देशमें प्रतिबिम्ब नहिं हो-यसके है ॥ १३८ ॥ दूषणांतर आज्ञाकरे है--अविद्यामें ब्रह्मरूप ज्ञा-नको प्रतिबिंब जीव कहावे है,बुद्धिमें ब्रह्मात्मक ज्ञानको प्रतिबिंब लौकिक व्यवहारमें आयबेवारो ज्ञानकहावे है, यह कथन मायावा-दीको जब बनसकें, बिद्या बुद्धि ये दोनो शुद्ध होय, ये तो दोनों-ही मलिन हैं मलिन वस्तुमें प्रतिबिंब नहि वनसकें है ॥ जो वि-द्याबुद्धिकूं शुद्ध माँनके इनमें अरूप ज्ञानकोभी प्रतिबिम्ब मानोंगे तो रूपवाले शरीरके भीतरके अन्त्रनको तथा बाहिरके घटादि सदंशनको अविद्या बुद्धिमें प्रतिबिंब होवेमें कछु बाध कह्यो नहिं तब तो जा अविद्यामें व्यापक जीव प्रतिबिंबितहै वा अविद्या-मेंही घटादि सब पदार्थ प्रतिबिंबितहैं सबके साथ तादात्म्यसंब-न्धवाले ब्रह्मके समान जीवभी सब पदार्थके साथ संसर्गवालो हो-यवेसों स्वरूपचैतन्यकरकें सब पदार्थनको प्रकाशक होय सके हैं तब तो सब जीवनकूँ सर्वज्ञता होनींचैये कदाचित् कहोगे अन्तः-

कत्वाल्लाघवाच्च त्वदुक्तरीतिकसत्वोत्कर्षापकर्षतारतम्यवती अंतःकरणवृत्तिरेव वैषयिकं सुखम् । साचोत्पत्तिमती भवताप्यंगीक्रियत एवेत्यतो न सा विवादास्पदमिति जानीहि । एवमेव वृत्तिरूपदुःखस्याप्युत्पत्तिर्ज्ञेया ॥१४०॥नैयायिकादयो ब्रह्माणि सुखं नाङ्गीकुर्वन्तीति ब्रह्मसुखस्याप्युत्पत्तिः संभाव्यत इति तन्निरासायाहुः ॥अंधंतमइत्यादि ॥"मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्" इति वाक्यात् "अंधं तमः प्रविशंति" इति श्रुतेश्चासुराणामविद्योपासकानां तत्फलम् ॥ तस्य च नित्यानंदतिरोभावरूपत्वादुत्पत्तिरहितत्वम् ॥ तदग्रे दुःखस्वरूपनिरूपणे व्याकरिष्यते । एवं मनोधर्म्माणां ज्ञानसुखादीनामुत्पत्तिं निरूप्य मनोधर्मांतरेपि तामतिदिशंति ॥ तथेत्यादि । ह्रीस्तु अकर्मणि जुगुप्सा । जुगुप्साह्रीरकर्मस्विति भगवता लक्षितत्वात् ॥ इच्छा अभिलाषरूपा प्रसिद्धैव ॥ आदिपदेन द्वेषयत्नप्रीतिप्रभृतयो नाना तु व्यवसायगम्या ज्ञेयाः॥ ह्रीर्धीभीरित्येतत्सर्वं मन एवेति श्रुतौ प्रकारवाचिना इतिशब्देन समुच्चितत्वात् । तुल्या इति समानाकाराः ॥ ॥ दोष इति ॥ ॥ भगवति विकारित्वरूपः कामे अनित्यत्वविकारत्वरूपश्चेत्यर्थः ॥ १४१ ॥ एवमिति । " उत्पद्यंते विलीयंते " इति मूलोक्तेनोत्पादविनाशशालित्वेनेत्यर्थः ॥ युक्तिमिति ॥ ॥ उत्पत्त्यादिस्वरूपविवेचकतर्करूपां नित्यत्वसाधिकामित्यर्थः ॥ आविरित्यादि ॥ ॥ आविः प्रकटं भावयति कारणांतःस्थं कार्यं बहिःप्रकटीकरोति या शक्तिर्निमित्तगतोपादानगता च सा आविर्भावशब्दवाच्येत्यर्थः ॥ सत्कार्यवादे शक्तस्य शक्यकरणांगीकारात्सा कारणगता । आविर्भवनं वा धर्म इति ॥ प्राकट्यरूपो धर्मः कार्यगतः स आविर्भाव इत्यर्थः ॥ तथा तिरोभवनम् । मुद्गरादिगता तिरोभाविका शक्तिर्घटादिगतं तिरोभवनं वा तिरोभावः ॥ एते शक्तित्वेन धर्मत्वेन च व्यवस्थाप्यमाना उक्ताश्चत्वारोपि भगवच्छक्तिद्वयावांतरभेदरूपत्वाद्भगवतः शक्ती इत्यर्थः ॥ एतेषां भगवच्छक्तित्वे प्रमाणं सूचयंत आहुः ॥ अनंतेत्यादि ॥ परास्य शक्तिर्विविधैव श्रूयत इति श्रुतेरित्यर्थः ॥ कारणगतशक्तीनां भगवच्छक्तित्वसाधनाय विपक्षबाधनाय च कारणे शक्तिसाधकं तर्कमाहुः ॥ ॥ अन्यथेत्यादि ॥ ॥ यदि कारणसामान्ये कार्यजनमानुकूला तत्तत्कारणविशेषे तत्तदाकारककार्यादिजननानुकूला च शक्तिर्न स्यात्तदा तथेत्यर्थः ॥ अत्रैतद्बोध्यम् ॥ ॥ कार्यस्य नियतावधिकत्वदर्शनात्प्रागभावस्य च पूर्वं दूषितत्वात्सत्कार्यवादस्य शिष्टादृतत्वम्॥तत्र प्रथमपक्षे तंतुतुरीवेमादिभ्यः पटोत्पत्त्या मृद्दंडचक्रादिभ्यश्च घटोत्पत्त्या तस्य तत्तज्जनने शक्तिर्निश्चीयते । सा च न स्वभावो नापि स्वरूपम् ॥ तथासति तस्य सार्वदिक्त्वात् । शीर्णेभ्योऽपि तंत्वादिभ्यः पटाद्युत्पत्तिः स्यात् । भर्जिताद्बीजादप्यंकुरोत्पत्तिः स्यात्

मणिसमवधानेपि वह्नेस्तृणादिकं दह्येत । स्वभावस्यानपायित्वात् । स्वरूपस्य च सत्वात् । अतः सा कालेन भर्जनेन च नाश्या मणिसमवधानप्रतिबध्या च काचित्स्वभावात्स्वरूपाच्चातिरिक्तैवांगीकार्या। ननु तंत्वादीनामविशीर्णत्वेन बीजानामप्यभर्जितत्वेन रूपेणैव कार्यजननदर्शनाद्रूपभेदमात्रांगीकारेण निर्वाहेऽतिरिक्तशक्तिकल्पनं गुरुभूतम्॥एवं वह्निस्थलेऽपि मणेः प्रतिबंधकत्वेन तदभावस्य प्रतिबन्धकाभावरूत्वात्तस्य सहकारित्वेन निर्वाहाच्च ज्ञेयम् । यदि च प्रतिबंधकत्वं नाम कारणीभूताभावप्रतियोगित्वं तदभावस्य च कारणत्वमिति कल्पनाद्वयात् । गौरवं विभाव्यते तदा शक्तिकारणतावादेपि शक्त्यंतरेण स्वरूपतः केवलायास्तस्याः कारणत्वादर्शनात्प्रतिबंधकत्वस्य च केनचिद्रूपेण भवतापि कल्पनीयत्वात् । कल्पनाद्वयं भवतोऽप्यापतीति तौल्यमेव । वस्तुतस्तु न मण्यादीनां प्रतिबंधकत्वं नवा तदभावस्य कारणत्वं किंतूत्तेजकाभावविशिष्टमण्यभावकल्पनाऽजागलस्तनप्रायैवेति चेत् । नेदं युक्तं वक्तुम् ॥ गुरुशरीरतादृक्कारणस्वरूपप्रवेशेन गुरुभूतस्य तादृक्कार्यकारणस्य कल्पनापेक्षया श्रुत्यनुगृहीतस्यातिरिक्तशक्तिकल्पनस्यैव वरीयस्त्वात् । किमत्र गुरुत्वमिति चेत् । उच्यते ॥ मण्याभावस्य प्रतिबंधकाभावत्वेन प्रवेशे प्रतिबंधकस्य च पूर्वोक्तलक्षणकत्वेऽत्रापि कार्यकारणभावद्वयकल्पनात्रापयाति विसामग्रीहेतुत्वं प्रतिबंधकत्वमिति लक्षणकत्वे कल्पनाद्वयाच्चौल्यं वस्तुतस्त्वभावप्रवेशादत्रापि गौरवप्रतिपत्तेः ॥ तथासति शरीरगौरवस्याजागलस्तनप्रायतैव मण्यभावत्वेन प्रवेशे तु नानाकार्यकारणभावकल्पनाऽत्यन्तमेव गुर्वी मंत्रौषधादिनापि दाहाभावदर्शनात् । एवमुत्तेजकानामपि नानात्वाच्चत्तत्स्वरूपेण प्रवेशे ततोऽप्यत्यंतगौरवम्॥यत्किंचित्त्वेन प्रवेशे यावत्तदभावविशिष्टमण्यभावविशिष्टस्य वह्नेर्दाहंप्रत्यकारणत्वाच्चतो दाहाभावापत्तिः । तथैव यावत्त्वेन प्रवेशेपि यत्किंचिद्वैशिष्ट्ये ॥ तथा । यथाकथंचित्त्वेन प्रवेशेऽपि तादृशकार्यकारणभावज्ञानस्योत्तेजकतदभावमणितदभावतत्तद्वैशिष्ट्यज्ञानाधीनतया तादृशगुरुशरीरकरणतास्वरूपज्ञानस्यैव दौर्घट्यमिति तदपेक्षया शक्तिकल्पनमेव सौकर्याज्ज्यायः । बीजानामप्यभर्जितत्वेनैव रूपेण नाकारणता । दावदग्धवेत्रबीजेभ्यः कदलीकांडजननस्य भामतीनिबंधे प्रदर्शितत्वात् । अतस्तत्रापि काचिच्छक्तिर्भर्जनेन नाश्यत अपरा आधीयत इति मंतव्यम् । किंच ॥ कार्यकारणभावपक्षेपि प्रसिद्धरूपातिरिक्तं रूपांतरं तूत्पादविनाशशालिकल्पनीयमेवेति नाम्न्येव कलहः । पर्यवस्यति । ननु स्वरूपे इति मुधैवायमाग्रह इति दिक् । एवं सिद्धायां शक्तौ बीजादिपरिणामस्थलेपि सैव मंतव्या ताश्च सर्वत्र भगवत एव मयूराश्चित्रितायेनेत्यादिवाक्यात् । परास्य शक्तिरिति श्रुत्यनुगृहीतत्वाच्च भगवतैव परं तत्र तत्र

कार्यार्थं प्रजायेयेतीच्छया विभज्य स्थापिताः ॥ विश्लिष्टशक्तिर्बहुधेव भातीत्यादि-वाक्यात्तदाहुः ॥ तस्मादित्यादि ॥ ॥ एवं प्रथमपक्षे कारणत्वं व्यवस्थापितम् ॥ अथ द्वितीयपक्षे कथं मृद्दंडादिषु घटादिकारणत्वव्यवहार इत्याकांक्षायामाहुः ॥ धर्मादित्यादि ॥ ॥ तदिदं व्याकुर्वंति प्रभवः ॥ अत्रेदमित्यादि ॥ ॥ धर्मादिति ॥ भगवद्धर्मात् ॥ कारणमिति ॥ ॥ आविर्भावजनकत्वात् । घटादि-कारणं तथा च दंडमृदादिषु घटादिकारणत्वव्यवहारो भ्रान्त एव नतु तात्विकः ॥ पदार्थमात्रस्य नित्यत्वादित्यर्थः ॥ एवमनेन पक्षेण सांख्योक्ताविर्भावतिरोभा-ववादस्याप्यैकदेशित्वं बोधितम् ॥ उक्तं दृढीकर्तुं प्रतिबंदीमवतारयंति ॥ नन्वि-त्यादि ॥ ॥ मूले—अन्यथेत्यादि ॥ ॥ अन्यथा धर्माधर्मसिद्धिमनुपगम्य उत्प-त्तिपक्षे धर्मिणोऽप्युत्पत्त्यंगीकारे दोषः । उत्पत्तेरुत्पत्त्यंतरानंगीकारात्तस्याः प्राप्तेः नित्यत्वे घटादिपदार्थानिर्वाच्यत्वरूपो दोषस्तुल्यः । वादिप्रतिवादि-नोः समः । तथा च साम्यादेव न वयं पर्यनुयोगार्हा इत्यर्थः ॥ प्रतिबंदीं व्युत्पाद-यंति ॥ उत्पत्तिरित्यादि ॥ ॥ अयमर्थः ॥ ॥ उत्पत्तिर्नाम किं प्रागभाव उत कश्चिद्धर्मः । तत्र नाद्यः । तस्य घटपूर्वकालवर्त्तित्वेन इदानीं घटोत्पत्तिरस्तीति प्रत्ययोभिलापश्च स्यात् । कोशादौ तयोः पर्यायता चोच्येत । द्वितीयश्चेत्तस्य साधारत्वनियमादुत्पत्तिदशायामपि धर्मे वाच्य एव ॥ अन्यथा स कस्मिन्धर्मिणि भ-वेत् । नच यथा दशदिनानि व्यतीयुः षड्भिरहोभिर्गन्तासीत्यादौ भूतभाविषु दि-वसेष्वसत्स्वपि दशत्वषट्त्वसंख्यारूपो धर्म उपेयते तथोत्पत्तिरप्यनुत्पन्नघटाद्या-धाराभ्युपेयेति वाच्यम् ॥ तेषामपि कालचक्रे सूर्यपरिस्पन्दवशेन तत्तद्वत्सरर्त्तुमास-पक्षगततया पुनःपुनः परिवर्त्तमानानां सतामेव संस्कारादिनोपनये तत्रापेक्षाबुद्ध्या संख्याकल्पनस्य शक्यत्वेऽप्युत्पत्तेरकाल्पनिकत्वेनात्र तथावक्तुमशक्यत्वात् । अथ तत्रापेक्षाबुद्ध्या संख्या जन्यत एव नकल्प्यत इति चेत् ॥ न समवायिनं विना केवलनिमित्तेन कार्यजननस्य क्वाप्यसिद्धित्वेनात्र तथावक्तुमशक्यत्वात् । चिंतामण्यादौ निरुपादानकदधिवसनसुवर्णादिजननं सिद्धमिति चेत् । न अ-विक्रियमाणानां तेषामेवोपादानत्वात् ॥ योगित्वसामर्थ्यविशेषेण दध्यादिजनक-भूतभेदाकर्षणस्य तत्र वक्तुं शक्यत्वाच्च । अनुपादानकसृष्ट्यंगीकारे समवाय्यस-मावायिनिमित्तजन्यत्वं सर्वस्येति नैयायकादिसिद्धांतहानेश्च । किंच । जन्यत इति पक्षेपि संख्यादिवदुत्पत्तेरप्युत्पत्तिः स्वीकार्या । एवंसति निःप्रमाणकानव-स्थापत्तिस्तत्तत्करणादिकल्पनागौरवग्रासश्च ॥ उत्पत्तिर्जातेत्यादि ॥ प्रत्ययानुरो-धादुत्पत्तेरुत्पत्तिमंगीकृत्य विशेषाणां स्वतो व्यावर्त्तकत्ववत्परिसमाप्तौ तु तावतैव

निर्वाहाद्धर्मिण उत्पत्यंगीकारोऽजागलस्तनप्राय एव । अनेकतत्प्रागभावध्वंसादि-
कल्पनाग्रस्तश्चेत्यनादरणीय एव । एवमेव वर्त्तमानप्रागभावप्रतियोगित्वमुत्पत्ति-
रित्यप्यसंगतम् ॥ प्रागभावस्य पूर्वं दूषितत्वेन तस्यैवाभात् ॥ प्रतियोगित्वस्य स्व-
रूपसंबंधविशेषत्वेन स्वरूपद्वयात्मकत्वात् ॥ घटस्वरूपस्य तदानीमभावेन तस्य
वक्तुमशक्यत्वाच्च । ननु भाविनीं सत्तामादाय तत्र प्रतियोगित्वमुच्यत इतिचेत् ।
न धर्मिणस्तदानीमसत्वेन भाविन्याः सत्ताया अनिश्चयात्तथावक्तुमशक्यत्वात् ॥
सूक्ष्मरूपेण वर्तमानामेव सत्तामादायोच्यत इत्यस्यापि वक्तुं शक्यत्वाच्च ।
नापि प्रथमसमयवर्त्तिभावविकारत्वं तत् ॥ तस्य कालनिष्ठत्वे उत्पद्यंते काल इति
प्रतीत्यापत्तेः । भावनिष्ठत्वे तस्य भावस्यापि तदानीं सत्वापातेन भट्टकुटीप्रभा-
तात् ॥ आद्यक्षणसंबंधः सेतिचेत्तदापि संबंधघटकतया घटादिसत्ता आवश्यकैव
तदेतद्धृदि कृत्वोक्तम् ॥ अतो यः कश्चिन्निरूप्यतामित्यादि ॥ एवमुत्पत्तेः पूर्वं
धर्मिसत्तां साधयित्वा प्रतिबंदेरनुत्तरत्वाद्धर्मिनित्यत्वसाधनायानित्यत्वबाधकं
तर्कमाहुः ॥ घटोभवतीत्यादि ॥ ॥ अत्रापादकमनुक्तमेव सिद्ध्यतीति यदि घ-
टः सदा सन्न स्यादिति कंठतो नोक्तम् ॥ क्रियाश्रयत्वस्य कर्तृत्वेन भवन-
क्रियाश्रये घट एवाख्याताभिहिते लडर्थकालस्य समानपदोपात्तत्वेनान्वया-
त्तदानीं घटानंगीकारे तदनन्वयापत्त्यनुपपन्नः स्यादित्यर्थः । नच कालान्वय-
स्य समानपदोपात्ते व्यापारेऽपि शक्यवचनत्वान्नानुपपत्तिः प्रयोगस्येति वाच्यम् ।
एवमप्याश्रयवर्त्तमानत्वमंतरेण व्यापारवर्त्तमानताया अनुपपद्यमानत्वेन घटसत्ता-
या अनुक्तसिद्धत्वात् । पदांतरोपात्तफलान्वयपक्षेपि सत्तारूपस्य फलस्य धर्म-
त्वेन धर्मिणं विना तदसिद्ध्या तदा धर्मिसत्ताया अर्थादेव सिद्धेः । नचैवं सत्युत्प-
न्नेपि घटे उत्पद्यत इति प्रयोगापत्तिः कालान्वितस्य कर्त्तुः सत्वादिति वाच्यं
फलं द्वारीकृत्यैवान्वयांगीकाराहुत्पत्तिरूपे फले तिरोहिते द्वाराभावेन कालान्वया-
भावात्तादृशप्रयोगस्यानायासेन सिद्धेः। ननु घटो भवतीत्यादौ भवतिरुत्पत्त्यर्थक
इतिचेत् तत्राहुः ॥ ॥ भूसत्तायामित्यादि ॥ ॥ फलितमाहुः ॥ अत इत्यादि ॥ स-
र्वश्रुतेरिति इदं सर्वं यदयमात्मा सर्वं खल्विदं ब्रह्मेत्यादिश्रुतेः।तथाचैवं श्रुत्यनुकूला-
भिर्युक्तिभिर्धर्मिनित्यत्वे सिद्धे प्रतिबिंबादेरप्यत्रोत्तरत्वमेवेत्यर्थः ॥ ननु भवतु धर्मी
सदातनस्तथापि व्यवहारसिद्ध्यर्थं धर्माद्धर्मसिद्धिस्त्वंगीकृतैवेति धर्मस्योत्पत्त्यादि-
भिरनित्यत्वेनाभगवत्वात्सर्वश्रुतिपीडा तु नापैतीत्यत आहुः ॥ ॥ तदन्वित्यादि ॥
अयमर्थः । निमित्तकारणत्वेनाभिमतेषु कार्यत्वेनाभिमतस्याविर्भाविका या भ-
गवच्छक्तिस्तया समवायित्वेनाभिमते दुर्ज्ञेयरूपेण विद्यमानमेव कार्यं आविर्भा-

व्यते स आविर्भाव उत्पत्तिरित्युच्यते । तत्संसर्गेण कार्यस्योत्पत्तिमत्त्वम् । तत्र निमित्तसामग्रीकोटौ प्रविष्टस्य क्षणाख्यस्य कालावयवस्य सूर्यपरिस्यंदांतरेण तिरोभावे तद्विशिष्टानुत्पत्तिरपि विशेषणतिरोभावात्तिरोहितेति उत्पन्ने कार्ये उत्पद्यते इति न व्यवहारः ॥ सूर्यपरिस्यंदतिरोभावश्चेश्वरेच्छामर्यादया 'भीषोदेति सूर्य' इत्यादिश्रुतेः । तस्या अपि यद्यपि नित्यत्वं तथापि तदाकारः श्रुत्यविरोधेन तथा कार्यबलात्कल्पः स एव विद्वन्मंडने प्रदर्शित इति न व्यवहारानुपपत्तिर्न वा धर्मानित्यता । द्वितीयपक्षेतु वक्ष्यमाणरीतिकभगवदिच्छयैव तथा । तदेतदुक्तं धर्माणामपि तेनैव न्यायेन भगवत्त्वं सेत्स्यतीति । तथाच न सर्वश्रुतिपीडेत्यर्थः ॥ एवं च प्रथमसमयमात्रसंसर्गीभावविकार उत्पत्तिरिति पक्षो निरस्तः । तेन गौडवार्त्तिकोक्ताः सत्कार्यवाददोषा अपि विकारानंगीकारादेव परिहृताः ॥ अतएव च श्रुतिर्विकारस्य वाचारंभणतां वक्ति नतु वस्तुनो मिथ्यात्वम् ॥ तथा प्रतीत्यभावोऽन्यथाप्रतीतिश्चाविद्यावलेपादिति नकाचिदनुपपत्तिः । तदेतद्धृदि कृत्वाहुः ॥ अतो भ्रांतानामित्यादि ॥ ॥ भ्रांताः श्रुतिसंसर्गरहिता नैयायिकाद्याः । बालाः श्रुतिमनुसरंतोऽपि तात्पर्यज्ञानरहिता मायावादिप्रभृतयः । आद्याः शब्दोल्लंघनकर्त्तारः । द्वितीया अर्थस्य । अतो नदूषयाम इत्युपहासः ॥ आविर्भावे प्रयोजनमाहुः ॥ ॥ सुरेत्यादि ॥ ॥ सर्ववस्तुस्वरूपेणेति विद्यमानस्येति शेषः ॥ ॥ तदुद्गम इति ॥ तेनतेन प्रतिनियतस्वरूपेण दर्शनविषयात्वयोग्यतेत्यर्थः ॥ नन्वेवमपि सर्वश्रुतिविरोधो नापैति । भगवत आनंदरूपत्वेन दुःखे व्यभिचारादित्यत आहुः ॥ ॥ दुःखं त्वित्यादि ॥ ॥ तथा च यथा आविर्भावस्य फलं निर्वृतिस्तथा तिरोभावस्य फलं निर्वृतितिरोभाव इति तेन रूपेण तस्यापि भगवदभिन्नत्वान्न भगवत्वव्यभिचार इत्यर्थः ॥ एवं सर्वस्य पदार्थजातस्य वास्तवं स्वरूपं सोपपत्तिकं निरूपितम् ॥ १४२ ॥

व्रजभाषाटीका ।

( सुखदुःखसमुत्पत्तिरिति ) सत्वगुणके बढवे घटवेसों जाको ( तरतमभाव ) अर्थात् बढनों घटनों होवे ऐसी जो अंतःकरणकी वृत्ति वासों लौकिक सुख कहैहैं । ऐसेंही तमोगुणके बढवे घटघटवेसों तरतमभाववाली अंतःकरणकी वृत्ति लौकिकदुःख कहावे हैं इन वृत्तिरूप सुखदुःखनकी उत्पत्ति तो परमतवालेभी माने हैं तासों यामें विवाद नहीं । नैयायकादिक ब्रह्ममें सुख नहीं माने हैं

तासों ब्रह्मसुखकी भी कोई उत्पत्ति मानले ताको निरास करे है ( ब्रह्मसुखात्पृथगिति ) ब्रह्मसुखसों लौकिक सुख न्यारो है ब्रह्मसुख उत्पत्तिवालो नहिं है ॥ ऐसेंही अविद्याके उपासक जे असुर हैं उनको अंधतममें प्रवेश होवे है नित्य जो ब्रह्मानंदहै वाके तिरोभावसोंही अंधतम कहे हैं नित्यानन्द तिरोभावरूपहै ताहीसों उत्पत्तिरहित होयवेके कारणसों वह नित्यहै अर्थात् असुरनकूँ अन्धतमप्रवेश सदाही रह्यो आवेहै ऐसेंही लज्जा इच्छा द्वेष प्रयत्न प्रीति आदि जे भगवद्धर्मसों जुदे मनके धर्म हैं उनकी उत्पत्ति होवेहै यद्यपि भगवान्के धर्म इच्छादिक तथा मनके धर्म इच्छादिक ( तुल्य ) इकसारही मालुम पडे हैं तथापि उनको समान नहिं समुझनो कपूर और कपास दोनो एकसे सफेदहैं तथापि बुद्धिवान् पुरुष इनकूँ एक नहिं मानेहैं ऐसेंही भगवान्के धर्म जे इच्छा आदि हैं वे नित्यहैं भगवद्रूप हैं मनके धर्म जे इच्छा द्वेषादिक हैं वे कार्यरूपहैं अनित्यहैं तहां कितनेक ऐसी शंका करेहैं ( सोऽकामयत ) या श्रुतिमें बहुतरूप होयवेके लिये भगवान् इच्छा ( कामना ) करते भये ऐसो लिख्योहै सो कैसे बनसकें इच्छा तो विकारहै तथा अनित्य पदार्थहै जो भगवान् इच्छा करतेहोय तो भगवानभी इच्छावाले होयवेसों विकारी भये इत्यादि शंका करे हैं ताकोभी यहही समाधानहै । अर्थात् भगवान्के धर्म इच्छा आदिकहैं वे लौकिक कार्यरूप अनित्य धर्मनसों न्यारे हैं तथा नित्यहैं भगवद्रूपहैं याप्रकारही अवतारादिकमेंभी इच्छा प्रीति लज्जा आदि धर्म हैं वेभी नित्य अविकारी आविर्भावतिरोभाववाले नित्यहीहैं याप्रकार सब पदार्थनकी उत्पत्ति लयवाले होयवेके कारणसों तुल्यता बतायके घटपटादिक ( घडा वस्त्र ) सब पदार्थ ब्रह्मरूप हैं तासों नित्यहैं यह

बात सिद्ध करवेके लिये उत्पत्ति नाशादिकनके स्वरूपको निर्णय करवेवारी युक्तिकूँ आज्ञा करैहै ( आविर्भावतिरोभावाविति ) करणस्थित जो कार्य ताकूँ कारणसों बाहिर प्रकटकरवेवारी जो निमित्तकारण तथा उपादान कारणमें रहवेवारी शक्ति तासों आविर्भाव कहे है ऐसेंही तिरोभाव करवेवारी जो शक्ति सो तिरोभावशक्ति कहावे हैं अथवा कार्यमें जो प्रकटहोयवेकी सामर्थ्य है वो आविर्भाव कहावेहै तथा कार्यमें जो तिरोभूतहोयवेकी सामर्थ्य है वो तिरोभाव कहावेहै ये दोनों भगवान्की शक्ती हैं ( परास्य शक्तिः ) इत्यादिश्रुतिनमें भगवान्कूँ अनन्तशक्तिवाले वर्णन कियेहैं। यदि कारणमें आविर्भाव शक्ति नहिं होय तो बीज वृक्षरूप कैसे होजावेहै तथा वीर्य देहरूप कैसे होजावेहै तासों उनउन बीजवीर्यादि कारणमें रहवेवारी अपनें अपनें कारणकेही आकारके कार्यकूं प्रगट करवेवारी भगवान्की आविर्भावशक्ति जरूर माननी वहही शक्ति वीर्यादिकनकूं देहादि रूपकरके परिणामकरवेमें कारण है यामें श्रीभागवत एकादशस्कंधमें "शक्तिभिर्दुर्विभाव्यभी रचितावयवा हरेः ।" इत्यादिवचन भी प्रमाणहैं दूसरे पक्षमें प्रगट होनो तथा तिरोहित होनो आविर्भाव तिरोभाव शब्दनको अर्थ होयहै ये दोनो धर्म घटादिकार्यमें रहे हैं घटादिकनके प्रति आविर्भाव धर्मही कारणहै ये दोनो भगवच्छक्तिहैं तासों नित्यहैं और घटादि पदार्थभी नित्यही हैं उनके आश्रयही ये दोनो धर्म रहे आवेहैं। तहाँ आविर्भाव तिरोभाव नित्यहै तो सदाही घटादिकनके आविर्भाव तिरोभाव होतेरहनो चाहिये ऐसी शंका नहिं करनी क्योंकि जैसे आविर्भाव तिरोभावशक्तिहै तैसें भगवान्की इच्छाशक्तिभी सब शक्तिनसों प्रबलशक्ति है तासों भगवान्की इच्छासहितही आविर्भाव तिरोभावशक्ति पदार्थनको

प्राकट्य तथा तिरोधान करसकैहै तथा उत्पत्ति मानवेवारेनके मतमैंभी उत्पत्ति धर्म कोन धर्मीमें रहे हैं तासों धर्मीकूं नित्य माननो और उत्पत्तिकी उत्पत्ति तथा वाकी उत्पत्ति मानवेरूप अनवस्था दोषभी उनके मतमैं आवेहैं किंच घटादिधर्मीपदार्थनकूं नित्य नहीं मानेंगे तो घट नष्टहै घट उत्पन्न नहिं भयो है घट होवेहै इत्यादि व्यवहारभी नहिं बनसकेंगे क्योंकि उत्पन्न नहिं भयो तथा फूट्योभयो जो घडा वाकूँ फूट्यो ऐसेंही कहसकेंगे फूट्यो भयो घडाहै ऐसें नहिं कहसकेंगे तासों जा समयमें घडा उत्पन्न नहिं भयो अथवा फूटगयो वा समयमें भी कारणमें छिप्यो भयो घडा जरूर रहेहै तासों धर्मीकूं सनातनही समुझनो धर्मी है सो भगवान्ही है उन सिवाय धर्मी और नित्य नहीं होय सकेहैं तथा दियासों दियाको उजियाला अलग नहिं होय सकेहै तैसें धर्मभी धर्मी सों जुदो नहिं है तासों धर्मभी भगवानकोही रूप है या प्रकार सर्व जगत् भगवद्रूपहै तथा कारणरूप करके नित्यहै तासों भ्रमवाले बालकनकी विचारकरवेकी सामर्थ्य नहिं है तासों शब्दार्थको उल्लंघन करके मनमाने उत्पत्ति नाश पदके अर्थ करेहै तासों उनके मतमें हम दूषणभी नहिं देहैं जैसे पापरूप सुरदैत्यकूँ दूरकरके मुरारि नामसों प्रसिद्ध भये ऐसेंही सर्वत्र जगतमें प्राप्तभये अनित्यत्वादि दोषनकूं दूरकरवेके लिये सब पदार्थनके स्वरूप धारणकरके भगवान् प्रगट होयके सर्वात्मा सर्व रूप कहावेहै ॥ १४० ॥ १४१ ॥ १४२ ॥

भक्त्यात्वाद्यो द्वितीयस्तु तदभावाद्धरौसदा ।
सर्वाकारस्वरूपेण भविष्यामीति या हरेः १४३
वीक्षा यथा यतो येन तथा प्रादुर्भवत्यजः ।

# मृदादिभगवद्रूपं घटाद्याकारसंयुतम् ॥ १४४ ॥

तत्त्वदीपप्रकाशः ।

एवं सति सर्वसाधनवैयर्थ्यमाशंक्य शक्तिद्वयस्य तदधीनत्वं वक्तुमादित आरभ्य निरूपयति ॥ **भक्त्यात्वाद्य इति** ॥ भक्त्यैव भगवानाविर्भवति । तच्च यस्य भक्त्याविर्भावः सा भक्तिर्यादृशी देशकालयुक्ता तत्तिरोभावे तिरोभवति नत्ववतारेष्वप्यन्यः प्रकार इत्यर्थः ॥ अन्येष्वाह ॥ **सर्वाकारस्वरूपेणेति** ॥ तत्तदाकारस्वरूपेण घटपटाद्याकारेण यस्मिन् देशे येन प्रकारेण येन साधनेन यथाविर्भावेच्छा तथा सर्वं संपाद्याविर्भवतीत्यर्थः ॥ तत्र निदर्शनमाह ॥ **मृदादीति** ॥ मृदि घटादयो यावंतो भविष्यंति ते सर्वे कारणत्वेन वर्तंत इत्यंगीकर्तव्यम् । अन्यथा ततः प्रादुर्भावो नोपपद्येत तथा सामर्थ्यं भगवत्वेन संगच्छते अतो मृदादिकं भगवद्रूपमेव । घटादिकार्यं च तत्रैव लीनं तिष्ठति । तदपि भगवद्रूपं प्रपंचस्थानीयम् ॥ १४३ ॥ १४४ ॥

आवरणभंगः ।

एवं सतीत्यादि ॥ ॥ एवंसति यथा भगवतस्तत्र तदभावजदोषनिवृत्त्यर्थं प्रनाड्या अरण्यानीषु नानानोकहादिरूपेणाविर्भाव एवं दुःखनिवृत्त्यर्थमपि कयाचित्प्रणाड्या मूलरूपेणाप्याविर्भावस्य शक्यवचनत्वे सति सर्वसाधनवैयर्थ्यमाशंक्य दोषभावार्थं बुद्धिपूर्वकं तत्साधनानां कर्मज्ञानभक्तिप्रभृतीनां वैयर्थ्यं जलाहरणाद्यर्थं बुद्धिपूर्वं घटादिग्रहणस्यापि वैयर्थ्यमिति शास्त्रेऽपि तन्नोपादिश्येत । लोकेपि तत्तथा नगृह्येतेति नायं पक्षः साधीयानित्याशंक्य शक्तिद्वयस्य आविर्भावकतिरोभावकशक्त्योराविर्भावतिरोभावयोश्च तदधीनत्वं भगवदधीनत्वं वक्तुमादित आरभ्य भगवदाविर्भावादिकं पूर्वावधीकृत्य अंत्यावयविपर्यंतमाविर्भावतिरोभावौ निरूपयति सार्द्धद्वयेन समादधानः कथयतीत्यर्थः ॥ तत्र पूर्वं मूलरूपाविर्भावतिरोभावयोः प्रनाडीमाहुः ॥ ॥ भक्तेत्यादि ॥ ॥ एवकारेण द्वारांतरं निराक्रियते "भक्त्याहमेकया ग्राह्य" इति । "भक्त्या मामभिजानाति" इति । किंबहुना एकादशस्कंधे स्वाविर्भावो भक्त्यैव तत्रतत्र प्रतिपादितः । तर्हि भक्त्या आविर्भूतः कुतः सर्वदा नतिष्ठतीत्याकांक्षायां तत्रापि विशेषं फलेनाहुः ॥ तच्चेत्यादि ॥

॥ तच्चेत्याविर्भवनम् । तथाच भगवति प्राकट्यरूपो वाविर्भावशक्तिरिति न कालतिरोभावे तस्यास्तिरोभावः । किंतु भक्त्यैवेति तस्या विशेषणवैसादृश्ये बहिस्तिरोभवति हृद्येव प्रकटोभवति चेतसो वृत्त्यंतरे जाते भक्तिः संस्कारवत्सूक्ष्मरूपेण तिष्ठति तदा ततास्तिरोभवतीत्यर्थः॥ इदमेव पंचाध्याय्यामात्मा यावत्प्रपन्नोभूदिति कारिकया निरूपितं ज्ञेयम् । नन्ववतारेषु कालेनाविर्भावतिरोभावौ दृश्येत इति नायंनियम इत्याकांक्षायामुक्तस्य तात्पर्यकथनमुखेनाहुः॥ ॥ नत्वित्यादि ॥ ॥ तथा च धर्मग्लानिनिवृत्तयेऽसुरहतयेपि कार्यांतरायापि यदा प्रादुर्भावस्तदापि वचनानां बलेन भक्तिरेवाभिव्यंजिकावधेया यथा भगवतो नृकेसरिणः प्रादुर्भावे प्रल्हादस्य । अतएवोद्धवैः "स्वाशांतरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकंपितात्मा । परावरेशो महदंशयुक्तो ह्यजोपि जातो भगवान् यथाग्निः " इत्यत्र प्रपन्नेर्पिता कृपैवावतारहेतुत्वेनोक्तेत्याद्यनुसंधेयम् । तथाचासुरव्यामोहेपि भूमिमातृत्रिविधभक्तनिष्ठभक्तितिरोभाव एव हेतुरित्यपि बोध्यम् । एवं मूलरूपाद्याविर्भावतिरोभावौ समर्थयित्वा कार्यरूपस्य तौ वक्तुमाहुः ॥ ॥अन्येष्वित्यादि ॥ अर्थो निगदव्याख्यात एव साधनसोपानकोटावदृष्टादेरपि प्रवेशेन जीवाविर्भावतिरोभावावप्युक्तप्रायौ ज्ञेयौ । उपादानगतां शक्तिमुपादेयेपि बोधयितुं तादात्म्यसंबंधेन कार्यांतरानाधारत्वमेव कार्यस्योत्तरावधित्वप्रयोजकं रूपमिति बोधयितुं चाहुः ॥ ॥ तत्रेत्यादि ॥ ॥ अर्थस्तु स्पष्ट एव ॥ १४३ ॥ १४४ ॥

व्रजभाषाटीका ।

आविर्भाव तिरोभाव स्वतःही सब पदार्थनके होते रहेहैं तब तो भगवान्को भी आविर्भाव स्वतःही होयजायगो तथा लौकिक कार्यकोभी आविर्भाव होयजायगो फिर शास्त्रमें लौकिक अलौकिक साधन क्यों वर्णन किये या शंकाकूँ दूरकरतेभये आविर्भाव तिरोभाव भगवान्के आधीनहैं यह बात सिद्धकरतेभये भगवान्के आविर्भाव तिरोभावसों लेके जितनें पदार्थहैं उनके आविर्भाव तिरोभावको निरूपण करेहैं तहां मूलभूत आविर्भावतिरोभावकी प्रनाडी दिखावैहै ( भक्त्यात्वाद्य इति ) भगवान्को आविर्भाव भक्तिसों है वह भक्ति जैसे देश काल भक्तिके अनुकूल है वैसे देश काल सहित होय तब वासों भगवान्को आविर्भाव होय वाके तिरोभावमें भगवान् तिरोहित होजावेहै देशकाल भक्तिके अनुकूल

नहिं होय तो बाहिरसों तिरोभावहोयकें हृदयमें आविर्भाव होय-जाय धर्मकी रक्षा करवेकेलिये असुर मारवेकेलिये भगवान् प्रकट होवे है तबभी भक्तिकरकें ही होवेहै जैसे हिरण्यकशिपुकूँ मारवेके-लिये नृसिंहजी को आविर्भाव प्रल्हादजीकी भक्तिकरकेंही भयो ॥ ॥१४३॥ ऐसेंही और पदार्थनमें आविर्भाव तिरोभावको भी वर्णन करेहैं जा जा आकार करकें अर्थात् घटपटआदि आकारकरके जा देशमें जा प्रकारकरके जा साधन करकें प्रकट होयवेकी भगवा-नकी इच्छा होयहै वैसे सब साधनकूँ सिद्धकरकें उनके द्वारा आप प्रकट होवेहैं तहां दृष्टान्त देतेहैं। जैसें मृत्तिकासों घटको आविर्भाव होयहै अर्थात् मृत्तिकामें जितने घडा उत्पन्न होयवेवारेहैं वे सब कारणताकरिकें मृत्तिकामें विद्यमानहैं यह माननो आवश्यकहै यदि ऐसें नहीं होय तो मृत्तिकासों घडानको उत्पन्न होनों नहिं बनसकेंगो मृत्तिका आदि कारणमें घटादिकार्यके प्रादुर्भाव करवेकी जो सामर्थ्य है सो कारणकूँ भगवद्रूप मानवेसों संगत होवेहै तासों मृत्तिका आदि पदार्थ भगवद्रूपही हैं घटादिकार्यभी मृत्तिकामें ही लीन रह्यो आवेहै वह घटादि कार्य भी प्रपञ्चस्थानीय भगवद्रूपहै॥

मूलेच्छातस्तथा तस्मिन्प्रादुर्भावो हरेस्तदा।
तिरोभावस्तथैव स्याद्रूपांतरविभेदतः ॥१४५॥
वृद्धिर्विपरिणामश्च तथापक्षय एव च। पूर्वरू-
पतिरोभावो द्वितीयस्यादिमस्तथा ॥ १४६ ॥
उभावेकीकृतौ लोके वृद्ध्यादिभिरुदीरितौ।
परिणामाधिक्यतश्च वैजात्यान्न्यूनभावतः १४७

तत्त्वदीपप्रकाशः।

ततः किमत आह ॥ मूलेच्छात इति ॥ पुरुषोत्तमेच्छातः ॥ तथा।

तथैवानुपूर्व्या कार्यरूपहरेरेव प्रादुर्भाव इत्यर्थः ॥ यथा नटः सहस्रं रूपाणि गृह्णाति क्रमशः । तथापि कटकमुकुटादयः । एवमाविर्भावं निरूप्य तिरोभावं निरूपयति ॥ **तिरोभाव इति** ॥ तिरोभविष्यामीति या इच्छा यथा येन तथा तत्र तिरोभवति । परं तत्र रूपांतराविर्भावावश्यकत्वम् । इयानेव भगवतः सकाशात्प्रपंचेपि विशेषः॥तत्र तिरोभावेन रूपांतराविर्भावः । दाहशोषादावपि रूपांतरमिति मतम् ॥ अथवा सर्वथा भगवता तुल्यतां वक्ष्यति चाग्रे । अखंडं कृष्णवत्सर्वमिति ॥ १४५॥वृद्ध्यादीनां स्वरूपमाह॥वृद्धिरितिद्वाभ्याम्॥वृद्धावग्रिमं रूपं परिमाणतोऽधिकम्।अपक्षयेन्यूनं विपरिणामे विजातीमिति विशेषः १४६॥१४७॥

आवरणभंगः ।

यथेत्यादि ॥ ॥ एतेन अज्ञातं नटवद्ब्रह्म कारणं शंकरोब्रवीदिति कल्पतरूक्तमनुमतं ज्ञेयम् ॥ ॥ तिर इत्यादि॥ ॥ तथा च तिरोभविष्यामीति मूलेच्छया कार्यनाशकत्वेनाभिमतेषु कार्यतिरोभाविका भगवच्छक्तिस्तथा बहिःस्थितं कार्यं कारणेंतर्भाव्यते स तिरोभावो नाशादिशब्दैरुच्यते तत्संसर्गेण कार्यस्य नश्वरत्वं तत्र नाशकसामग्रीकोटौ प्रविष्टस्य क्षणस्य तिरोभावे तद्विशिष्टो नाशोपि तिरोहित इति न नष्टे नश्यतीति व्यवहारः । वस्तुनि विकारानंगीकारादेव ननिवृत्तेश्वरमसमयसंसर्गिभावविकारत्वम् ॥ शेषं पूर्ववदेव ध्वंसस्याभावत्वं तु पूर्वमेव निरस्तं कार्यस्य लोके पुनरुन्मज्जनाभावस्तु तथेच्छाभावस्तु तथेच्छाभावात् । तस्यां सत्यपुनरुन्मज्जनमपि ॥ आश्रयवासिके तथोक्ते । तदेतद्विद्वन्मंडने विस्तृतमिति नकोपि शंकालेशः ॥ कार्यभगवत्तिरोभावयोर्विशेषं वक्तुमाहुः ॥ ॥परमित्यादि ॥ ॥ नियमव्यभिचारमाशंक्याहुः ॥ दाहेत्यादि ॥ ॥ एवं च यथा अनित्ये जननं नित्ये परिच्छिन्ने समागमः नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधेत्याविर्भावशक्तिस्त्रिविधा तथा नाशनिर्गमाप्राकट्यभेदेन तिरोभावशक्तिरपि त्रिविधा । तत्र जडे कालभेदेन त्रिविधेपि द्वे जीवे समागमोंतःप्रागट्यं निर्गमो बहिरप्राकट्यमिति देशभेदेन द्विविधे द्वे भगवतीत्येकविधे द्वे इति ज्ञेयम् । ननु विरुद्धधर्माश्रयत्ववदुत्तरोत्तरं ह्रासः । तस्याकारः कमलमुकुलवत् । अनयोस्तु तरुवत् ज्ञेयः । दाहादौ रूपांतरादर्शनादरुच्या धर्माद्धर्मसिद्धिपक्षं हृदि कृत्वा पक्षांतरमाहुः ॥ अथवेत्यादि ॥ ॥ १४५ ॥ वृद्ध्यादीनामित्यादि ॥ ॥ ननु षट्सु विकारेषु द्वयोः

कत्वाल्लाघवाच्च त्वदुक्तरीतिकसत्वोत्कर्षापकर्षतारतम्यवती अंतःकरणवृत्तिरेव वैषयिकं सुखम् । साचोत्पत्तिमती भवताप्यंगीक्रियत एवेत्यतो न सा विवादास्पदमिति जानीहि । एवमेव वृत्तिरूपदुःखस्याप्युत्पत्तिर्ज्ञेया ॥१४०॥ नैयायिकादयो ब्रह्मणि सुखं नाङ्गीकुर्वन्तीति ब्रह्मसुखस्याप्युत्पत्तिः संभाव्यत इति तन्निरासायाहुः ॥ अंधंतमइत्यादि ॥ "मामप्राप्यैव कौन्तेय ततो यांत्यधमां गतिम्" इति वाक्यात् । "अंधं तमः प्रविशंति" इति श्रुतेश्चासुराणामविद्योपासकानां तत्फलम् ॥ तस्य च नित्यानंदतिरोभावरूपत्वादुत्पत्तिरहितत्वम् ॥ तदग्रे दुःखस्वरूपनिरूपणे व्याकरिष्यते । एवं मनोधर्म्माणां ज्ञानसुखादीनामुत्पत्तिं निरूप्य मनोधर्मांतरेपि तामतिदिशंति ॥ तथेत्यादि । ह्रीस्तु अकर्मणि जुगुप्सा । जुगुप्साह्रीरकर्मस्विति भगवता लक्षितत्वात् ॥ इच्छा अभिलाषरूपा प्रसिद्धैव ॥ आदिपदेन द्वेषयत्नप्रीतिप्रभृतयो नाना तु व्यवसायगम्या ज्ञेयाः॥ ह्रीधीभीरित्येतत्सर्वं मन एवेति श्रुतौ प्रकारवाचिना इतिशब्देन समुच्चितत्वात् । तुल्या इति समानाकाराः ॥ ॥ दोष इति ॥ ॥ भगवति विकारित्वरूपः कामे अनित्यत्वविकारत्वरूपश्चेत्यर्थः ॥ १४१ ॥ एवमिति । " उत्पद्यंते विलीयंते " इति मूलोक्तेनोत्पादविनाशशालित्वेनेत्यर्थः ॥ युक्तिमिति ॥ ॥ उत्पत्त्यादिस्वरूपविवेचकतर्करूपां नित्यत्वसाधिकामित्यर्थः ॥ आविरित्यादि ॥ ॥ आविः प्रकटं भावयति कारणांतःस्थं कार्यं बहिःप्रकटीकरोति या शक्तिर्निमित्तगतोपादानगता च सा आविर्भावशब्दवाच्येत्यर्थः ॥ सत्कार्यवादे शक्तस्य शक्यकरणांगीकारात्सा कारणगता । आविर्भवनं वा धर्म इति ॥ प्राकट्यरूपो धर्मः कार्यगतः स आविर्भाव इत्यर्थः ॥ तथा तिरोभवनम् । मुद्गरादिगता तिरोभाविका शक्तिर्घटादिगतं तिरोभवनं वा तिरोभावः ॥ एते शक्तित्वेन धर्मत्वेन च व्यवस्थाप्यमाना उक्ताश्चत्वारोपि भगवच्छक्तिद्वयावांतरभेदरूपत्वाद्भगवतः शक्ती इत्यर्थः ॥ एतेषां भगवच्छक्तित्वे प्रमाणं सूचयंत आहुः ॥ अनंतेत्यादि ॥ परास्य शक्तिर्विविधैव श्रूयत इति श्रुतेरित्यर्थः ॥ कारणगतशक्तीनां भगवच्छक्तित्वसाधनाय विपक्षबाधनाय च कारणे शक्तिसाधकं तर्कमाहुः ॥ ॥ अन्यथेत्यादि ॥ ॥ यदि कारणसामान्ये कार्यजननानुकूला तत्तत्कारणविशेषे तत्तदाकारककार्यादिजननानुकूला च शक्तिर्न स्यात्तदा तथेत्यर्थः ॥ अत्रैतद्बोध्यम् ॥ ॥ कार्यस्य नियतावधिकत्वदर्शनात्प्रागभावस्य च पूर्वं दूषितत्वात्सत्कार्यवादस्य शिष्टादृतत्वम् ॥ तत्र प्रथमपक्षे तंतुतुरीवेमादिभ्यः पटोत्पत्त्या मृद्दंडचक्रादिभ्यश्च घटोत्पत्त्या तस्य तत्तज्जनने शक्तिर्निश्चीयते । सा च न स्वभावो नापि स्वरूपम् ॥ तथासति तस्य सार्वदिकत्वात् । शीर्णेभ्योऽपि तंत्वादिभ्यः पटाद्युत्पत्तिः स्यात् । भर्जिताद्बीजादप्यंकुरोत्पत्तिः स्यात्

आश्चर्य होयहै तैसें यहांभी अंकुर दीखतोभयो ही थोडे कालमें वृक्ष दीखवेलगेहैं येही मूलरूप भगवान्सों प्रपञ्चरूप भगवान्में विशेषताहै मूलरूपमें दूसरे रूपके आविर्भाव करवेकी आवश्यकता नहिं जहां तक भगवान् जगत्को बिस्तारकरनों चाहेहै ताहां ताईं पूर्वपूर्व रूपके तिरोभावके साथही दूसरे दूसरे रूपको आविर्भाव करते रहे है ऐसेंही जो बस्तु बलजावेहै दूसरो भस्मरूप प्रकट होजावे है लोकप्रतीति मानकरकें अनित्य जडवस्तुके आविर्भाव तिरोभाव उत्पत्ति नाश शब्दनकरकें कहेजावेहैं; नित्य परिच्छिन्न जीवके आविर्भाव तिरोभाव समागम निर्गम शब्दसों कहे जावे हैं नित्य अपरिच्छिन्न भगवदवतारके आविर्भाव तिरोभाव प्राकट्य तिरोधान शब्दकरकें कहेजावेहै अथवा या जगत्की भगवान्के साथ तुल्यता ( अखण्डं कृष्णवत्सर्वम् ) या श्लोकके व्याख्यानमें कहेंगे ॥ १४५ ॥ पहलीके रूपसों अधिक परिमाणवाले दूसरे रूपके आविर्भावकों ( वृद्धि ) बढनो कहे हैं पहले रूपके परिमाणसों न्यून परिमाणवाले दूसरे रूपके आविर्भावसों ( ह्रास ) घटनों कहे हैं पहलेरूपसों विलक्षण दूसरे रूपके आविर्भावकूँ ( परिणाम ) अर्थात् बदलजानो कहेहै जैसें दुग्धको दधिरूपसे परिणाम होजावे है याप्रकार ( जायते, वर्द्धते, विपरिणमते ) इत्यादि छ ६ भावबिकारभी आविर्भावतिरोभावनमें ही गतार्थ हैं १४६॥१४७

**मनश्चान्नमयं वेदे तदस्माकमथापिवा । पोषितत्वात्तदन्नेन तद्रूपेणोपवर्ण्यते ॥ १४८ ॥ एवं सृष्टिप्रभेदेषु कल्पेषु च तथैव च ॥ प्रकारभेदा दोषाय न भवंति तदिच्छया ॥ १४९ ॥ इंद्रियाणां प्रमाणत्वं सत्वयोगान्न चान्यथा ॥ स-**

त्वस्य तारतम्येन याथार्थ्यं वस्तुनः स्फुरेत् ॥ १५० ॥ अतः प्रमाणगणना लोकेषु न विचार्यते । व्यवहारः सन्निपातो गुणानां स च लौकिकः ॥ १५१ ॥ शास्त्रसिद्धः पूर्वसिद्धः प्राणिमात्रस्य सर्वतः ॥ तस्य त्रिविधरूपत्वन्नाममात्रेण सा प्रमा ॥ १५२ ॥

तत्त्वदीपप्रकाशः ।

एवं कार्यरूपं निरूप्य वेदविरोधपरिहारार्थमाह ॥मनश्चान्नमयमिति॥अन्नमयं हि सौम्य मन आपोमयः प्राणस्तेजोमयी वागिति श्रुतेः॥ अत्र चाहंकारकार्यत्वेन मनो निरूपितम् ॥ तत्र सिद्धांतद्वयं वेदनिरूपणप्रकारादवगम्यते तदाह ॥ तदस्माकमिति ॥ अथवा पंचदशोपवासाः कारिता इति । अन्नेन पोषणमेवाभिप्रेतम् ॥ १४८ ॥ एवं सर्वत्र प्रकारभेदे समाधानमतिदिशति ॥ एवमिति ॥ अनेकधा भगवान् कार्यं करोतीति सृष्टिभेदान्मुक्तत्वात्तथा वा समाधानम् ॥ १४९ ॥ एवं प्रमेयं निरूप्य प्रत्यक्षबाधनिराकरणार्थंलौकिकप्रत्यक्षादेरप्रमाणत्वमाह॥ इंद्रियाणाम् इति ॥सत्वसहिताबुद्धिः प्रमाणम्।सत्वबृद्धावंतःकरणं प्रमितिं जनयति । सत्वात्संजायते ज्ञानमिति । अन्यथा सत्त्वलये सैव सामग्री भ्रमं जनयति । अतोऽन्वयव्यतिरेकाभ्यां सत्वमेव प्रमाणं तत्कार्यमेव प्रामाणिकम् । रजस्तु व्यवहारिकम् । तमस्त्वप्रमाणमेव। अतोऽन्यमिश्रणे तारतम्येन वस्तुयाथात्म्यस्फुरणम्॥ १५०॥ अतो लोकेषु चक्षुषः कदाचित्प्रामाण्यं कदाचिन्नेति । व्यवस्थाभावात् लोके न प्रमाणगणना। नैयायिकादिभिरिव नास्मादिभिः कृता। व्यवहारार्थं कर्त्तव्येतिचेत् नेत्याह ॥ व्यवहारः सन्निपात इति ॥ नहि सन्निपातकार्यं प्रामाणिकम् । तर्हि शास्त्रीयमपि सन्निपातकार्यं भविष्यती-

त्याशंक्याह ॥ स च लौकिक इति ॥ औषधाज्जायमानो भावो न सन्निपातकार्यम् । अतः शास्त्रसिद्धेः पूर्वसिद्ध एव सन्निपातः ॥ लौकिकत्वं ज्ञापयति ॥ प्राणिमात्रस्य सर्वत इति ॥ सर्वप्राणिसाधारणो व्यवहारो लौकिक एव । तत्रापि सदसद्भेदाः संतीत्याह ॥ तस्य त्रिविधरूपत्वादिति ॥ १५१ ॥ १५२ ॥

आवरणभंगः ।

वेदविरोधमिति ॥ ॥ कस्मिंश्चिदंशे वेदविरोधमित्यर्थः ॥ वेदनिरूपणप्रकारादिति साक्षात्सृष्टिप्रकारेषु "एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणिच" इति श्रुतौ मनसो भिन्नरीत्योत्पत्तिकथनेन छांदोग्ये च यथा तु खलु सौम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मेविजानीहीति प्रतिज्ञायान्नमयत्वकथनेन च प्रकारभेदादित्यर्थः ॥ ॥ तदास्माकमिति ॥ ॥ तथाचाहंकारिकव्यतिरिक्तं यदस्मदादिमनस्तदेवान्नमयमिति सिद्ध्यतीत्यर्थः ॥ अस्मदादिमनसोऽन्नमयत्वे मासाद्युपवासिनां निरन्नानाममनस्कतैव स्यादित्यरुच्या पक्षांतरमाहुः ॥ अथवा पंचदशेत्यादि ॥ ॥ षोडशकलः सौम्य पुरुषः पंचदशाहानि माशीः काममयः प्राणःपिबतो न विच्छेत्स्यत इत्याद्युक्त्वा आरुणिना श्वेतकेतोः कारिता इति तथेत्यर्थः ॥ अतएव कंडिकासमाप्तौ यथासौम्य महतोऽभ्याहितस्यैकमंगारं खद्योतमात्रं परिशिष्टं तत्तृणैरुपसमाधाय प्रज्वालयेत्तेन ततोऽपि बहु दहेदेव २ सौम्य षोडशानां कलानामेककालातिशिष्टाभूत्सान्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदाननुभवसीत्युक्तम् । एतेनैव प्राणवाचावपि व्याख्यातौ ज्ञेयौ ॥ १४८ ॥ तृतीयं समाधानप्रकारमाहुः ॥ ॥अनेकधेत्यादि ॥ ॥ तथाच नात्र श्रुतिविरोधगंधोपीत्यर्थः ॥ प्रत्यक्षबाधनिराकरणार्थमिति ॥ ॥ यथा तंत्रांतरे पंचषट्चतुस्त्रिद्व्यादिसंख्याकानि प्रमाणान्यंगीक्रियंते तेषां बलाबलं शीघ्रमंथरगामित्वादिना आद्रियते प्रत्यक्षस्य सर्वतः प्राबल्यं च । तथात्रापि प्रत्यक्षस्य बलवत्त्वमुपगम्य प्रमाणगणनाऽऽदरणीया सर्वस्य नित्यत्वादिकं च प्रत्यक्षविरुद्धत्वादनादरणीयमित्याकांक्षयां तस्य दोषत्वनिराकरणार्थमित्यर्थः ॥ ॥ प्रमाणत्वे हेतुः ॥ सत्वप्रवृद्धावित्यादि ॥ ॥ व्यावहारिकमिति ॥ ॥ व्यवहारोपयोगिपृथक्त्वेन तु यत् ज्ञानं नानाभावानिति गीतावाक्यादित्यर्थः ॥ अतोन्यमिश्रणेत्यादि ॥ ॥ गुणांतरस्याप्रमाणत्वाद्गुणांतरमिश्रणे सत्वस्योत्तरोत्तरमपकर्षे सति नवस्तुयाथात्म्यस्फुरणं ज्ञानिवन्नैकरूपा प्रमा किन्तु रजःसत्वानुगृहीतैरिंद्रियैर्व्यावहारिकी प्रमा-

रजस्तमोभ्यां सत्वोपमर्दे संशयस्तत्रापि तमसो बाहुल्ये भ्रम इत्येवं जाग्रद्वृत्तौ जायंत इति व्यवस्थाभावात् ॥ १५० ॥ एकादशे पंचविंशाध्याये गुणानां केवलानां वृत्तीरुक्त्वा "सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः । व्यवहारः सन्निपातो मनोमात्रेंद्रियासुभिः" इति कथनात्तथा क्रियमाणस्य व्यवहारस्याप्रामाणिकत्वात्तदर्थमपि नावश्यकीत्यर्थः ॥ ॥ तर्हीति ॥ ॥ व्यवहारमात्रस्य तथात्वमित्यर्थः॥ ननु मनोमात्रादिप्रयुक्तत्वं शास्त्रीयेपि तुल्यमिति कथं तत्कार्यस्य नाप्रामाण्यमत आहुः ॥ औषधादित्यादि ॥ त्रयोदशे भगवता "अहमित्यन्यथा बुद्धिः प्रमत्तस्य यथा" इत्यादिना रजोवेगमोहितं मनः कार्यस्यैव तथात्वोक्तेः शास्त्रीयस्य तत्प्रयुक्तत्वाभावात्तथेत्यर्थः ॥ १५१ ॥ ॥ तदेतदाहुः ॥ लौकिकत्वमित्यादि ॥ प्रवृत्तिलक्षणेनिष्ठेत्यादीनां पंचविंशाध्यायवाक्यानां तात्पर्यमाहुः ॥ तत्रापीत्यादि ॥ एतेन व्यहारमात्रस्याप्रामाण्यं वदंतो निरस्ता बोध्याः ॥ १५२ ॥

व्रजभाषाटीका ।

शंका—( एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च) या श्रुतिमें ब्रह्मसों मनकी उत्पत्ति लिखी है ( अन्नमयं हि सौम्य मनः) या श्रुतिमें मनकूं अन्नमय वर्णन कियो है दोनों कैसे संभवसके हैं ? उत्तर—अहंकारकार्यसों अतिरिक्त अस्मदादिकनके मनकूँ अन्नमय समुझनो अथवा आरुणि ऋषिने श्वेतकेतुनामवाले शिष्यकूँ पंचदश उपवास कराये तब मन सूक्ष्म होगयो फिर अन्न भक्षणकरवेसों मन बढतो चलोगयो इत्यादिकथासों मालुम पडे है अन्नकरके मन पुष्ट होवे है अन्नके नहिं खायवेसों सूक्ष्म होजावेहै तासों मनकूँ अन्नमय कह्यो है या प्रकार भगवान अनेक कल्पनमें अनेक प्रकारसों सृष्टिकरे है न्यारे २ प्रकारसों सृष्टिके भेद न्यारे न्यारे कल्पके अनुसारी हैं तासों उनमें बिरोधभी नहिं आवे है ये भेद परस्पर सृष्टिमें विचित्रता दिखायवेकी इच्छाकरकें किये हैं ॥ १४८ ॥ १४९ ॥ शंका—सबही प्रमाणवादीनके मतमें प्रत्यक्षप्रमाणकूँ सब प्रमाणसों प्रबल मान्यो है जगत्कूँ नित्य माननों यह बात प्रत्यक्षप्रमाणसों बिरुद्ध है प्रत्यक्षमें जगत्के पदार्थ

( अनित्य ) नाशवाले दीखे हैं ॥ उत्तर—सत्वगुणसहितही बुद्धि प्रमाण है सत्वगुण बढै है तब अन्तःकरण यथार्थज्ञानकूँ उत्पन्न करे है ( सत्त्वात्संजायते ज्ञानम् ) अर्थ—सत्वगुणसों ज्ञान प्रकट होय है ऐसो भगवद्वाक्य है सत्वगुणके लयभयेसों ज्ञान प्रकट करवेवारी सामग्री जे इंद्रियादिक हैं वेभी भ्रमकूँ पैदाकरवे लगे हैं तासों सत्वगुणही प्रमाण है सत्वगुणको कार्यही प्रामाणिक है रजोगुण तो लौकिक व्यवहारको उपयोगी है लौकिक व्यवहारमें अर्थात् रजोगुणसंयुक्त इंद्रियनकरिकें जो भेद सहित नानापदार्थनको ज्ञान होय है वह लोकव्यवहारको निर्वाहक है तमोगुण तो अप्रमाणही है रजोगुण तमोगुणके मेल होयवेसों जैसें जैसें सत्वगुण घटतो जावे है तैसें तैसें यथार्थज्ञानमें हीनता होती चलीजावे है जैसें शुद्धसत्वसों यथार्थ ज्ञान सत्वरजसों लौकिक ज्ञान रजतमकरकै दबायेभये सत्वसों संदेह, तमोगुणके अधिकहोयवेसों भ्रम उत्पन्नहोवे है; याहीसों लोकमें कभी नेत्रसों यथार्थ रस्सी दीखें है कभी उनही नेत्रनसों रस्सीमें सर्पको धोका होजावेहै या प्रकार इन्द्रियादिककी यथार्थ व्यवस्था नहिं है तासों नैयायकमतके समान प्रत्यक्ष अनुमान उपमानादि प्रमाणनकी गणना हम नहीं करे हैं क्योंकि रजोगुणमिश्रित लौकिक ज्ञानको परमार्थदशामें कछु उपयोग नहिं ॥ १५० ॥ कदाचित कहोगे लौकिक व्यवहार चलवेकेलिये तो प्रत्यक्षादि प्रमाणनकी गिनती करनोचाहिये ? उत्तर—( व्यवहारः सन्निपातो मनोमात्रेंद्रियासुभिः ) इत्यादि भगवद्वाक्यकरकें लौकिक व्यवहार तो सन्निपातरूप है सन्निपातको कार्य प्रमाण नहिं होवे है ॥ शंका—जैसें लौकिक व्यवहार मन मात्रा इंद्रियादि करकें होवे हैं तैसें शास्त्रमें कहे यज्ञ श्राद्ध उपासनादिकभी मन इंद्रियादिकनकरकें ही होय

हैं इनकूँ भी सन्निपातरूप अप्रामाणिकही माननें ॥ उत्तर—सन्निपातरोगीकी औषधलिये पहलीकी जो कुचेष्टा है वेही सन्निपातकार्यसमुझी जावे है सन्निपातनाशक औषधलिये पीछे जे सुंदरचेष्टा है वेह सन्निपातकार्य नहिं समुझीजावे है ऐसेही पहिलीसों होरह्यो जो सब प्राणी पशु आदिकनके समान ये मैं ये मेरो इत्यादि लौकिक व्यवहार वह ही सन्निपात है क्योंकि ( अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा सदा ॥ मनसो हृदि वर्तेत रजोवेगविमोहिता ) इत्यादिभागवतवचनसों रजोगुणके वेगकरकें मोहित मनके कार्यकूँ ही सन्निपातकार्य कह्यो वेदशास्त्रसिद्ध जे यज्ञादिक व्यवहार वेतो रजोगुण प्रेरित मनके कार्य नहिं हैं किन्तु शास्त्र विधिप्रेरित हैं तासों औषधवत् सन्निपात निवर्तक है सन्निपात कार्य नहिं है लौकिक व्यवहारमेंभी तीन भेद हैं वे एकादशस्कन्ध भागवत पञ्चविंशाध्यायमें ( प्रवृत्तिलक्षणे निष्ठा ) इत्यादिश्लोकनमें कहे हैं तासों ( जीवो जीवेन निर्मुक्तो ) इत्यादिवाक्यनकरकें लौकिक व्यवहार नाममात्रकरके प्रमाण है परमार्थमें प्रमाण नहिं है ॥ १५१ ॥ १५२ ॥

तस्माद्वेदादिरेवात्र प्रमाणं तच्च कीर्तितम् ॥ अपञ्चीकृतरूपं हि सूत्रमात्रं हरिः स्वयम् ॥१५३॥
सुषुम्णामार्गतो व्यक्तः शब्दब्रह्मप्रकाशते ॥ पंचाशद्वर्णरूपश्च सूक्ष्मो नित्यो निरंतरः ॥१५४॥
सर्वतोंतो नित्यरूपो बहुरूपः स्वभेदतः ॥ वर्णः पदं तथा वाक्यं तस्य नामत्रयं मतम् ॥१५५॥

तत्त्वदीपप्रकाशः ।

उपसंहरति ॥ तस्मादिति ॥ वेदस्यैव वेदादेरेव प्रामाण्यात्तदनु-

सारेणैव प्रमेयस्य निरूपितत्वाल्लौकिकविरोधाभावाच्च सर्वं सुस्थं वेदस्यापि प्रमेयत्वं वक्तुं प्रपंचांतरमाह ॥ **अपञ्चीकृतरूपं हीति॥** भगवान् पञ्चात्मको रूपप्रपञ्चकर्ता अधिष्ठानं तथाकर्त्तेति वाक्यात्। कालः कर्म स्वभावश्च मायाभगवांश्चेति तथा नामप्रपञ्चे नापेक्षते किंतु सूत्रमात्रमत्र कारणम्। स एष जीव इति आसन्यरूपो भगवान्नामप्रपंचे हेतुरित्यर्थः ॥ १५३ ॥ तस्य सृष्टिप्रकारमाह ॥ **सुषुम्णामार्गेत इति** ॥ तस्य व्यक्तस्यापि ब्रह्मत्वमित्याह ॥ **शब्दब्रह्म प्रकाशत इति** ॥ तस्यांशानामपि पूर्णतेत्याह ॥ **पञ्चाशद्वर्णरूपश्चेति ॥** षोडश स्वराः। स्पर्शाः पञ्चविंशतिः। यादयोऽष्टौ क्षकारोंतिमः। संध्यक्षरत्वेपि पृथगुपादानं भिन्नश्रुत्या। ज्ञाक्षरस्याप्युपलक्षकः। अत्रावान्तरभेदा बहवः संति। क्वचिच्चतुःषष्टिः क्वचिच्च त्रिषष्टिः वर्णाः क्वचिदेकपञ्चाशत्। द्विपंचाशदिति।तथापि मुख्यमातृकाविद्यायां सिद्धः पक्षःपरिगृहीतः॥ १५४॥वर्णाश्च नित्या व्यापकाः सर्वेष्वपि देशेषु निरंतराः। अनभिव्यक्तिस्थानेष्वपि विद्यमानाः भगवानिव सर्वशक्तियुक्ता अनंतरूपाश्च ते च स्वभावत एव बहुरूपाः।रूपतो भगवत्त्वमुक्तम्। भगवत्त्वप्रतिपादनाय विशेषमाह ॥**वर्ण इति**॥ यथा सच्चिदानंदभेदाः तथा वर्णवाक्यपदभेदाः॥ १५५॥

आवरणभंगः।

मूले तच्च कीर्तितमिति ॥ पूर्वप्रकरणे शब्द एव प्रमाणमित्यंगीकृतम्। तेन तदविरोधि यदेव तदेव प्रमाणमतो न प्रमाणगणनाभावान्न्यूनतेत्यर्थः ॥ एवं रूपप्रपंचं निरूप्य नामप्रपंचनिर्णयार्थं प्रतिजानते ॥ वेदस्यापीत्यादि ॥ ॥ बलनिरूपणार्थं वेदस्य प्रमेयत्वं वक्तुमित्यर्थः ॥ मूले अपञ्चीकृतरूपमिति ॥ ॥ अपञ्चपञ्चसंपादितंपञ्चीकृतं नपञ्चीकृतं रूपं येन तादृशसूत्रमात्रं महत्तत्त्वे यस्यावतारस्तत् आसन्यरूप अपहतपाप्मत्वात्स्वयं हरिः स्वाभिन्नं तत्स्वरूपं नामप्रपंचे कारणमिति शेषः ॥ तदुपपादयितुमाहुः ॥ भगवानित्यादि॥ ॥ नन्वधिष्ठानमिति गीतावाक्ये शरीरजीवेन्द्रियचेष्टादैवानि संख्याघटकानि प्रतीयंत इत्यवांतरसृष्टौ तथास्तु नतु प्रथमसृष्टावपीति शंकायामाहुः ॥ काल इत्यादि ॥ ॥ गीतावाक्येधिष्ठानं शरीरम्। आदिसृष्टौ माया। कर्ता जीवः। तत्स्थाने भगवान्

कारणमिंद्रियं तत्स्थाने कर्म चेष्टाः कर्माणि। तत्स्थाने स्वभावः। तृतीयस्कंधे ऊनत्रिंशे दैवं कर्म विचेष्टितमित्यत्र विविधचेष्टायुक्तत्वेन स्वभावस्य व्याख्यानात्। दैवं कालः देवसंबंधित्वात्। एषां रूपप्रपञ्चव्यवस्थेत्यर्थः॥ तद्वैलक्षण्यं नामप्रपञ्चे आहुः॥ तथेत्यादि॥ ॥ तत्र प्रमाणमेकादशस्कंधीयद्वादशाध्यायस्थभवद्वाक्यमाहुः॥ स एष जीव इति॥ ॥ "स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः। मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः॥ यथाऽनलः खेनिलबंधुरूष्मा बलेन दारुण्यधिमथ्यमानः। अण्डः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणि" इति द्वाभ्यां सर्वोपि नामप्रपञ्च उत्पत्त्या निरूपितस्तत्र घोषेण हृदयाकाशं प्रविष्टस्य जीवस्य सृष्टीच्छावशगस्य हरेः मनोमयसूक्ष्मरूपभवनद्वारा मात्रास्वरादिस्थूलवर्णात्मकतायां प्रयत्नं विशेषेण स्थानविशेषाच्च वह्निदृष्टांतेन वैखरीत्वमुक्तं जीवपदं चात्र जीवस्य मुख्योपधिभूतो य आसन्यः सूत्रात्मा प्राणस्तत्परम्। वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदब्धानि भवंतीति श्रुतौ तथानिर्णयात्॥ सूत्रं महानहमिति प्रवदंति जीवमिति पिप्पलायनवाक्यं सुबोधिन्यां च तथोक्तेः। एकविंशाध्याये च "शब्दब्रह्म सुदुर्बोधं प्राणेंद्रियमनोमयम्॥ अनंतपारं ह्यक्षोभ्यं दुर्विगाह्यं समुद्रवत्॥ मयोपबृंहितं भूम्ना ब्रह्मणाऽनंतशक्तिना। भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते॥ यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात्। आकाशाद्घोषवान् प्राणो मनसा स्पर्शरूपिणा। छंदोमयोऽमृतमयः सहस्रपदवीं प्रभुः। ॐकाराद्व्यंजितस्पर्शस्वरोष्मांतस्थभूषिताम्॥ विचित्रभाषाविततां छंदोभिश्चतुरुत्तरैः। अनंतपारां बृहतीं सृजत्याक्षिपते स्वयम्॥" इति संदर्भे च घोषवतः प्राणस्य ॐकारद्वारा स्पर्शादिभूषितवाणीस्रष्टृत्वकथनाच्च। एवं सति तृतीये सुबोधिन्युक्तदिशा प्रकाशरूपस्याविर्भूतस्याविकृतस्य भगवद्गुणरूपज्ञानस्यैव। उक्तरूपेण वेदशरीरग्रहणमानंत्यं विराज इव ततः शब्दशरीरविशिष्टस्य तस्यैव बीजतायां व्यष्टिरूपविकृतनानावाक्योत्पादकत्वमित्यतो न शंकांशः कोपि॥ १५३॥ सुषुम्णामार्गेत इति॥ स एष इति वाक्यस्थविवरपदस्यार्थोयम्॥ तस्य व्यक्तस्येत्यादि॥ ॥ मे व्यक्तिरित्युपसंहारात्। शब्दब्रह्मसुदुर्बोधमितिकथनाच्च तथेत्यर्थः॥ तथा च सूत्रमात्रो भगवानेव व्यक्तः सन् शब्दब्रह्मात्मा वेदरूप इत्यर्थः॥ तेन प्रमाणमूर्द्धन्यत्वं सिद्ध्यति। एतद्व्यक्तिमार्गस्य ब्रह्मपथत्वशासनाय सुषुम्णापदं तस्यांशेत्यादि। ब्रह्मत्वदृढीकरणाय विशेषांतरमेतत्संख्यापूरणार्थमवांतरोपाधीनाहुः॥ षोडशेत्यादि॥ ॥ अ. आ. इ. ई. उ. ऊ. ऋ. ॠ. ऌ. ॡ. ए. ऐ. ओ. औ. अं. अः। इत्येवं स्वराणां

षोडशत्वम्। शेषं स्फुटम्॥ बहव इति॥ अनुनासिकादिभेदैर्बहव इत्यर्थः॥ चकारसूचितं पक्षांतरमाहुः॥ क्वचिदित्यादि॥ ॥ आद्यौ शिक्षायामुक्तौ। "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मताः। अनुस्वारो विसर्गश्च ≍क ≍पौ चापि पराश्रयौ॥ दुःस्पर्शश्चापि विज्ञेयो ऌकारः प्लुत एव च" इति। एतद्भावेकश्च। अ आ आ३ इ३ उ३ ऋ३ ऌ१ ए२ ऐ२ ओ२ औ२ कादयो यादयश्च स्पष्टाः। यमाः पलिक्नीं चख्नतुः अग्निः घ्नंतीत्यादौ वेदे द्विरोष्ठ्यरूपः प्रसिद्धः। एवं चतुःषष्टिः। ऌकारागणने द्विषष्टिः। एकपञ्चाशत्पक्षश्च पंचाशदुपांतेर्ळाक्षरस्य निवेशात्। द्विपञ्चाशत्पक्षो ज्ञाक्षरस्य पृथगुपादानात्। एवमनेकपक्षेषु पञ्चाशत्पक्षांगीकारे बीजमाहुः॥ तथापीत्यादि॥ १५४॥ पूर्वप्रतिज्ञातं पूर्णत्वं स्पष्टीकर्तुं वैयाकरणनैयायकमताद्वैलक्षण्यं ज्ञापयितुं चाहुः॥ वर्णाश्चेत्यादिना॥ भगवत्त्वेन सर्वस्य नित्यत्वेपि व्यवह्रीयमाणकादिरूपेण नित्यत्वाय वर्णा इति बहुवचनम्। अत्र व्युत्पादनार्थं तत्रांतरस्थं बोधार्थमुच्यते तत्र शब्दो नित्यो न वा। प्रलयवृत्तिर्न वा स्वाधिकरणक्षणाधिकचतुर्थादिक्षणावृत्तिर्नेत्यादिविप्रतिपत्तौ तावन्नैयायका आहुः॥ शब्दोऽनित्यः। उत्पत्तिविनाशप्रतीतेः। नापि वर्णरूपो नित्यः। उत्पन्नो गकारो विनष्टो गकार इति प्रतीतिः। नच सोयं गकार इत्यबाधितप्रत्यभिज्ञाबलेन तस्य नित्यत्वं शक्यम्॥ तदेवौषधमित्यादौ साजात्यमादाय प्रत्यभिज्ञावदत्रापि वक्तुं शक्यत्वात्। नचात्र विनिगमकाभावः। उत्पत्तिनाशप्रतीत्योरेव मानत्वात्। तादृक्प्रतीतिभ्यां विना प्रत्यभिज्ञानादर्शनात्। अत एवैतयोः प्रत्यभिज्ञाबाध्यत्वं भ्रांतित्वं च निरस्तम्। एतयोः प्रत्यभिज्ञाबाध्यत्वकल्पनापेक्षया प्रत्यभिज्ञाया एवैतद्बाध्यत्वकल्पनायां लाघवाच्च। तस्मादनित्य एव शब्द इति। तदेतन्मीमांसकादयो न क्षमंते। तत्र गुरवो व्योमैकगुणत्वेन भाट्टाश्च निःस्पर्शद्रव्यत्वेन नित्यत्वं शब्दमात्रस्यानुमेयं सोयङ्गकारयोरभेदसिद्धावर्थबलादेव तेषां नित्यत्वेन च गकाराद्युत्पत्तिनाशप्रतीती प्रत्यभिज्ञाया बाधिके। तयोः परंपरया गकारादिव्यंजकवाय्वाद्युत्पत्तिनाशविषयत्वात्। नच प्रतीत्योः साक्षात् गकारादिगत्वेनैवानुव्यवसायान्नैवमिति वाच्यं तस्य भ्रमत्वात्। प्रत्यभिज्ञया तद्बाधात्। नच गत्वादिजातिगतमेव नित्यत्वं स्वाश्रयसमवायरूपेण परंपरासंबंधेन गकारेभासत इति प्रत्यभिज्ञाया एव साक्षात्वांशे भ्रमत्वमस्तु। यद्यपि विनिगमनाविरहस्तथापि नाशोत्पत्तिविषयस्य प्रतीतिद्वयस्य भ्रमत्वकल्पनापेक्षया प्रत्यभिज्ञामात्रस्य तथात्वकल्पने लाघवादिति वाच्यम्॥ अभिव्यञ्जकवाय्वाद्युत्पत्तिविनाशस्योभयवादिसंमतत्वात्तावतैव निर्वाहे नानावर्णोत्पत्तिनाशकल्पनस्यात्यंतगुरुत्वेन वैपरीत्यात्। व्यक्त्यभेदग्रस्तत्वेन गत्वादौ जातित्वस्या-

शक्यवचनत्वाच्च । नापि प्रत्यभिज्ञाया आकृतिविषयत्वं शक्यवचनम् । व्यक्तिप्रत्यभिज्ञानात् । द्विर्गोशब्द उच्चारित इति प्रतिपत्तेः। द्वौ गोशब्दाविति प्रत्ययाभावाच्चेति शारीरकभाष्येऽपि व्यवस्थापनात् । नच परस्परविरुद्धानां तारत्वमंदत्वादीनामेकत्र वक्तुमशक्यत्त्वात्तारतरमंदमंदतरादिरूपविलक्षणप्रतीत्यनुपपत्तिरिति वाच्यम् ॥ वर्णव्यञ्जकध्वनीनां नानात्त्वात्तद्गततारत्वादेरेव तदातदा तत्र भानादुपपत्तेः । वायुव्यञ्जकत्वपक्षे तु वायुना यथाभिव्यज्यते तथा प्रतीयते घटादिनाकाशवदिति तेषामेकव्यक्तिगतव्यंजकत्वेनांगीकारेण विरोधस्यैवाभावाच्छंकाया एवानुदयाच्च । नच ध्वनिषु तारत्वादिदर्शनाद्वर्णे च द्रव्यत्वपृथ्वीत्वयोरिव तेषां व्याप्यव्यापकभावाभावेन सांकर्यात्तारत्वादीनां जातित्वानुपपत्तिरिति वाच्यम् ॥ तेषामखंडोपाधित्वोपगमेनेष्टापत्तेः । नचैवं सति तारात्तारतरोन्य इति प्रतीतिर्नस्यादिति वाच्यम् । तादृशप्रतीतौ मानाभावात् । शिखी विनष्ट इति वत्तद्विशेषणपुरस्कारेण प्रतीत्युपपत्तेश्च । नच वर्णानां नित्यत्वे एकसाक्षात्कारकालेऽपरसाक्षात्कारापत्तिः सर्वेषां श्रोत्रसमवायस्य तुल्यत्वादिति वाच्यम् ॥ तत्र तद्व्यंजकविजातीयवायुसंयोगाभावात्तदनापत्तेः । भवन्मतेप्युत्पादकत्वेन तस्यावश्यकत्वात् । नच विजातीयवायुसंयोगस्य कार्यतावच्छेदकत्वे तदभावेन लाघवाच्छब्दानित्यत्वमेव ज्याय इति वाच्यम् ॥ विप्रतिपत्तौ विनिगमनाविरहस्य दुर्वारत्वात्।विषयतासंबंधेन कत्वस्यैव कार्यतावच्छेदकताया वक्तुं शक्यत्वाच्च नच कत्वादेरखंडोपाधित्वांगीकाराज्जातीतरधर्मस्य च किंचिद्धर्मस्य च किंचिद्धर्मावच्छिन्नस्यैवावच्छेदकत्वनियमादत्रापि किंचिद्धर्मविशिष्टस्यैव तस्य कार्यतावच्छेदकगौरवापेक्षया नानाशब्दतदुत्पत्तिनाशानां शब्दस्य नाशं प्रति विशिष्य हेतुतायाश्च कल्पनासु गौरवभूयस्त्वेन शब्दानित्यत्त्वस्य कदर्यत्वात् । नच शब्दवृत्तित्वविशिष्टविशिष्टा या प्रतियोगितेति कर्मधारये प्रतियोगितया नाश्यं प्रति विषयतया श्रावणत्वेन नाशकत्वमिति ध्वनिनाशस्थले क्लृप्तानुगतनाश्यनाशकभावादेव वर्णस्यापि नाशोपपत्तेर्न हेतुतांतरकल्पनगौरवमिति वाच्यम् ॥ अश्रूयमाणशब्दे व्यभिचारेणास्य कदर्यत्वात् । ध्वनिनित्यत्वाभ्युपगमेनोक्तनाश्यनाशकभावे मानाभावाच्च ।

यत्तु । शब्दबोधं प्रति पदज्ञानं हेतुः पदं च घोत्तरटादिरूपम् । तच्च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपाव्यवहितोत्तरत्वघटितमिति वर्णनित्यत्वपक्षे न संभवति। सर्वेषामेव क्षणानां वर्णाधिकरणत्वात् । स्वस्वपूर्वक्षणानादाय स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वेनाव्यवहितोत्तरत्वस्याप्रवेशात् । नच भवन्मतेपि सर्वेषां क्षणानां स्वपूर्वक्षणोत्पन्नवत्वावच्छिन्नयत्किंचिद्दाधिकरणक्षणध्वंसाधिकरणत्वादेतदसंभव इति वाच्यम् ।

अस्मन्मते तत् घत्वादिना निवेशेन दोषाभावादिति ॥ तन्न । वर्णनित्यत्वपक्षेपि घज्ञानोतरटज्ञानविषयत्वं तत्वमित्युक्तदोषाभावात् । नचाधिकज्ञानाभावप्रवेशे गौरवत्वमिति वाच्यम् । यथा भवन्मते तत्तद्व्यक्तित्वेनैव वर्णनिवेशो नतु घत्वादिना । असंभवात् । तथा अस्मन्मतेपि घत्वादीनां तत्तव्यक्तित्वेनैव निवेशतः साम्येन लाघवानपायात् । अतः पुनः पुनरुत्पत्तिनाशादिकल्पनापेक्षया वर्णनित्यत्वमेव न्याय इति अन्ये तु वर्णो नित्यो ध्वन्यन्यशब्दत्वात् । स्फोटवदिति प्रयुंजते वैयाकरणास्तु स्फोटाख्यमतिरिक्तं शब्दमंगीकृत्य तस्यैव नित्यत्वमाहुः ॥ तदेतदन्ये न क्षमंते । यथोक्तमुपवर्षमतानुसारेण शारीरकभाष्ये । वर्णेभ्यश्चार्थप्रतीतेः संभवात्स्फोटकल्पनाऽनर्थिकेति । शाबरभाष्येपि तथा । उचितं चैतत् । वर्णस्फोटस्थले वर्णैनैवार्थप्रतीतेः । पदादिस्फोटस्थले पूर्ववर्णगोचरसंस्कारसहितचरमवर्णोपलंभव्यंग्यस्फोटकल्पनापेक्षया तादृशवर्णैनैवार्थप्रतीत्यंगीकारस्य लघुत्वात्प्रत्यक्षानुरोधित्वाच्च । अनेकेषां वर्णानामेकबुद्धिविषयत्वं च पंक्तिवनसेनादिदृष्टांतेन तत्रैव व्युत्पादितम् । एवं च क्रमविशेषविशिष्टा वर्णा एव सामस्त्येनैकबुद्धिविषयाः पदं स्युरिति । तत्तत्पदव्यवस्थाया वृद्धव्यवहारादिना तत्तत्पदेभ्यस्तत्तदर्थावबोध इति च । आचार्यैस्तु स्फोटो नदूषितो नवा प्रसाधितः परंतु दशमस्कंधे गुणप्रकरणे वसुदेवस्तुतौ 'दिशः खं स्फोट आश्रय' इत्यत्रोक्तस्तेनानुमत एव । अयं च वैयाकरणमताद्भिन्नः । वाग्व्यंजकत्वेन वर्णाद्यव्यंग्यत्वात् । अस्य शास्त्रस्य कल्पनाशास्त्रत्वाभावेन शब्दैकशरणत्वात् । सिद्धे वर्णनित्यत्वे इंद्रियदेवतावत्तस्याप्यादरणौचित्याद्वृत्तिनिरोधे तस्य प्रत्यक्षीभावाच्चेति । सिद्धांते त्वेतावान्विशेषः । रूपसृष्टिमध्यपातिनो ध्वनेर्घटादिवच्चिरकालस्थायित्वात्तस्य वायुनान्यत्र नयनमेव । तदस्माभिः प्रस्थानरत्नाकर उपपादितम् । वर्णस्य तु कंठताल्वादिस्थानाभिघातजन्यो वायुः स्वबलानुसारेण व्यञ्जनं करोति ततो व्यापकं वर्णं व्यंजयन्नेव बहिर्वायूढो गच्छति । श्रवणं तु ध्वनिवदेव । तत्र वर्णस्य पूर्वोक्तयुक्त्या नित्यत्वे सिद्धे प्रत्यभिज्ञाया उत्पत्तिविनाशप्रतीत्यनंतरभावित्वं तेनापि न तस्य विघटनं प्रत्यभिज्ञाया वार्णाभिव्यञ्जकानन्तर्यसापेक्षतया तादृशप्रतीत्यानंतर्यानपेक्षित्वेपि अभिव्यञ्जकप्रतीतेः । सामग्र्यन्तरेण स्थूलरूपतिरोधानादानंतर्ये तदपेक्षाभिमानात् । तत्क्षणोज्ज्वालितदीपनाशोत्तरं सोयं दीप इति प्रत्यभिज्ञानवत् । अव्यवहितोत्तरत्वलक्षणो ध्वंसस्थले तिरोभावपदेनाभिलापः कार्य इति । शेषं त्वनुगुणमेव । प्रकृतमनुसरामः । व्यापकत्वं विवृण्वंति सर्वेष्वित्यादि । एवं सिद्धे वर्णनित्यत्वे तेषां व्यापकताप्येककालावच्छेदेनानेकदेशेध्वनेकैरुच्चारणात्सिद्ध्यति । नच तेषां कंठादिस्थाननिर्देशात्परिच्छिन्नता ।

शरीरिण्या आकाशवाण्याः शब्दे व्यभिचारात् तदेतदुक्तं सर्वेष्वित्यादि । स्थाननिर्देशस्त्वभिव्यक्तिनिबंधनः । व्यापकात्मवादिमते शरीरस्य वृत्तिलाभस्थानत्ववत् । ननु व्यापकत्वे उच्चारणदशायां प्रदेशतोऽभिव्यज्येरन्नतु पूर्णा इति चेत्तत्राहुः ॥ भगवानिवेत्यादि ॥ ॥ अनंतमूर्त्तित्वमनंतमूर्तयो वर्णा इत्यत्रापि गौणमुख्यभेदेन व्युत्पाद्यम् । उदात्तानुदात्तस्वरितानुनासिकानुनासिकादिसंग्रहार्थमाहुः ॥ तेचेत्यादि ॥ एवं षड्धर्मप्रतिपादनतात्पर्यमाहुः ॥ रूपत इत्यादि ॥ ॥ मूले-तस्य नामत्रयमित्यत्र तस्येति शब्दब्रह्मग इत्यर्थः ॥ तेन सिद्धांतिना नाद एव शब्द इति बोधितम् । तच्च शब्दब्रह्मवर्णाद्यभिन्नमिति स्फोटवादो नांगीकृतः १५५

ब्रजभाषाटीका ।

तासों ही पूर्वप्रकरणमें शब्दरूपवेदादिकनकूँ ही प्रमाण कहेहै । वेदके अविरोधि जो होय वहही प्रमाणहै ॥ ऐसें रूपप्रपञ्चको वर्णन करकें । नामप्रपञ्चरूप वेदादिकनको निर्णय करेहै । अधिष्ठान कर्ता करण कर्म दैव ये पाँचरूपात्मक प्रपञ्चके प्रकटकरवेंवारेहैं अर्थात् अधिष्ठान माया कर्ता भगवान्, करण कर्म क्रिया स्वभाव, दैव, काल, या प्रकार पञ्चात्मक भगवान् आदिसृष्टिमें पदार्थनके प्रकटकरनेवारेहैं । अवान्तरसृष्टिमें । अधिष्ठान । शरीर । कर्ता । जीव । करण । इन्द्रिय । कर्म । विविधचेष्टा । दैव । भाग्य या प्रकार पाँचरूपवाले भगवान् । सृष्टिकरेहैं । शब्दसृष्टि । इन पाँच रूपनकरकें रहित सूत्रात्मा भगवान् जिनको महतत्त्वमें अवतारहै वह आसन्य प्राणरूप भगवत्स्वरूप शब्द सृष्टिके कारण हैं॥१५३॥शब्दसृष्टिको प्रकार दिखावेंहै सुषुम्णामार्गकरके शब्दब्रह्म प्रकाशित होवेहै । जैसें अवकाशमें काष्ठके घिसवेसों पवनकी सहायता करके बढीभई जो ऊष्मा उष्णता अणुमात्र अग्नि कणरूपहोयके घृतादिकसों बढती भई चलीजायहै । ऐसेंही शब्दसृष्टिकरवेकी भगवानकूँ इच्छा भई तब भगवान् जीवकी मुख्योपाधिरूप आसन्य सूत्रात्मा प्राणात्मा होयके । घोष । अव्यक्तनादसहित-हृदयमें प्रवेशकरकै मनोमय सूक्ष्मरूप द्वारा प्रयत्न विशे-

षसों हृदय, कण्ठ, आदि स्थानभेदकरकें मात्रास्वरादि स्थूल वर्णरूप वैखरी होजावेहै। तृतीयस्कन्ध सुबोधिनीकी रीतिसों प्रकाशरूप जो अविकृत भगवान्को गुणरूप ज्ञान है। वहही घोषवान् प्राणरूप होयके वेद शरीरको ग्रहणकरेहै। शब्दब्रह्मके अंशभी पूर्णहीहैं। अर्थात् पचास वर्ण हैं ये शब्द ब्रह्मके अंशहैं शोडश स्वरहैं अ आ इ ई इत्यादि। पञ्चविंशति स्पर्श हैं। क ख ग घ ङ सों लेके प फ ब भ म पर्यन्त। अन्तस्थ चार य र ल व। ऊष्माण चार श ष स ह। अन्तको अक्षर ( क्ष ) है ककार षकार मिलेसों ( क्ष ) बने है परंतु याको श्रवण भिन्नहै तासों न्यारी गणना है क्ष है सो ( ज्ञ ) काभी उपलक्षक है अवान्तर अनुनासिकादि भेद बहुतहैं कोई ग्रंथमें चार और साठ वर्ण मानेहैं। कोईमें त्रेषट कहीं इकावन् कोई ग्रन्थमें ५२ बावन् वर्ण मानेहैं तथापि मातृकाविद्यामें सिद्ध जो पक्षहै वाको ग्रहणहै भगवद्रूप होयवेसों सर्व वस्तु नित्यहै तोभी व्यवहारमें आये वे कखगघङ आदि वर्णकूँ नित्यता सिद्धकरवेकेलिये ( वर्णाः ) इति बहुवचनको प्रयोगकियोहै ॥ १५४ ॥ जितने वर्ण हैं सब नित्यहैं और व्यापकहैं जो वर्ण व्यापक नहिं होय तो अनेकदेशमें एककालमें अनेक पुरुष उच्चारण नहिं करसकते सब ठिकाने सब वर्ण निरंतर विद्यमानहैं। कण्ठ तालु आदि स्थाननमें प्राणवायुके आघातसों प्रकट होवें हैं और ठिकाने जहाँ प्रकट होयवेकी साहित्य नहीं है। वहाँभी विद्यमानहैं भगवान्के समान सर्वशक्तियुक्त हैं अनन्तरूपवालेहैं अर्थात् भगवान् बहुरूप ऐसें शब्दभी बहुरूपहैं। जैसे भगवान्में तीन भेद सत् चित् आनंद ऐसें शब्दमें वर्ण पद वाक्य ये तीन भेद हैं ॥ १५५ ॥

द्वयं चाविकृतं लोके वेदे सर्वं स्वयं हरिः ॥ व-

**र्णाः पदानि सर्वाणि भगवद्वाचकत्वतः॥१५६॥**
**सर्वार्थान्येव सर्वत्र व्यवहृत्यै तथापि तु॥शक्ति-**
**संकोचतो लोके विशेषख्यापनानि वै ॥१५७॥**

तत्त्वदीपप्रकाशः ।

तत्र वर्णा नित्याः पदानि च । वाक्यं लौकिकमानित्यम् । वैदिकं तु नित्यमिति विशेषः ॥ तत्र हेतुः ॥ स्वयं हरिरिति अत्र केषांचिन्मते पदान्येवार्थवंति न वर्णा न वाक्यान्यपीति केचित् । अस्मन्मते तु वर्णा अप्यर्थवंतः । वेदाक्षराणि यावंतीति वाक्यात् ॥ अतः प्रथममक्षरपदयोरर्थमाह ॥ वर्णाः पदानीति ॥ सर्वेषां वर्णानां सर्व एव वाच्यः ॥ तथा पदानां तत्र हेतुः ॥भगवद्वाचकत्वत इति ॥ भगवान् सर्वमिति ॥ १५६ ॥ भगवान्वाच्य इति सर्वे वर्णाः पदानि च सर्ववाचकानीति वस्तुस्थितिः । तथापि व्यवहारार्थं शक्तिसंकोचः कृतः।आदेशकालविभेदेनास्माभिरुच्चार्यमाणोऽयं शब्दः इममेवार्थं बोधयितुं नत्वन्यमिति संकोचः॥ अतो लोके विशेषाख्यायकानि जातानि तत्र सूपःकूपो यूप इत्यत्र वर्णानां तुल्यत्वेपि नानार्थप्रतिपादकत्वम् । व्यवहारसिद्ध्यै तथांगीकारात् । अन्यथा च प्रत्ययादेरर्थो न स्यात् । धातोश्च नच तयोः पदसंज्ञाविशिष्टयोरेव तथात्वात्।अतो व्यवहारस्य नियामकत्वान्नातिप्रसङ्गः ॥ १५७ ॥

आवरणभंगः ।

ननु सर्वस्यैव वर्णजातस्य भगवद्रूपत्वे लौकिकवैदिकयोरविशेषाद्वेदे आधिक्यं नसिद्ध्येदित्याकांक्षायां स्वरूपे विशेषं प्रतिपादयितुमाहुः ॥ भगवत्वेत्यादि ॥ ॥इति विशेष इति ॥ ॥वाक्यनित्यत्वेन त्रयाणां भगवद्रूपत्वात् विशेषः । मे व्यक्तिरियं हि वाणीत्युक्त्या लोकवेदसाधारण्येन वैखरीमात्रस्य भगवत्वे प्राप्तेप्येवं गदिरित्यतिदेशाद्वैलक्षण्यमवश्यं वाच्यमित्यत एवमुक्तम् । अत एव च परमार्षं सूत्रम् । अत एव च नित्यत्वमिति । अखंडवाक्यरूपत्वेन -नित्यभगवद्रूपार्थसंबंधस्य सार्वदिक्त्वादेवास्य नित्यत्वमित्यर्थः ॥

तेन लौकिकशब्दादुत्कर्षः स्फुट इति । नैयायकास्तु वेदः पौरुषेयो वाक्यत्वाद्भारतवदित्यनुमानेन पौरूषेयत्वं वदंतः शब्दस्याशुतरविनाशित्वेन वाक्यत्वेन चानित्यत्वं वेदस्याहुः ॥ सांख्यप्रवचने तु न नित्यत्वं वेदानां कार्यत्वश्रुतेः । न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात् । न मुक्तामुक्तयोरयोग्यत्वात् । नापौरुषेयत्वान्नित्यत्वमंकुरादिवदिति चतुःसूत्र्याम् । तस्मात्तपस्तेपानात्त्रयो वेदा अजायंतेत्यादिश्रुत्या वेदानां कार्यत्वम् । ईश्वरानंगीकारान्मुक्तानामसंगत्वेन संसारिणां च युगपदुपादानानभिज्ञत्वेन वेदकर्तृत्वायोगाच्चापौरुषेयत्वम् ॥ अंकुरादिवदनित्यत्वं चोक्तम् । जैमिनीयदर्शने तु । प्रथमस्य प्रथमपादांतिमे उक्तं तु शब्दपूर्वत्वमित्यधिकरणे चिंतितम् । वेदाः किं पौरुषेया नवेति संदेहे पूर्वोक्तरीतिकेन सामान्यतो दृष्टेन वाक्यत्वलिंगकानुमानेन सामान्यतः कर्तारमनुमाय केचिदीश्वरं केचित्प्रजापतिं केचिद्धिरण्यगर्भं कर्तृत्वेनाहुः ॥ तद्यदि कर्त्ता कश्चित्स्यात्तदायं नानाविधो विवादो नावकल्पेत । मन्वादिवत्कर्त्तुः स्मर्यमाणत्वात् । नहि मानवे भारते शाक्यग्रंथे वा कश्चिद्विवदते । अतः स्मर्त्तव्यत्वे सत्यस्मर्यमाणत्वाद्योग्यानुपलब्धिबाधितं सामान्यतो दृष्टं न कर्तृसाधनायालं भवति । नचातिजीर्णकूपारामादिषु विशेषस्मरणेपि यथासामान्यतो दृष्टेन कर्तृपूर्वकत्वसिद्धिस्तथात्रेति वाच्यम् । विमतं वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वात् । आधुनिकाध्ययनवदिति प्रतिसाधनत्वेन तथावक्तुमशक्यत्वात् । नच काठकादिसमाख्यातः पौरुषेयत्वमिति बाह्यवचनमपि बाधकम् । समाख्यायाः प्रवचनमूलकत्वात् । अत एव तस्याः शाखाविशेषविषयत्वं युज्यते । तस्मादपौरुषेया एव वेदा इत्युक्तम् । एवं च तस्मात्तपस्तेपानादिति श्रुतिरपि नकार्यत्वं बोधयति किंतु प्रादुर्भावमात्रम् । नाप्यंकुरादिवज्जन्यत्वं निश्वसितश्रुतिविरोधात् । तस्मादीश्वरात्मत्वं वेदस्य सर्वप्रमाणाविरुद्धम् । एवं वेदस्य स्वरूपतो लौकिकवैलक्षण्यमुक्त्वा लौकिकशब्दाद्वेदे विशेषांतरमर्थतोपि वक्तुं वर्णार्थं वदिष्यंतो मतांतरानुवादपूर्वकं स्वमतमाहुः ॥ अत्रेत्यादि ॥ ॥ अत्रेति त्रिविधशब्दमध्ये । केषां चिदिति नैयायकादीनाम् ॥ केचिदिति ॥ एकदेशिनः । वाक्यं तु श्रौतानुष्ठानपद्धत्तौ प्रसिद्धम् "वेदाक्षराणि यावंति पठितानि द्विजोत्तमैः । तावंति हरिनामानि कीर्तितानि नशंसयः ॥" अत्राक्षराणां भगवन्नामत्वकथनेन भगद्वाचकत्वसिद्धेर्वर्णा अप्यर्थवंत इत्यर्थः ॥ नच वर्णपदेन चादयो ग्राह्याः तेष्वर्थवत्ताया अपि संमतत्वादिति वाच्यम् । उक्तवाक्यगतयावत्पदविरोधात् । तेषां प्राधान्येन वाचकत्वे समुच्चयः शोभनः समुच्चयो द्रष्टव्य इतिवत् । च शोभनः च द्रष्टव्य इति प्रयोगापत्तिरूपदोषस्य मीमांसकैरेव दर्शितत्वात् । गुणत्वेन वाचकस्य द्योतकत्वे

पर्यवसानाच्च । व्याख्येयग्रंथविरोधाच्च ननु वर्णार्थवत्ता तथापि दुर्घटैव । वाक्ये अक्षरपादात् । वर्णाक्षरपदयोश्च पर्यायताविरहात् । घृणिरिति द्वे अक्षरे । सूर्य इति त्रीणि । आदित्य इति त्रीणीति । अष्टाक्षरागायत्रीत्यादिश्रुतिभिरज्लसमुदायस्यैवाक्षरत्वप्रतीतेः । समुदायस्य च पदत्वादिति चेत् न । आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरमित्यादिश्रुतिव्यापकोपप्रसंगात् । अत्राकारस्य अकारस्य च केवलस्याप्यक्षरत्वोक्तेः । अक्षराणामकारोस्मीति गीतावाक्याच्च । वर्णत्वं च न केवलव्यञ्जनस्य । वर्णात्कार इत्यस्योदाहरणेन ककारः पकार इत्यादिरूपेण तथा निश्चयात् । एवं चाक्षरत्वं वर्णत्वं च केवलानां व्यंजनोपष्टंभकाच्च सिद्ध्यतीति पर्यायता निराबाधैवेति निरर्थकत्वं केवलव्यञ्जने पर्यवस्यतीति न वर्णार्थवत्तादौ घव्यामिति दिक् ॥ अत इति ॥ अबाधितप्रत्यभिज्ञाया वर्णपदयोः सर्वत्राभिन्नत्वात् ॥ अर्थं व्याकुर्वंति ॥ सर्वेषामित्यादि ॥ तत्रेति ॥ सर्वेषां सर्वार्थवाचकत्वे भगवद्वाचकत्वमेव कथमित्याकांक्षायां शास्त्रस्य श्रौतत्वेन श्रुतेरिति बोधयितुं तात्पर्यमुखेनाहुः ॥ ॥ भगवानित्यादि ॥ अयमर्थः सर्वं खल्विदं ब्रह्म । आत्मा वा इदं सर्वम् इदं सर्वं यदयमात्मेत्यादिश्रुतिसमर्थनेन पूर्वोक्तरीतिकाविर्भावनिरूपणद्वारा सर्वस्य ब्रह्मत्वं साधितमिति स एव सर्वम् । किंच । मांडूक्यादौ प्रणवार्थविचारे ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानमित्यनेन प्रणवस्वरूपं सर्वस्य वाङ्मयस्य तद्व्याख्यानत्वमुक्तम् । व्याख्यानव्याख्येययोश्चैकार्थ्यम् । एवंसति व्याख्यानस्य विशेषप्रतिपत्त्यर्थकत्वाद्योर्थः । सामान्याकारेण प्रणवेनोच्यत इति सिद्ध्यति । तद्देव भूतं भव्यं भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एवेत्यादिनोक्तम् । द्वादशस्कंधेच—"समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ॥ हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ यदुपासनया ब्रह्मन् योगिनो मलमात्मनः । द्रव्यक्रियाकारकाख्यं धूत्वा यांत्यपुनर्भवम् ॥ ततोभूत्त्रिवृदोंकारोऽव्यक्तप्रभवः स्वराट् । यत्तल्लिंगं भगवतो ब्रह्मणः परमेष्ठिनः ॥ शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् । येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ॥ ससर्वमंत्रोपनिषद्वेदबीजं सनातनम्" इतिसूतवाक्ये प्रणवसूक्ष्मरूपस्य नादस्य ब्रह्मवाचकत्वं वाग्व्यंकजत्वं सर्वमंत्रोपनिषद्वेदबीजत्वं चोक्तम् ॥ बीजशक्तिरेव च कार्ये बीजं च ब्रह्मवाचकमित्यतोपि वर्णादीनां ब्रह्मवाचकत्वम् ॥ तदेतदुक्त इति ॥ ॥ वस्तुस्थितिरिति ॥ नन्वेवं वस्तुस्थितौ भाष्यप्रत्याहाराह्निकस्थो वर्णानां स्वभावतः सार्थकानर्थकत्वविभागो विरुध्यते तथा पदानामपि सर्वार्थकत्वे व्यवहारस्यापि न सिद्धिरिति तदर्थमुपायमाहुः ॥

॥ तथापीत्यादि ॥ "सर्वाणि रूपाणि विचिंत्य धीरः नामानि कृत्वाभिवदन्य-दास्ते" इत्यादिश्रुतेः" वेदेन नामरूपाणि विषमानि समेष्वपि । धातुषूद्भव कल्पंते एतेषां स्वार्थसिद्धये" इति वाक्यात् ॥ यदश्वयत्तदश्वस्याश्वत्वम् । एतद्वा अपां नामध्येयगुह्यं यदाधावा इत्यादिषु तथा नियमनदर्शनाच्च ज्ञायते शक्तिसंकोचः कृतइति तस्य स्वरूपमाहुः ॥ ॥ आदेशेत्यादि ॥ आ सर्वतः । तथाच नैयायिकप्रतिपन्नो यः संकेतः । अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकेश्वरेच्छारूपः स शक्तिसंकोचरूप एव न तु शक्तिः । शक्तिस्तु पदपदार्थयोर्नित्यसंबंधरूपा पदार्थांतरमेव नत्विच्छायुक्तं चैतत् । अन्यथा शक्तेर्वृत्तिविशेषत्वं न स्यात् । शाब्दबोधानुकूलस्य पदपदार्थसंबंधस्य वृत्तित्वेनेच्छायाश्च तद्व्याप्यत्वाभावेन तद्विशेषत्वस्याशक्यवचनत्वात् । किंच । परेच्छायाः परेण ज्ञातुमशक्यत्वेनेश्वरेच्छायाः सुतरां तथात्वात्तज्ज्ञापको व्यवहारप्रवर्त्तकोऽभिलापः सर्वथांगीकार्यः । तथासति स एव संकेतोऽस्तु नेच्छा स च पूर्वोक्तश्रुत्यादिरूप एवेति संकोचिकैव सा श्रुत्यंतरानुरोधात् । अतोपि शक्तिरतिरिक्ता फलति । एवं च संकोचेन तस्याः शाब्दबोधानुकूल्ये व्याप्यतायां वृत्तिविशेषरूपत्वं सुघटमिति पदार्थांतरत्वपक्ष एव मीमांसकाभिमतः साधीयान् । एतदभिसंधायाहुः ॥ अतो विशेषाख्यापकानि जातानीति । इयं च ज्ञातोपयुज्यते । तद्ग्रहे पदैः पदार्थबोधादर्शनात् । तद्ग्रहणं च शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदंति सांनिध्यतः सिद्धपदस्य वृद्धा इत्यभियुक्तोक्तैर्व्याकरणादिभिर्ज्ञेयम् । प्राथमिकशक्तिग्रहप्रकारादिकं प्रस्थानरत्नाकरे मयोपपादितमिति नेहोच्यते । नन्वेवं शक्तिसंकोचेपि न व्यवहारसिद्धिः । वर्णानां वाचकत्वांगीकारेण पदावयवभूतानामपि वाचकत्वात् वर्णपदाभ्यां युगपत्स्वस्वार्थबोधने शाब्दबोधदौर्घट्यम् । क्रमेण बोधने च पटादिपदोच्चारणे प्रथमोपस्थितेन पकारेण स्वार्थबोधे द्वितीयेन च स्वार्थबोधे निराकांक्षतायां पटबोधादन्यार्थमुच्चारितेनान्यार्थबोधनेनातिप्रसंगाच्चेत्याशंकायां संकोचांतरमाहुः ॥ ॥ तत्रेत्यादि ॥ तत्रेति पदेषु ॥ ॥ वर्णानां तुल्यत्वेपीति ॥ यदावयवभूतानां केवलवर्णसदृशत्वेपि । नन्वेवं वर्णानां क्वचिदर्थवत्वं क्वचिन्नेत्यर्द्धजरतीयाद्वर्णानामनर्थकत्वमेव वरमित्याकांक्षायां वर्णार्थानंगीकारे बाधकं तर्कमाहुः ॥ ॥ अन्यथेत्यादि ॥ तथा च यथोत्पलस्याल्पोधिको वा संकोच एव तथाल्पवाचकत्वमिवावाचकत्वमपि संकोच एवेति संकोचे च व्यवहारस्यैव नियामकत्वमिति तथेति भावः ॥ १५६ ॥ १५७ ॥

ब्रजभाषाटीका ।

वर्ण पद ये दोनों नित्य हैं । लौकिक वाक्य अनित्य है ।

क्योंकि आधुनिक बुद्धिपरिकल्पित हैं लोकमें वाक्यके वर्ण तो नित्यहीहैं । वैदिक वाक्य तो नित्यहै । वेदमें तो वर्ण पद वाक्य तीनों स्वयं हरिहै कोईके मतमें पदही अर्थवाले माने हैं वर्ण वाक्य अर्थवाले नहिं मानेहैं कोईके मतमें वाक्यनकूँभी अर्थवाले माने हैं हमारे मतमें तो वर्णभी अर्थवाले हैं ( वेदाक्षराणि यावन्ति पठितानि द्विजोत्तमैः । तावन्ति हरिनामानि कीर्तिनानि न संशयः ) इत्यादिवाक्यनमें वेदको एक एक अक्षर भगवानको नामहै यह स्पष्ट लिखोहै सर्व वर्ण भगवानके वाचकहैं ॥ १५६ ॥ और भगवान् सर्वरूपहै तासों सब वर्ण तथा पद सर्ववस्तुके वाचकहैं परन्तु लोकमें जल अन्न वस्त्र आदि पद सबके ही वाचक मानेजाँय तो बुभुक्षित पुरुषके मुखसों ( अन्नं देहि ) ऐसो उच्चारण सुनके वस्त्र दियोजाय तथा शीतातुर पुरुषकों ( वस्त्रं देहि ) ऐसो उच्चारण सुनके जल दियो जाय तो लौकिक व्यवहार बिगडजाय तासों शब्दनकी सामर्थ्यकों संकोच करके एक एक दोय दोय पदार्थके वाचकही एक एक शब्द मानेहैं अर्थात् देशकालके भेदकरके उच्चारण कियोभयो यह शब्द याही अर्थको बोध करावो और अर्थको बोध मत करावो यारीतिकों शक्तिसंकोच करेहै तासों जितनें शब्दहैं सब संकुचित शक्ति होयके पदार्थ विशेषके वाचक होगये जैसे घट यह शब्द सबही पदार्थको वाचकहै परन्तु व्यवहार सिद्धिके लिये घडाकोई बाचक मानेहैं ॥ कूप, सूप, यूप, इन शब्द नेक अवयव जे वर्णहैं वे केवल वर्णनके समानहैं तथापि एक एक वर्ण एकएक अर्थको प्रतिपादन नहिं करेहै वैसे होय तो व्यवहार सिद्धि नहिं होय व्यवहार चलवेके लिये पदमध्यपाति वर्णकों सर्वथा शक्तिसंकोच मानके उनकूं अवाचक मानके पदकूँ वाचक
. वर्णनकूँ निरर्थक तो नहिं माने हैं अन्यथा

अच् प्रत्ययादिकनको भूआदि धातुनकोभी अर्थ नहीं होयगो व्यवहारही या विषयमें नियामक है ॥ १५७ ॥

तत्र व्याकरणादीनां व्यवस्थापकता मता।
देशे देशे तथोच्चारो भाषाभेदैरनेकधा॥१५८॥
अनंतमूर्त्तयो वर्णाः पदे तेनार्थवाचकाः।
केवलाःकोशतो ज्ञेया वाचकाःपदतोथवा१५९

तत्त्वदीपप्रकाशः ।

तत्रापि व्यवस्थामाह ॥ तत्र व्याकरणादीनामिति ॥ नकेवलं कोशादिरेव नियामकः किंतूच्चारो भाषाभेदश्च । अतः सर्वमुपपद्यते ॥ १५८ ॥ इदानीमुत्तरोत्तरबलिष्ठत्वं वक्तुं पदे वर्णानामवाचकत्वं वाक्ये पदानामित्याह ॥ अनन्तमूर्तयो वर्णा इति ॥ वर्णानां गौण-मुख्यभेदेन नानामूर्तित्वम् । तेन पदावयवभूताः गौणा इति नार्थवा-चकाः केवलाश्च वर्णाः । एकाक्षरनिघंट्वादिभिर्व्यवहारेऽप्यर्थवाचकाः । तेषां पदत्वं वा प्रत्ययरहितानामर्थाज्ञापकत्वात् ॥ १५९ ॥

आवरणभंगः ।

ननु व्यवहारार्थसंकोचश्चेत्तदर्थं पदलक्षणमेवान्यद्वाच्यम् ॥ वर्णसमुदायः पद-मिति ॥ ॥ तथा सत्यर्द्धजरतीयं विनैव प्रत्ययादेरर्थवत्ता सेत्स्यते व्यवहारेपि सेत्स्यतीति चेत्तत्राहुः ॥ ॥ तत्रापीत्यादि ॥ ॥ तत्रेति संकोचे । तथाच शक्तिग्रहं व्याकरणोपमानेत्याद्यभियुक्तावपि व्याकरणादीनामेव शक्तिग्राहकत्वमुक्तमिति तान्येव व्यवस्थापकानि नतु यस्य कस्यापि कल्पनम् ॥ यद्यपीदं नैयायकलक्षणं विवृत्तौ प्रविशति तथापि व्याकरणस्याङ्गत्वात्तदपेक्षया लौकिकस्यास्य निर्बल-त्वाल्लोकस्य व्याकरणाद्युपजीवकत्वाच्च तद्विरोधेऽनादरणीयत्वम् ॥ अन्यथाक-ल्पनैकशरणत्वे शास्त्रविप्लवापत्तिरिति तान्येव व्यवस्थापकानीति न लक्षणांतरा-दिभिर्निर्वाह इत्यर्थः ॥ संस्कृतव्यवस्थापकान्युक्त्वा भाषाव्यवस्थास्थापकानि वक्तुमाहुः ॥ ॥ नकेवलमित्यादि ॥ ॥ तेन भाषायामपीश्वरकृतादेव संकोचात्तेपि शक्त्यैव बोधका नतु शक्तिभ्रमेण तत्र बोध इति ज्ञापितम् ॥ वक्ष्यति चाग्रे "अस्म-दादिमुखेनापि क्रीडार्थं सर्वतो हरिः। शब्दभेदं वितनुते रूपेष्विव विनिश्चयः" इति॥

मूलयोजना तु देशे देशे भाषाभेदैरनेकधोच्चारस्तथा संस्कृते व्याकरणादिवत्तत्तद्देशिकव्यवहारो व्यवस्थापक इत्यर्थः ॥ एवं सति शक्तिसंकोचलक्षणे अयं भाषाशब्दोऽस्मिन्देशे इत्यधिकं निवेश्य भाषायामपि सल्लक्षणीय इति तात्पर्यम् ॥ तदेतदभिसंधायाहुः ॥ अतः सर्वमुपपद्यत इति ॥ ॥ अत एव शक्तपदादिव तेभ्योपि तत्तद्देश्यानां तेषु गृहीतशक्तिकानामन्यद्देश्यानां च पदार्थोपस्थितिदर्शनं युज्यते । नच तत्र शक्तिभ्रमात्पदार्थोपस्थित्यादिकमिति युक्तम् ॥ भ्रमत्वविनिगमकस्याभावात् ॥ पर्यायशब्देष्विव तेष्वपि पूर्वोक्तरीत्या संकोचेन शक्तिसिद्धौ तद्ग्रहस्य प्रमात्वसंभवे भ्रमत्वकल्पनाया अन्याय्यत्वात् ॥ ॥ अग्रे बाधाभावाच्च ॥ ॥ न च तत्र लक्षणा । कुत्रापि शक्त्यभावे शक्यसंबंधरूपाया लक्षणाया अप्यसंभवेनाशक्यवचनत्वात् ॥ १५८ ॥ एवं व्यवहारसिद्धिमुपपाद्य तदर्थमन्यदप्याहुः ॥ ॥ इदानीमित्यादि । इत्याहेति ॥ ॥ इदं प्रमेयं सार्द्धेनाहेत्यर्थः ॥ ननु केवलानां वर्णानां वस्तुगत्या वाचकत्वमस्तु परं व्यवहारानुपयोगात्तन्नादरणीयमित्यत आहुः ॥ केवलाश्चेत्यादि ॥ ॥ तथा च न वर्णार्थस्यानादरणीयतेत्यर्थः ॥ ननु ते विभक्तिभाज एव लोके प्रयुज्यंत इति न तेषां वर्णत्वेन रूपेणार्थवत्त्वमपि तु पदत्वेनेत्यतस्तदुपगम्याहुः ॥ तेषामित्यादि ॥ ॥ तेषामिति ॥ ॥ निघंट्वाद्युक्तानाम् ॥ एतेन वेदे वर्णानामक्षरत्वेन रूपेण भगवद्वाचकत्वम् । अन्यत्र तु पदत्वेनेत्यपि बोधितम् ॥ नच सिद्धांतभंगः ॥ तेषामिति कथनेन तद्भिन्नानामेकाक्षरप्रत्ययादिरूपाणामर्थवत्तानपायसूचनात् ॥ केवलानां पदावयवाभावाच्च ॥ वाक्यार्थवत्तां साधयितुं वाक्ये पदानां गौणानामेव सत्वमिति बोधयंतोऽवयवभावे पदेप्यवाचकत्वमतिदिशंति ॥ १५९ ॥

### व्रजभाषाटीका ।

जब शक्तिसंकोच मान्यो तब घटपटादिशब्दनकरकें कोन पदार्थनकी उपस्थिति होयगी तहाँ व्यवस्था कोश व्याकरणादिनकरकें करलेनी भाषाके शब्दनके उच्चारणमें न्यारे न्यारे देशके न्यारे न्यारे भाषानके भेदनकरके व्यवस्था करलेनी यारीति सर्व व्यवहार बनसके हैं ॥ १५८ ॥ वर्णसों पद बलिष्ठहै पदसों वाक्य बलिष्ठहै पदमें वर्ण वाचक नाहिं हैं वाक्यमें पद वाचक नाहिं हैं वर्ण अनन्तमूर्तिवाले हैं पदनमें जे वर्ण हैं वे गौणहैं केवल जे

वर्ण हैं वे एकाक्षरकोशके अनुसार तथा निघण्टुद्वारा व्यवहारमेंभी अर्थके वाचक हैं वे मुख्य हैं ॥ १५९ ॥

**पदं न वाचकं वाक्ये सादृश्यात्स्मारकं परम्। विशिष्टं वाक्यमेवात्र वाक्यार्थस्य च वाचकम् ॥ १६० ॥ पदान्तरप्रवेशेन विशिष्टे वाच्यवाचके। पटवद्वाक्यभेदश्च वाक्यार्थश्चापि भिद्यते ॥ १६१ ॥**

तत्त्वदीपप्रकाशः ।

तथा वाक्येपि पदं न वाचकं तर्हि संकेताग्रहेपि वाक्यार्थज्ञानं स्यात् । गौरवं च स्यादित्याशंक्याह ॥ **सादृश्यात्स्मारकं परमिति** ॥ वाक्यावयवभूतस्य स्वतंत्रपदतुल्यत्वात्पदार्थस्मारकत्वम् । अन्यथा स्वार्थं प्रतिपाद्य कृतार्थत्वे वाक्यार्थो नतैर्ज्जन्येत । आकांक्षादेर्वाक्यशेषत्वात्प्रकृतिप्रत्यययोरपि नैकार्थवाचकत्वं स्यात् । पदार्थकरणपक्षेपि पूर्वपदार्थानां निवृत्तत्वात्पुनरुपस्थानं केन वा स्यात् । अविद्यमानानां वा कथं बोधकत्वम् । वाक्यार्थसमाख्याविरोधश्च । अतो वाक्यमेव वाचकमित्याह ॥ **विशिष्टमिति** ॥ स्वावयवैः स्वावयवार्थमिति चकारार्थः ॥ १६० ॥ वाक्यानामानंत्यात्संकेतग्रहो दुर्लभ इत्याशंक्याह ॥ **पदांतरप्रवशेनेति** ॥ घटमानयेति वाक्याद्घटं शीघ्रमानयेति भिन्नम् । एवमानंत्येपि न दोषः ॥ **तत्र दृष्टान्तः** ॥ **पटवदिति** ॥ द्वितन्तुकपटात् त्रितन्तुकोऽन्यः ॥ तथोत्तरत्रापि आरंभकवादस्यानंगीकारात् । तथा अपूर्वत्वाद्वाक्यार्थस्य पूर्वसंसर्गादुत्तरस्य भिन्नत्वम् ॥ १६१ ॥

आवरणभंगः ।

तथेत्यादि ॥ ॥ तर्हीत्यादि ॥ ॥ वाक्यस्यावाचकपदघटितत्वे वाक्यावयवभूतानामवाचकत्वे भिन्नत्वे च कोशादौ तदनिर्देशेन संकेताग्रहेपि वाक्या-

र्थज्ञानं स्यात् । अर्द्धजरतीयभेदाभ्यां कृतं गौरवं च स्यात् । नच यथाप्रभाकरमते द्वेधापदशक्तिरनुभाविका स्मारिका च ॥ कार्यान्विते जातौ च स्वीकृता ॥ तथानुभाविकां केवलेषु स्मारिकां वाक्यावयवभूतेषूपगम्यैतेषु द्वितीयस्याः सत्वात्तेन द्वारेण वाक्यार्थज्ञानं निराबाधमिति वाच्यम्॥ तथापि शक्त्यंतराकल्पनाकृतं गौरवं तु स्यादित्याशंक्याहेत्यर्थः ॥ सादृश्यादित्यादि ॥ ॥ तथाच केवलेषु गृहीतस्य संकेतस्य सादृश्यमहिम्नैवेति स्मारणात्तद्वारा वाक्यार्थज्ञानसंभवः शक्त्यंतराकल्पनाच्च न गौरवमित्यर्थः ॥ नचैवं सति गृहीतविस्मृतशक्तेस्ततः शाब्दबोधो न स्यादिति वाच्यम् । तुल्यत्वात् । शब्दानित्यतावादिमतेपि वाक्यार्थबोधावसरे शक्तिग्रहसामयिकपदस्याभावाच्छक्तिस्मारकसंस्कारोद्बोधहेतुत्वेन सादृश्यस्यैव वक्तव्यत्वादनेन तदभावेहेत्वंतरस्य तेनापि वाच्यत्वात् । नित्यतावादेपि स एवायमिति तेन स्वार्थबोधाजनने तत्र हेत्वंतरस्य तेनापि वाच्यत्वात् । ननु वक्ता पदार्थमवगम्य वाक्यार्थमवगमयितुं तानि वाक्ये प्रयुज्यंते । यदि तान्यनर्थकानि स्युः तदा तेषां प्रयोगो नोपपद्येत नच स्मारकत्वमपि ज्ञात्वा सदृशान्येव प्रयुज्यन्त इति शक्यवचनम् । तस्यासिद्धत्वात् ॥ अन्यथेत्यादि ॥ ॥ वाक्यार्थ इति ॥ ॥ संसर्गरूपो वाक्यार्थः ॥ तथा च स्मारकत्वानंगीकारे सकृदुच्चारितानां तेषां सकृत्स्वार्थं गमयित्वा तथात्वे पदांतराकांक्षाया अभावात्तैर्वाक्यार्थः संसर्गरूपो नजन्येतेत्यर्थः ॥ पदेभ्यश्च पदसमूहो भिन्नः ॥ अन्यथा पदैर्वाक्यार्थबोधने पदेषु युगपद्वृत्तिद्वयापत्तिः पदार्थवाक्यार्थयोर्बोधिके वृत्ती इति द्वयम् । दूषणांतरमाहुः ॥ प्रकृतीत्यादि ॥ ॥ प्रकृतेः स्वार्थं प्रतिपाद्य कृतार्थत्वे प्रत्ययाकांक्षाया अभावाद्भिन्नार्थतैव स्यान्नत्वैकार्थ्यम् । तथाच प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येनेति नियमश्च व्याहन्येतेत्यर्थः॥ ननु तर्हि भाट्टाभिमतः पदार्थकरणपक्षोऽस्तु तथासति पदानां कृतार्थत्वेपि पदोपस्थापितपदार्थैरेव वाक्यार्थो भविष्यतीति न कोपि दोष इत्यतस्तत्रापि दूषणमाहुः ॥ पदार्थेत्यादि ॥ ॥ नन्वेवं सति शक्तिमत्पदज्ञानस्यैव शाब्दबोधे करणत्वमस्तु इत्याशंकायां दूषणांतरमाहुः ॥ वाक्यार्थेत्यादि ॥ ॥ समाख्याया यौगिकशब्दत्वाद्वाक्यस्यार्थाभावे योगस्याप्रवृत्तेस्तथेति नायमपि पक्षः साधुरित्यर्थः ॥ चकारेण वाक्यार्थस्याशाब्दत्वं स्यादित्यपि समुच्चीयते । तथासति चाक्षुषादिशब्दवत्करणोपाधिनिबंधनः शाब्द इति व्यवहारोपि बाध्येतेतिच । एवं सति वाक्याव- ...ङ्गीकारे दोषबाहुल्यात्स्मारकत्वपक्ष एव साधीयान् । एवं च यथारू- ...स्यावर्णस्य प्रक्रियादशायां विवृतत्वं प्रयोगे संवृतत्वमनुशास- ...ने शाब्दिकैस्तथावक्ता वाक्यघटनार्थमर्थवत्तां स्मरणेऽप्युच्चार-

णदशायां तत्सदृशानि स्मारकान्येवाभ्युपयंतीति लाघवाद्दोषाभावाच्चाङ्गीकार्यमिति निष्कर्षः ॥ तदेतद्धृदि कृत्वाहुः ॥ अत इत्यादिविशिष्टमिति ॥ ॥ अवांतरान्वयविशिष्टम् । अन्वयश्च विवक्षितार्थविबोधकः पदादिसंबंधः स्वावयवार्थमिति ॥ अवांतरान्वयम् ॥ एवं च स्वावयवैरवांतरवाक्यैः स्वावयवार्थमवांतरान्वयवद्वाक्यमेव तत्तत्कारकनिष्ठक्रियान्वयरूपस्य मुख्यवाक्यार्थस्य वाचकमित्यर्थः फलति ॥ वाक्यप्रयोगं विना केवलपदेनान्वयाबोधादन्वयस्य पदलभ्यत्वाभावात् । विशिष्टे शक्तिग्रहः । प्रथमं भवतीति पक्षस्तु प्राथमिकशक्तिग्रहस्य नियमतो व्यवहारजन्यत्वनिराकरणादेव निराकृतः ॥ नाप्यन्वयस्यार्थसंसर्गमर्यादालभ्यत्वं सन्निहितेऽश्वे गामानयेति वाक्ये तदतिहायाश्वबोधापत्तेः ॥ नापि पदसमभिव्याहारलभ्यत्वम् ॥ तस्य संनिधिरूपत्वेन दूरान्वये श्लोकादौ तत्सत्वेप्यन्वयाबोधप्रसंगात् ॥ नापि स्मृत्या तत्रापि पदसमभिव्याहारसंभवान्न दोष इति वाच्यम् ॥ तथासति बोधविलंबादिप्रसंगात् ॥ अन्वयबोधस्याशाब्दत्वादिप्रसंगाच्च ॥ नचेष्टापत्तिः ॥ पूर्वोक्तदोषाणामापत्तेः ॥ तस्मादाकांक्षादिमत्पदकदंबरूपवाक्यस्य प्रयोजनायापरिष्कृतस्यैवान्वयोभिधेय इति वाक्यस्यैवार्थ इति सिद्धम् ॥ एवं च शाब्दानुभवत्वावच्छिन्नं प्रतिज्ञायमानवाक्यत्वेनैव कारणत्वमनुगतं बोध्यम् ॥ वृत्तिमत्पदस्मारितपदार्थोपस्थितिः साकांक्षावान्तरवाक्योक्तान्वयोपरीस्थितिश्च यथायथमवांतरवाक्यमहावाक्ययोर्व्यापारभूते ज्ञेये इति दिक् ॥ अत्रैवं क्रमो निष्पद्यते । पूर्वं पदशक्तिं गृहीतवतो वाक्यश्रवणोत्तरं तदवयवभूतैः पदैः शक्तिग्रहजन्यसंस्कारोद्बोधे पदार्थस्मरणं ततोऽवांतरवाक्यैस्तं व्यापृत्यावांतरवाक्यार्थबोधस्ततस्तमपि व्यापृत्य महावाक्ये वाक्यार्थबोधो जन्यत इति ॥ १६० ॥ वाक्यानामित्यादि ॥ शाब्दज्ञानत्वावच्छिन्नप्रतिशक्तिग्रहस्य सहकारितानियमाद्वाक्यार्थज्ञानं प्रत्यपि वाक्यशक्तिग्रहस्य सहकारिता वाच्या तत्र संकेतग्रहस्तु दुर्लभः । वाक्यानामानन्त्ये तत्तच्छक्तिग्राहकानुशासनकोशवाक्यशेषाणामभावात् ॥ अर्थस्य काल्पनिकत्वेन पूर्वमदर्शनात् । द्रष्टुराप्तस्याभावेन तद्वाक्यस्याप्यशक्यवचनत्वात् ॥ अतएव विवृतेरप्यभावात् ॥ नाप्युपमानात् ॥ यथा गोसदृशपिंडदर्शनोत्तरमुद्बुद्धसंस्कारस्यातिदेशवाक्यार्थस्मरणेनायं गवयपदवाच्य इति संज्ञिपरिच्छित्तिस्तथात्र प्रकारमाहेत्यर्थः ॥ पदांतरेत्यादि ॥ पदांतरप्रवेशेन कृत्वा वाच्यवाचके वाक्यार्थसहिते वाक्ये विशिष्टे यथायथमर्थांतरपदांतराभ्यां सप्रकारके सति पटवदित्यादि ॥ घटमानयेत्यादि ॥ अयमर्थः ॥ यद्वाक्यानामानंत्यं भवतोक्तं तदर्थांतरप्रवेशेन पदांतरप्रवेशेन वा तत्राद्यन्तु न शक्यवचनं वाक्यावयवभूतैः पदैः पदार्थेषु स्मारितेषु तेषां चारिताथ्यात्पिदात् । स्मारितस्यार्थस्य तत्र प्रवेशे गौ-

रानीयतामित्यादावप्याक्षिसांनिध्यादिवशेनाश्वादिप्रवेशापत्तेः । तत्तद्वारमित्यादौ पदस्मारितताया एव क्रियायाः प्रवेश इति वाच्यम् । तत्रापि समयादिविशेषवशेन संवरणाद्यवगमदशायामपि शब्दस्मारणपूर्वकमेवार्थस्मारणस्यानुभवसाक्षिकत्वा-त् । अतः क्रियादिवाचकपदांतरप्रवेशेनैवानंत्यं वक्तव्यम् ॥ एवमानंत्येपि न सं-केतग्रहदौर्लभ्यमित्यर्थः॥ कुत इत्याकांक्षायां व्यवहारोपमानाभ्यामिति वक्तुमाहुः॥ तत्र दृष्टांत इत्यादि ॥ ॥ तद्विवृण्वंति ॥ द्वितंतुकेत्यादि ॥ ॥ श्रुतौ सत्कार्य-वाद इति तदनुयायिभिरारभ्यारंभकवादानंगीकाराद्वितंतुकपटात्रितंतुकः पटो-ऽन्यः । कारणीभूतावयवसमुदायभेदाद्भिन्न एव भवति । तथा त्रितंतुकाच्चतुस्तंतु-कादिरपि । तथा तद्वद्वाक्यार्थस्यान्वयरूपस्य पदार्थांतरसंसर्गेण पूर्ववाक्यार्था-पेक्षायान्नूतनत्वादुत्तरस्य संसर्गस्य पूर्वसंसर्गात्सरूपतो भिन्नत्वं नतु विजाती-यत्वेन भिन्नत्वम् ॥ तथासति यथैकत्र पटे गृहीतशक्तिकं पटपदमवयवभेद-भिन्नान् पटांतरानपि तथैव शक्त्या पटत्वेन रूपेण बोधयति । तथैकं गोपदयुक्तं वाक्यमेकत्र गवान्विते वाक्यार्थे वृद्धव्यवहारेण तद्वाक्येन वा गृहीतशक्तिकं जातं चेत् तदा तद्दृष्टांतेन पदांतरप्रवेशकृतवाक्यांतरमपि नानासंसर्गकान् वाक्यार्थान् बोधयिष्यतीत्युपलक्षणविधया क्रियापदयुक्तं यद्वाक्यं तत्तदर्थान्वितं वाक्यार्थं बोधयतीति व्याप्त्या ततोऽभ्यासदार्ढ्येन बोधयिष्यतीति नसंकेतग्रहदौर्लभ्यमि-त्यर्थः ॥ एवं च पूर्वं शब्दब्रह्मणो घोषस्येव वर्णपदवाक्यसंज्ञावत्त्वं नतु परस्परं भेद इति यत्प्रतिज्ञातमासीत्तदपि दृढीकृतं ज्ञेयम् ॥ १६१ ॥

ब्रजभाषाटीका ।

वाक्यमें पदभी अर्थवाचक नहिं हैं तहाँ वाक्यके पदनकूँ अ-र्थवाचक नहिं मानोहो तो जो पुरुष पदनके अर्थकूँ नहिंजाने हैं वाकूँ भी वाक्यके अर्थको ज्ञान होनो चाहिये ऐसी शंका नहिं करनी वाक्यके अवयवरूप होयरहे जे पदहैं वे उनके तुल्य स्वतन्त्र-पदनके अर्थनकूँ स्मरणकरायवेवारे हैं उनके द्वारा वाक्यार्थको ज्ञान होये है तासों वाक्यसदृश स्वतन्त्र पदनके अर्थ जानवेवारेकूँ ही वाक्यार्थ को ज्ञान होय है यदि वाक्यके अवयवरूप पदनकों अपने अपने अर्थनके वाचक मानलें तो वे अपने अपने अर्थकूँ रके कृतार्थ होजायँ फिर वे पद वाक्यार्थकूँ नहिं प्रकटकरेंगे वयसहित वाक्य है सो वाक्यार्थको बोध करवेवारो है

विवक्षित अर्थके बोधक पदनके सम्बन्धकूँ अन्वय कहेंहै ॥१६०॥ तहाँ वाक्य अनन्तहैं उनमें संकेतको ज्ञान कैसें होयगो यह शंका नहिं करनी क्योंकि जैसें दो तन्तुके बुनेभये वस्त्रकूँ पहिचानवेवारो तेहरे तन्तुके बुनेभये वस्त्रकूँ भी पहिचानलेहै ऐसेही ( घटमानय--घडाकूँलाव ) या वाक्यकूँ जानवेवारो शीघ्र पदके प्रवेश करके ( शीघ्रं घटमानय--जलदीघडाकूँ लाव ) पहलीके वाक्यसों न्यारो जो ये वाक्यहै याके अर्थकूँ भी जानजावेंहै या प्रकार क्रियापदनके प्रवेशकरकें जुदे जुदे भये अनेक वाक्यनके अर्थकूँ भी अभ्यासके दृढहोयवेसों जानजावेंहै ॥ १६१ ॥

**अवांतराणां वाक्यानां स्मारकत्वं तथापरे । वाक्यमेकं हरिश्चैको वेदवाक्यार्थरूपधृक् १६२ अवान्तरेषु च तथा पदे वर्णे तथैव च । त्रयोपि वैदिका भिन्ना नाना धर्म्मयुतास्तथा ॥१६३॥**

तत्त्वदीपप्रकाशः ।

तथा महावाक्ये अवान्तरवाक्यानामवाचकत्वम् । किन्तु पूर्ववत्स्मारकत्वमेव । एवमवान्तरभेदेन सर्वं निरूप्य सम्पूर्णवेद एकं वाक्यं तदर्थोप्येक एवेत्याह॥**वाक्यमेकमिति** ॥ तात्पर्यवृत्त्या तथात्वं वारयति । वाक्यार्थरूपधृगिति ॥ १६२ ॥ तथावान्तरवाक्येषु अवान्तरवाक्यार्थरूपधृक् । एवमुत्तरत्रापि । इदानीं लौकिकवैदिकयोर्वर्णादीनां वैजात्यमाह । त्रयोपि वैदिका भिन्ना इति । उदात्तादिधर्मयोगात् । लोकव्यवहारवर्णादिभ्यो वैदिका भिन्नाः ॥ १६३ ॥

आवरणभंगः ।

ननु महावाक्येषु केषांचित्पदानां विस्मरणेपि तदर्थावगतिर्दृश्यतेऽतः पदार्थकरणपक्ष एव साधुर्नतु वाक्यकरणपक्षः । महावाक्यार्थबोधानापत्तेरिति चेत्तत्राहुः ॥ तथा महावाक्येत्यादि ॥ ॥ तथा च तादृशस्थले महावाक्यार्थस्य तावता

वाक्यार्थके धारणकरवेवारे हैं ऐसें ही अवान्तरवाक्यनमें अवान्तरवाक्यनके अर्थ धारणकरवेवारे भी भगवान्हैं पदमें पदार्थरूप, वर्णमें वर्णार्थरूप भी भगवान्ही हैं ॥ १६२ ॥ लोकके जे वर्ण पद वाक्य हैं उनसों वेदके वर्ण पद वाक्य न्यारेहैं क्यूँकि वैदिक वर्णनमें उदात्त अनुदात्त स्वरित प्रचय न्युब्ज इत्यादि अनेक भेद हैं तासों व्यवहारके वर्णनसों वेदके वर्ण जुदे हैं ॥ १६३ ॥

साद्दश्येऽपि न वेदत्वं ताद्दग्वाक्ये ततोऽन्यतः॥ अधिकारिविभेदेन धर्माधर्मौ तथापरे॥१६४॥ प्रत्येकं पूर्णता वाक्ये शाखाभेदेषु सर्वतः॥ दर्शादिषु तदंगेषु मंत्रमात्रे तथैव च॥ १६५ ॥ हरिस्तत्तत्स्वरूपेण तस्मात्सर्वत्र वाचकः॥ पुराणे च ततोन्यत्र वाक्यार्थो बुद्धिकल्पितः॥ ॥१६६॥ पदानामानुपूर्वी तु तत्र कल्प्या ह्यनेकधा॥ सर्वप्रतीतिनाशे तु तन्नाश उपचर्यते ॥ ॥ १६७ ॥ तथावाक्यत्वनिष्पत्ते नदूषणमिहाण्वपि । अद्यापि तानि जायन्ते घटवज्ज्ञानतः स्थितिः ॥ १६८ ॥ विप्रलिप्सादिमूलत्वादप्रामाण्यं च लौकिके॥अप्रामाण्येपि प्रामाण्यं कर्तृविश्वासतःक्वचित् ॥ १६९ ॥ अतो वेदाद्यसंवादी नार्थो ग्राह्यः कथंचन ॥ वेदे सर्वत्र नाधिक्यं वाक्येन न्यूनतापि वा ॥ १७० ॥ अतो न वाक्यभेदः स्यात् लोके तन्नैव दूषणम् ।

## भूतसूक्ष्मो ध्वनिर्वर्णो नामसृष्टौ निरूप्यते १७१

तत्त्वदीपप्रकाशः ।

क्वचित्काव्यादौ वैदिकतुल्यता भासते तथापि नवेदत्वमित्याह ॥ **सादृश्येपि न वेदत्वमिति** ॥ लोकवेदाधिकरणं तु कल्पितमेव जैमिनिनानुक्तत्वात् । लौकिकानां वैदिकानां चेति भाष्यात् । "मयड्वैतयोर्भाषायां, द्व्यचश्छन्दसि, सर्वत्रविभाषागोः"इत्यादिसूत्रकरणाच्च छंदसि च लोकवेदयोः पृथग्निरूपणात् । अतः सादृश्येपि न वेदत्वं शूद्रादीनां वेदबुद्ध्या तथापाठ एव दोषः ॥ १६४ ॥ एवं भेदं निरूप्य वेदैश्च सर्वैरहमेव वेद्य इति यथाश्रुतसिद्ध्यर्थं सर्वत्र वेदे भगवानेवार्थ इत्याह ॥ **प्रत्येकं पूर्णतावाक्य इति** ॥ महावाक्यार्थरूप एव हरिर्नावान्तरवाक्यार्थरूप इति निराकरणार्थं पूर्णता निरूप्यते शाखाभेदेष्वपि पूर्णता । एवमुत्तरत्रापि तदंगेषु प्रयाजादिषु इषेत्वेति मंत्रमात्रे सिद्धार्थेऽपि ॥१६५॥ तत्रहेतुः ॥ **तत्तत्स्वरूपेणेति** ॥ पुराणानामपि वेदतुल्यत्वमभिप्रेत्याह ॥ **पुराणेचेति** ॥ वेदपुराणव्यतिरिक्तस्थले वाक्यार्थो बुद्धिकल्पितः । न भगवद्रूप इत्यर्थः ॥ १६६ ॥ अतस्तत्र विश्वासेन पुरुषार्थसिद्धिः संसर्गस्यापूर्वत्वात् । पदानुपूर्वीनानात्वादिति हेतुः कालिदासवाक्यानामपि बहुकालं स्थितिसिद्ध्यर्थमाह ॥**सर्व प्रतीतिनाशेष्विति** ॥ रूपसृष्टौ क्रियातः स्थितिः, नामसृष्टौ ज्ञानेनेति ॥ १६७ ॥ तत्र हेतुः ॥ **तथावाक्यत्वनिष्पत्तेरिति** ॥ बुद्ध्यारचनां कृत्वोच्चारयतीति यथान्यायमते तदुच्चारितः शब्दस्तदैव नष्टः सादृश्यभ्रमादेव तदीयव्यवहार इति । तथासति तदीयत्वाभावाल्लोके वेदे च महद्दूषणन्न तथास्मन्मते नित्यत्वात् । उत्पन्नानां च बहुकालं स्थितत्वाच्चेत्याह ॥ **न दूषणमिहाण्वपीति** ॥ तदेव स्पष्टयति ॥ **अद्यापीति** ॥ १६८ ॥ परं प्रामाण्ये विवाद इति वक्तुं तद्धेतूनाह ॥ **विप्रलिप्सादीति** ॥ यत्र